# INDEX TO VOL. II.


| | PAGE |
|---|---|
| *Barbara*, letter on the Sanskrit name ... ... .. ... ... | 250 |
| Hari-vilása .. ... ... .. ... ... ... ... | 79,101 |
| " preface to ... ... .. .. ... ... ... | 78 |
| Híránanda Chaube, Pandit, notice of ... .. ... ... .. | 70 |
| Hindu Philosophy, letter on the Translation of ... ... ... | 116 |
| Indirápati-paríkshá .. ... ... ... ... ... ... | 37,110 |
| Idolatry, letter on ... ... .. ... .. ... . | 88 |
| I'śwara-pratyabhijñá-sútra-vimarśiní ... .. ... ... ... | 236,255 |
| I'śwara-pratyabhijñá-vimarśinyá bhúmiká .. .. .. ... | 235 |
| Jayadeva, A Lyric of ... ... ... ... ... ... ... | 47 |
| Kádambarí-kathá-sára ... ... ... ... ... ... .. | 3,29,52 |
| Leprosy, notice of Dr. Bháu Dájís cure for ... ... ... ... | 271 |
| My Duty towards my Neighbour (from the Church Chatechism and the Mahábhárata &c) ... .. ... ... ... | 160 |
| Marriage ... ... ... ... ... ... ... .. ... | 162 |
| Messenger Cloud ... ... ... ... ... .. .. | 184,204,253,272 |
| Nareśwara-paríkshá ... ... ... ... ... . .. | 72,93,119,141,145,165,169,187,211 |
| " preface to ... ... ... ... .. ... | 71 |
| Nareśwara-paríkshopasaṅhárah ... ... ... ... ... . | 248 |
| Nyáya-swarúpa-nirúpaṇam ... ... ... ... ... ... | 109,155 |
| Notice of Books &c. ... ... .. .. ... ... ... | 116 |
| Prakaraṇa-panchiká ... ... ... ... . . . | 1,23,49,71 |
| Prakaraṇa-panchikopsaṇharaṇam ... ... ... .. | 71 |
| Priests, Relations of the, to the other classes of Indian Society, in the Vedic Age (from Journal R A. S) ... ... .. ... | 18,42 |
| Publications received, notice of ... .. ... .. ... ... | 69,70,274 |
| Prasanna-rághava Nátaka ... ... ... ... ... ... | 127,150,174,197,221,242,262 |
| Prasanna-rághava-nátaka-prastávaná ... ... .. ... ... | 126 |
| Pandits, and their manner of Teaching ... ... ... ... | 207,250 |
| Rámáyaṇa, translations from the ... ... ... ... ... | 12,38,65,87,134,161 |
| Rájá of Benares, and the Dove ... ... ... ... ... ... | 139 |
| Sánkhya system of philosophy, on the ... ... ... ... .. | 11 |
| Sáhitya-Darpaṇa, translation of the ... ... ... ... ... | 14,61,111,156,181,228,248 |
| " letter on the ... ... ... ... ... ... | 118 |
| Siddhánta-tattwa-viveka-paríkshá .. ... .. ... ... | 32,201 |
| True Glory ... ... ... ... ... ... ... .. | 115 |
| Vedánta, The Gist of the, as a Philosophy ... ... ... ... | 47,67 |
| " on the Ontology of the .. .. ... .. ... | 91,136,162 |
| Vedánta-paribháshá letter on the translation of the ... ... ... | 140 |

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 13. Benares June 1st, 1867. Vol. II.


## ॥ निर्मलाञ्जनं नाम ॥

॥ प्रकरणपञ्चिकायां सप्तमं प्रकरणम् ॥

अपौरुषेये संबन्धे सिद्धे शब्दार्थयोर्द्वयोः ।
प्रामाण्यं वेदवाक्यानामिति स प्रतिपाद्यते ॥ १ ॥

यदि पौरुषेय एव शब्दानामर्थैः सह संबन्धो भवेत् तदा प्रमाणान्तरगोचरेष्वेवार्थेषु पुरुषाणां संकेतकरणशक्तेरपूर्वात्मनि च वेदार्थे प्रमाणानामवकाशाभावात् तत्र संकेताभावादसंकेतिते च वाचकत्वाभ्युपगमे दुर्लभमेव वेदवाक्यानां प्रामाण्यमापद्यत इत्यर्थवानेवायमपौरुषेयशब्दार्थसंबन्धप्रतिपादनयत्नः ।

तत्र शब्दार्थसंबन्धं पौरुषेयं प्रचक्षते ।
जगदीश्वरनिर्माणं वदन्तो वेदवादिनः ॥

अनादौ हि वृद्धव्यवहारपरम्परायां सत्यां वृद्धव्यवहारप्रसिद्धो वाच्यवाचकभावः शब्दार्थयोरपौरुषेयः प्रसिध्येत् । तथाहि । वृद्धानां स्वार्थेन व्यवहारप्रमाणमुपशृण्वन्तो बालाः शब्दश्रवणसमनन्तरभाविना चेष्टाविशेषेण विशिष्टार्थविषयां मनीषां कल्पयन्तो वाच्यवाचकतां शब्दस्याध्यवस्यन्ति । तेऽपि वृद्धा यदा बाला आसंस्तदा तेऽप्यनयैव दिशा व्युत्पद्यन्ते स्म । येभ्यश्च वृद्धेभ्यस्ते व्युत्पत्तिमलभन्त तेऽप्यन्येभ्यस्तेऽप्यन्येभ्य इति विनापि संकेतयितारं पुरुषमुपपद्यत एव शब्दार्थयोरनादिवृद्धपरम्पराव्यवहारदर्शनसिद्धः संबन्धः । नो खल्वनादितैव वृद्धव्यवहारपरम्पराया उपपत्तिमती । तथाहि विदांकुर्वन्तु भवन्तः । तरुभुवनादिकं सर्वं सावयवमवसीयते । यच्च नाम सावयवं तदवयवव्यतिषङ्गबलसमासादितात्मलाभं । पश्यामो हि वयं तन्तुव्यतिषङ्गाधीनात्मलाभं पटं । कटं च वीरणसंयोगसंपादितसत्ताकं सावयवम् । एषा च दिक् क्रमादन्त्यावयविभ्योऽवतरन्त्याद्व्यणुकमवतिष्ठते । अर्थश्च नियतसंयोगो नियतोऽन्यतरकर्मज उभयकर्मजो वाभ्युपगमनीयः । कर्म च परमाणुष्वदृष्टवत् क्षेत्रज्ञसंयोगादन्यस्य कारणस्याभावात् । नचादृष्टमलब्धप्रवृत्ति कार्याय पर्याप्तमचेतनत्वाद्वासीवत् । नचानधिष्ठितं प्रवृत्तिमुपलभते । न खल्वनधिष्ठिता वर्धकिना वासी वर्धनाय प्रवर्तते । तदेवमदृष्टमपि क्षेत्रज्ञसमवायि चेतनाधिष्ठितं कार्याय प्रवर्तत इति दर्शनबलेनावश्यमभ्युपेतव्यं । नचेदमिह चिन्तनीयं य एव क्षेत्रज्ञास्त एव तेषामदृष्टानामधिष्ठातारो भवेयुरिति । तेषामज्ञत्वात् । न हि ते स्वसमवायिनी अपि धर्माधर्मलक्षणे अदृष्टे स्वरूपतः कार्यतो वा वेदितुमीशते । य एव यत् स्वरूपतः कार्यतो वा वेद स एव तस्याधिष्ठाता यथा तक्षा वास्याः । तस्मादन्यः क्षेत्रज्ञेभ्यः सकलक्षेत्रसमवायिधर्माधर्मलक्षणादृष्टसाक्षात्करणगोचरचिन्तनीयशक्तिविभवः कोऽपि चेतनातिशयोऽधिष्ठाता दिव्यप्रतिष्ठः स्वतन्त्रोऽभ्युपगमनीयः । नचेदं वाच्यं केन प्रमाणेन तस्य क्षेत्रज्ञेष्वसंभाविनी धर्माधर्मसाक्षात्करणशक्तिरवगम्यत इति । यतो यत एव प्रमाणात् तस्य सद्भावोऽवगम्यते तत एव तस्य ज्ञानशक्तिरपि गम्यते । अन्तर्भावितज्ञानशक्तिरेवासौ सामान्यतोदृष्टानुमानगोचरः । अत एव कथमसावधिष्ठास्यतीत्यपि पर्यनुयोगस्यानवकाशः । किं तस्याधिष्ठाने प्रयोजनमित्यपि पर्यनुयोगश्चेतनातिशयानुमानाङ्गीकरणपराहतः । क्षेत्रज्ञो हि प्रयोजनमुद्दिश्य प्रवर्तते स च क्षेत्रज्ञविलक्षणो ह्यपेक्षितप्रयोजन एव स्वतन्त्रः प्रवर्तते । अत एव स्वातन्त्र्यात् कादाचित्की तस्य प्रवृत्तिरुपपत्तिमती । स्वात-

न्त्यमपि तस्य सत्तानुमानसमधिगम्यमेवेति न पृथग्लक्षणसव्यपेक्षम् । अतः सिद्धं भुवनस्यादिमत्त्वमुत्पत्तिमत्त्वं च । तथा भावितया च विनाशित्वं । कृतका हि भावा ध्रुवभाविविनाशास्तथा दृष्टचरा घटादय इति वृद्धव्यवहारपरम्परया नानादित्वं । तेन, बलात् पुरुषसंकेतवशादेव शब्दस्यार्थं प्रति बोधकत्वमास्थेयम् । अपिच देवदत्तादिशब्देष्वविवादा तावत् पुरुषसंकेतनिबन्धना वाचकता । तद्दर्शनाद्गवादिशब्दानामपि तथाविधत्वमेवमेवानुमातुमुचितम् । अयमेव हि सामान्यतो दृष्टस्य विषयो यदन्यत्र दृष्टमन्यत्रावगम्यत इति । देवदत्तादिषु स्वाभाविकं सर्वार्थविषयबोधकत्वमित्यपि न समीचीनं । प्रमाणाभावात् । संकेतानपेक्षत्वप्रसङ्गाच्च । न हि नियमे संकेतस्य व्यापारः प्राक्संकेतादनियतार्थप्रत्ययोदयप्रसङ्गेऽपि क्लेशमात्रफलमिदमुच्यते गवादिष्वपि नियतार्थप्रतिपत्तिः पुरुषसंकेतायत्तैव । स्वाभाविकी तु सर्वार्थप्रतिपादनशक्तिरुपयोगिन्येव विशिष्टार्थप्रतिपत्तावित्यलमनुना प्रतिपन्नार्थविघातिना निर्बन्धेन । किंच यथोदितप्रमाणबलसिद्धे भगवति सकलजगन्निर्माणप्रवीणे धर्माधर्मयोः साक्षात्कारिणि तत्कर्तृकत्वेनापि सिध्यति वेदानामपूर्वेऽर्थे प्रामाण्यमिति मीमांसकानां विद्वेषमात्रनिबन्धनोऽयं पौरुषेयत्वपक्षप्रतिक्षेपः । मन्त्रार्थवादानां च भूयसाममुमर्थमञ्जसा वदतामन्यथा वर्णनमिति ।

औत्पत्तिकस्तु संबन्धः शब्दस्यार्थेन संभवः ।
वृद्धसंव्यवहारस्य प्रवाहानादिता यतः ॥

वेदार्थविदामग्रगस्य भगवतः सकलनयनिधेर्जैमिनेरपौरुषेयः शब्दस्यार्थेन संबन्धोऽभिमतः । स हि मेने । यद्यपि देवदत्तादीनां पुरुषसंकेतनिबन्धनं वाचकत्वं तथापि गवादिष्वनुमानं न शक्यते कर्तुम् । अर्थप्रतिपत्तिलक्षणस्य कार्यस्यान्यथाप्युपपत्तेरनैकान्तिकत्वादिति वृद्धव्यवहारनिबन्धनवाचकशक्तिज्ञानादपि बालानां शब्दार्थप्रतिपत्तिर्दृश्यते । तेनैकान्ततः संकेत एव कल्पयितुं न शक्यते । अपिच शक्तिज्ञाननिबन्धनार्थप्रतिपत्तिरिति प्रत्यक्षमेतत् । नच प्रत्यक्षे सति कारणे कारणान्तरमनुमातुं शक्यते । देवदत्तादिषु तु यस्य संकेतनिबन्धनार्थप्रतिपत्तिर्भवति तस्य संकेत एव कारणं । तेष्वपि व्यवहारदर्शनादेव वाचा तामवगम्यार्थं प्रतिपद्यन्ते ये तेषामपि व्यवहारदर्शनप्रसूतं शक्तिज्ञानमेवार्थप्रतिपत्तिकारणं न संकेतः । किंतु तत्र संकेतपूर्वक एव व्यवहारोऽर्थप्रतिपत्तिश्च । तथा च तत्पूर्वमपि वाचकत्वज्ञानं । गवादिपदेषु तु सर्वेषां शक्तिज्ञानादेव व्यवहारसंभवादर्थावगतिरिति वैषम्यं । ननु देवदत्तादिपदेषु दर्शनात् किमिति गवादिपदेष्वपि पूर्वभावी संकेत एव न कल्प्यते । प्रत्यनुमानग्रस्तत्वात् । शक्यते हि तत्रैवमनुमानं संभावयितुं । पूर्वेऽपि पुमांसो गवादिषु शब्दात् साक्षादिमत्यर्थं वृद्धव्यवहारसिद्धशक्तिज्ञानादर्थप्रतिपत्तियोगिनः । गवादिशब्देभ्यः साक्षादिमदर्थप्रतिपत्तियोगित्वादधुनातनशाब्दवदिति । तदेवं प्रत्यनुमानग्रस्तेऽनुमाने निरस्ते सकलप्रमाणविरहादपौरुषेयत्वमेव सिध्यति शब्दार्थावगतेः । अत इदमपहस्तितं । यदाहुर्बाह्याः ।

यज्जातीयो यतः सिद्धः स तस्मादग्निकाष्ठवत् ।
अदृष्टहेतुरपि नो विशिष्टः संप्रतीयते ॥

इति । ननु च सिध्येदयं मनोरथो यदि तु वृद्धव्यवहारपरम्परया अनादिता सा तु प्राचीननयनिवारिता । अत्र वदामः । भवतु सावयवं सर्वमवयवसंयोगारब्धसत्ताकमवयवसंयोगापाये च विनश्वरमिति तथाप्येकदैव सकलजनस्य समुत्पादो विलयश्चेति नास्ति नः प्रमाणं । प्रत्युत यथादर्शनमेतावदवसातुमुचितं क्रमेण चोदयः क्रमेण च विलय इति । किंच यथाद्यतना जना मातापितृसंयोगनिबन्धनात्मलाभास्तथा पूर्वेऽपि जना जनत्वादिति शक्यमेवानुमातुं । नच योनिजानां केवलेन धर्माधिपत्येन संस्वेदजानामिव संभवो घटते । जरायुजाण्डजानां तथा दर्शनासंभवात् । दृष्टानुसारि हि सर्वत्रानुमानं । तेन संस्वेदजेषु नियमेन दृष्टं न जरायुजाण्डजयोरप्ययोनिजत्वं शक्यतेऽनुमातुं । नहि पाण्डिममात्रेण बाष्पादपि वन्हेरनुमानं किंतु यादृशमेव पाण्डुरद्रव्ये नियमेन वन्हिनियतं प्रतिसंपन्नं तादृशमेव तस्यानुमापकमुचितम् । यच्चेदमुक्तं धर्माधर्मौ चेतनातिशयाधिष्ठानाविति तदप्यसिद्धमेव । यस्यैव तौ क्षेत्रज्ञस्य स एवाधिष्ठातास्तु । अथाज्ञत्वात् तस्याधिष्ठानं नोपपद्यते तर्ह्यन्यस्यापि कथमुपपद्यते । न हि तस्यापि परपुरुषवर्तिधर्माधर्मज्ञानमुपपद्यते कारणाभावात् । न हि तस्येन्द्रियाणि कारणम् । इन्द्रियाणां तत्रासामर्थ्यात् । नच केवलं मनः केवलस्य मनसो बाह्येष्वप्रवृत्तेः । न हि धर्माधर्मरहितस्येन्द्रियमनःसंबन्धोऽस्ति धर्माधर्मनिबन्धनत्वात् तत्संबन्धस्य । अथ कारणमन्यदेवेश्वरबुद्धेः । तदयुक्तं । प्रसिद्धकारणत्वाद्बुद्धेः । प्रसिद्धानि हि कारणानि बुद्धेः । यत् कारणं च यत्कार्यं दृष्टं तत्कारणमेव तदिति युक्तम् । अन्यथा चेतनाधिष्ठाना वासी दृष्टेति कथं धर्माधर्मयोरपि तदधिष्ठितत्वं भविष्यति । अथाकारणा नित्यैवेश्वरबुद्धिरिति । तदप्यसुन्दरं । बुद्धितत्त्वस्य नित्यत्वाभावात् । नित्या सती बुद्धिरेव न स्यात् । बुद्धिमता चाधिष्ठानं दृष्टं न पुनरन्येन । अथादृष्टमपि बुद्धेर्नित्यत्वमङ्गीक्रियते । तदा न चेतनाधिष्ठितत्वमेव किमिति नाङ्गीक्रियते । अथ सिद्धेऽधिष्ठातृत्वे ज्ञानमपि कल्प्यत इति । ज्ञानाननुबद्धस्याधिष्ठातृत्वस्य कारणाभावात् प्रतिक्षिप्ते ज्ञाने सत्यनुमातुमशक्तेः । तेन शक्यज्ञानमेवाचेतनं चेतनाधिष्ठितमिति व्याप्तिराश्रयणीया । तथा दर्शनात् । तक्षादयो हि शक्यज्ञानान्येव

वास्यादीन्यधितिष्ठन्तो दृश्यते नान्यानि । अपिचाधिष्ठानार्थोऽपि चिन्तनीयः । न तावत् संयोगो धर्माधर्मयोर्गुणत्वेन संयोगाभावात् । समवायोऽपि परपुरुषसमवायिनोर्धर्माधर्मयोरीश्वरं प्रत्यनुपपन्नः । वास्यादिषु तक्षादीनां करसंयोगादिरेवाधिष्ठानं । तथा प्रवृत्तिरपि कीदृशी । न तावत् क्रिया गुणभूतयोर्धर्माधर्मयोः क्रियाभावात् । उत्पत्तिश्चेत् तर्हि सा चित्तक्षणादेव समवायिकारणादात्ममनःसंयोगाच्चासमवायिकारणादभिसंध्यादिनिमित्तकारणोपगृहीतत्वात् फलदानमिति चेत् । न। देशकालावस्थादिसहकारिसहिताभ्यामेव फलं न चेतनव्यापारापेक्षं । यदपि केचिदाहुः परमाणव एवेश्वरेच्छया प्रवर्तन्त इति । तदपि न युक्तं । क्वचित् तथाविधस्याधिष्ठानस्यादर्शनात् । शरीरे तथा दर्शनादिति चेत् । न । तस्य धर्माधर्मोपसंगृहीतत्वात् । नच परमाणव एवेश्वरस्य धर्माधर्मोपगृहीताः । नच तस्येच्छामात्रेण प्रवृत्तिः किंतु प्रयत्नवशात् । नचेच्छायामपि हेतुरस्ति । नच नित्यैवेच्छा नित्यत्वप्रसङ्गात् । यथाऽचेतनत्वाच्चेतनाधिष्ठितत्वमनुमीयते तथा प्रयोजनाभावादप्यनधिष्ठानमिति ज्ञायते । कतरदत्रानुमानं बलीय इति न विद्मः । तेन यत्रैव प्रयोजनं तदेव चेतनाधिष्ठितमिति व्याप्तिरभ्युपगमनीया । तथा दर्शनात् । अपिच व्याप्तिग्रहणपुरःसरमनुमानम् । अन्वयव्यतिरेकाभ्यां च व्याप्तिरवगम्यते । यथा च चेतनोऽधिष्ठातेति प्रतीयते तथा विग्रहादिमानपि । तेनानुमानं तथाविधमेवानुमापयेत् । नच तस्य धर्माधर्मौ परमाणून् वा प्रत्यधिष्ठातृतोपपद्यत इत्यनधिष्ठानमेव । तेन विग्रहादिमदधिष्ठानमेवाचेतनं चेतनाधिष्ठितमिति व्याप्तिराश्रयणीया । नन्वेवं सति प्रसिद्धस्याप्यनुमानस्योच्छेदः प्राप्नोति । यथाभूतेन हि महानसादिवर्तिना व्याप्तिरवगता न तथाविधस्यानुमानं । यथाविधस्यानुमानं न तथाविधस्य व्याप्तिधीसमयेऽवधारणमिति । तदयुक्तं देशकालाद्युपाधिपरित्यागेन सामान्येन हि संबन्धग्रहणं । तेनेहापि भवत्येतद्वास्यादिषु दृष्टं धर्माधर्मयोरपीति यादृशस्वरूपं व्यापकमुपलभ्यते तदेवानुमातुं शक्यते नान्यत् । इह तु विग्रहवत्त्वाद्यपि व्याप्त्यनुप्रवेशीति तदनुमातव्यं न तदनुमातुं शक्यत इति वरं चेतनानुमानबाध एव तदनुबद्धस्य तस्यानुमानस्य स्यात् । नचेश्वरस्य सर्वज्ञानमपि सिध्यति ज्ञानहेत्वभावेन ज्ञानाभावनिश्चयात् । तेनानादिरेव वृद्धपरम्पराशब्दार्थावगमे हेतुर्न सृष्ट्यादावीश्वरकृतः संकेतः । तस्यैव कर्तुमशक्तेः । न खल्वाद्या जनाः संकेतस्यार्थमनवबुध्यमानाः संकेतं प्रतिपद्यन्ते । तस्मादनादिरेव वृद्धपरम्पराभ्युपगमनीया । एवं पुरुषस्य धर्मप्रतीतिं प्रति शब्दमन्तरेणोपायाभावाच्च पौरुषेयत्वे वेदस्यापूर्वात्मके वेदार्थे प्रामाण्योपपत्तिरित्यपौरुषेयत्वाश्रयणं ।

कथं पुनरपौरुषेयत्वं वेदानां । पुरुषस्य कर्तुरस्मरणात् । नचानुमानमपि कर्तुरुपपद्यते । प्रमाणान्तरेणाप्रतीतेः पुरुषाणां वाक्यस्य रचनायामशक्तेः । काठकादिसमाख्यापि न कर्तृसद्भावमुपकल्पयितुमलम् । प्रवचनेनापि तदुपपत्तेः । मन्त्रार्थवादाश्च न स्वातन्त्र्येणार्थमवगमयितुमीशते किंतु विध्युद्देशानुसारेण तदनुगुणमर्थमिति न सिद्धार्थप्रतिपादनेनैषां प्रामाण्यमिति सिद्धमपौरुषेयत्वं शब्दार्थसंबन्धस्येति ॥ :: ॥ :: ॥

दुस्तर्कतिमिरं भेत्तुं शिष्याणां दृष्टिरोधकम् ।
इदं शालिकनाथेन विहितं निर्मलाञ्जनम् ॥

इति महामहोपाध्यायश्रीशालिकनाथकृतौ प्रकरणपञ्चिकायां निर्मलाञ्जनं नाम सप्तमं प्रकरणम् ॥ :: ॥ :: ॥

## ॥ अथ कादम्बरीकथासारः ॥

स तद्गुणप्रभावर्द्धिवर्धमानकुतूहलः ।
तामवोचत माधुर्यविनयोदारया गिरा ॥ १ ॥
त्वत्प्रसादकृतेनैव प्रागल्भ्येन ममामुना ।
मनो भगवति प्रश्नचापले विनियुज्यते ॥ २ ॥
न मादृशदृशां भूमिरियमाश्चर्यसंततिः ।
तदाख्यानप्रसादेन जनोऽयमनुगृह्यतां ॥ ३ ॥
कतमो मुनिगन्धर्वसिद्धविद्याधरादिषु ।
पुण्येन जन्मना वंशो भगवत्या विभूषितः ॥ ४ ॥
पञ्चभूतात्मकं चेदं धत्ते धवलतां वपुः ।
कथं कामपि दिग्दन्तिदन्तकान्त्यतिशायिनीं* ॥ ५ ॥
नवे वयसि किंचाति†तीव्रवैराग्यकारणं ।
येनारण्यनिवासादि दुःखमीदृग्विषह्यते ॥ ६ ॥
इति तस्मिन् वदत्येव स्थूलाश्रुकणवर्षिणी ।
रुरोद वल्कलच्छन्नवदना दिव्यकन्यका ॥ ७ ॥
अकम्पत मनश्चैनां चन्द्रापीडस्य पश्यतः ।
इयमप्याकृतिर्नाम द्वन्द्वैर्यदभिभूयते ॥ ८ ॥
असौ चिरं रुदित्वा च वल्कलोन्मृष्टलोचना ।
दीर्घमुष्णं च निश्वस्य व्याहर्तुमुपचक्रमे ॥ ९ ॥
राजपुत्र किमेतेन शोकैकप्रसवेन मम ।
पापाया मन्दभाग्याया वृत्तान्तेन श्रुतेन ते ॥ १० ॥
तथापि यदि ते चित्तं कुतूहलवशीकृतं ।

*—न्त्यभिभाविनीम् इति पाठान्तरम् ।
† चेदं पुस्तकान्तरपाठः ।

तदिदं वर्ण्यते सर्वमाकर्णय यथाक्रमं ॥ ११ ॥
सुप्रसिद्धमिदं तावद् गतं श्रुतिपथं तव ।
यत् सन्त्यप्सरसो नाम सुरसद्मनि कन्यका: ॥ १२ ॥
चतुर्दश च तद्वंशा: पृथक्पृथगवस्थिता: ।
सोमामृतसमीरार्कदक्षकन्यादिसंभवा: ॥ १३ ॥
दक्षकन्योद्भवं तेषु गन्धर्वाणां कुलद्वयं ।
कन्ये मुनिररिष्टेति द्वे दक्षस्य बभूवतु: ॥ १४ ॥
तत्र चित्ररथो नाम गन्धर्वाणामधीश्वर: ।
मुने: श्रुतयशा: पुत्रश्चित्रसेनादिपूर्वज: ॥ १५ ॥
तुम्बुरुप्रभृतीनां तु ज्येष्ठोऽरिष्टासुत: कृती ।
हंसाभिधानो गन्धर्वराज: प्रथितपौरुष: ॥ १६ ॥
अकृत्रिममनुत्पन्नमन्युकालुष्यदूषणं ।
गाढं* परस्परं प्रेम तयोर्गन्धर्वराजयो: ॥ १७ ॥
इतश्च नातिदूरेऽस्ति नानारत्नोज्ज्वलो गिरि: ।
हेमकूट इति ख्यात: स निवासस्तयोर्द्वयो: ॥ १८ ॥
तस्मिन् वसन्त्यसंख्यातास्तद्भुजस्तम्भसंश्रिता: † ।
गन्धर्वास्तौ च विश्रम्भभूमिर्जम्भद्विष: परा ॥ १९ ॥
अथ यत् सोमसंभूतमेकमप्सरसां कुलं ।
गौरी नामोदभूत् कन्या तस्मिन् प्रतिकृति: श्रिय: ‡ ॥ २० ॥
हंसो गन्धर्वराजस्तामुदुवाह हिमप्रभां ।
ततो यथार्थतामाप सर्वथा हंसगामिनी ॥ २१ ॥
चिरसंभृतविश्रम्भनिर्भरं गृहवासिनो: ।
तयोरुदभवत् सूनुरेकोऽपि न महात्मनो: ॥ २२ ॥
अहं तु मन्दभाग्यैका कन्या दुष्कृतकारिणी ।
उदभूवं तयोरस्य दु:खभारस्य भाजनम् ॥ २३ ॥
अनपत्यतया तातो मज्जन्म सुतजन्मवत् ।
अभ्यनन्दत् कृतानन्द: कृतोदारमहोत्सव: ॥ २४ ॥
देहच्छायामिमां वीक्ष्य तात: सोमक्रमागतां ।
चक्रे वर्णानुरूपं स महाश्वेतेति नाम मे ॥ २५ ॥
साहं पितृगृहे बाला वल्लकीव कलस्वना ।
संचरन्ती स्वबन्धूनामङ्कादङ्कमहर्निशम् ॥ २६ ॥
अनवाप्तरसास्वादस्नेहादिद्वन्द्वसंतति ।

* रूढं पाठान्तरमेतत् ।
†–संभृता: इति क्वचित् पाठ: ।
‡–र्तिर्विधो: क्वचिदेष पाठ: ।

अत्यवाहयमक्लेशपेशलस्थिति शैशवं ॥ २७ ॥
अथ बाल्यात् परं प्राप्तं मया नानारसोचितं ।
मनोभवविकाराणामेकमायतनं वय: ॥ २८ ॥
कदाचिदथ रम्येषु मधुमासदिनेष्वहं ।
अच्छोदसरसि स्नातुमागताऽहं सहाम्बया ॥ २९ ॥
अदृष्टपूर्वामन्यत्र विभूतिमहमार्तवीं * ।
सखीभि: सह पश्यन्ती कानने व्यचरं चिरं ॥ ३० ॥
कस्मिंश्चिदपि देशेऽन्यपुष्पगन्धाभिभाविनं ।
अभ्यजिघ्रमनाघ्रातपूर्वमामोदमद्भुतं ॥ ३१ ॥
तस्य प्रभवजिज्ञासारसेन विहितत्वरा ।
नातिदूरं ततो गत्वाऽपश्यं मुनिकुमारकम् ॥ ३२ ॥
अस्पृष्टमिव कन्दर्पमीशाननयनार्चिषा ।
कलङ्कविप्रुषा बिम्बमदूषितमिवैन्दवं ॥ ३३ ॥
विरुद्धैरपि रूपस्य मेखलाजिनवल्कलै: ।
कृताधिकमनोहारिरूपातिशयविभ्रमं ॥ ३४ ॥
तेन कर्णे कृता काचिदपूर्वा तरुमञ्जरी ।
तत: प्रवृत्तमामोदं समर्थितवती मुहु: ॥ ३५ ॥
तं कुतोऽप्यागतं कान्तं लावण्यामृतनिर्झरं ।
चक्षुषैव पिबन्तीव कौतुकोत्क्षिप्तपक्ष्मणा ॥ ३६ ॥
रूपैकपक्षपातेन गुणदोषानपेक्षिणा ।
तत: कुसुमबाणेन नीतास्मि वशमात्मन: ॥ ३७ ॥
ततोऽपसर्तुकामाहमप्रगल्भतया मुहु: ।
केनापि प्रेर्यमाणेव तदन्तिकमुपागमम् ॥ ३८ ॥
वन्द्यो मुनिजनश्चेति प्रचलन्मणिकुण्डलम् ।
अकार्षं वन्दनं तस्मै तन्मुखन्यस्तलोचना ॥ ३९ ॥
तत: कृतप्रणामायां मयि सोऽपि मनोभुव: ।
पतितो गोचरे चित्रमवन्ध्या भवितव्यता ॥ ४० ॥
स्मरोपदिष्टयैवाथ बुद्ध्या तद्विकृतिं धिया ।
लब्धावकाशा रूपादिप्रश्ने प्रागल्भ्यमागमम् ॥ ४१ ॥
अथ पार्श्वस्थमद्राक्षमन्यं मुनिकुमारकं ।
तुल्यतेजस्तपोवेषं ‡ तस्य सब्रह्मचारिणं ॥ ४२ ॥
भगवन् कथ्यतां कोऽयं किमाख्य: किमिहागत: ।

*–मिह माधवीम् इति पाठान्तरम् ।
† एकस्मिंस्तु प्रदेशेऽस्य सर्वपुष्पाभि – इति पाठान्तरम् ।
‡–तेजोवयो – इति क्वचित् पाठ: ।

कर्णे च निहितानेन कस्येयं मञ्जरी तरोः ॥ ४३ ॥
सोऽब्रवीत् सुरलोकेऽस्ति सुरासुरशिरोऽर्चितः ।
श्वेतकेतुरिति ख्यातो रूपेणाप्रतिमो मुनिः ॥ ४४ ॥
पुण्डरीकसरः स्नातुमयासीत् स कदाचन ।
नित्यं संनिहिता तत्र लक्ष्मीरेनं व्यलोकत ॥ ४५ ॥
सा तदालिङ्गनेनेव दर्शनेनैव केवलं ।
पुण्डरीके कृतार्थत्वमवाप स्वासनीकृते ॥ ४६ ॥
उदपादि तदैवाथ कुमारः स तया * श्रिया ।
तव पुत्रोऽयमित्युक्त्वा न्यवेदि श्वेतकेतवे ॥ ४७ ॥
सोऽपि योगदृशा दृष्ट्वा यथावत् सुतमग्रहीत् ।
नाम जन्मानुगं चास्य पुण्डरीक इति व्यधात् ॥ ४८ ॥
योजयामास संस्कारैरेनं मुनिजनोचितैः ।
अतीतबालभावं तु न्ययुङ्क्त तपसे पिता † ॥ ४९ ॥
अयं स पुण्डरीकस्ते वर्णितः शृणु मञ्जरीम् ।
चतुर्दशीति कृत्वाद्य ‡ प्रस्थितोऽयं शिवालयं ॥ ५० ॥
व्रजतो नन्दने चास्य वनदेवतया स्वयं ।
त्वदाकृतेरलंकारस्तुल्योऽयमिति सादरं ॥ ५१ ॥
पारिजातद्रुमादेषा दुग्धोदधिसमुद्भवात् ।
आदाय मञ्जरी कर्णेऽनिच्छतोऽपि निवेशिता ॥ ५२ ॥
इति तस्मिन् वदत्येव चपले गृह्यतामियम् ।
किमनेन तव प्रश्नखेदेनेत्यभिधाय माम् ॥ ५३ ॥
अनायि मुनिना तेन सा सुरद्रुममञ्जरी ।
अपनीय निजात् कर्णान्मम कर्णावतंसतां ॥ ५४ ॥
मत्कपोलतलस्पर्शप्रकम्पतरलाङ्गुलेः ।
भ्रश्यन्ती तेन नाज्ञायि स्वाक्षमाला निजात् करात् ॥ ५५ ॥
अप्राप्तैव च सा भूमिमग्राहि सहसा मया ।
तस्मिन्नवसरे छत्रग्राहिणी मामवोचत ॥ ५६ ॥
स्नाता देवी चिरं भर्तृदारिके १ गम्यतामिति ।
तस्मात् प्रतिनिवृत्तायां मयि तस्य सखाऽवदत् ॥ ५७ ॥
वयस्य किमिदं चेतस्तव विप्लुतमीदृशं ।
हृतामप्यनयाऽज्ञासीरक्षमालां न कन्यया ॥ ५८ ॥

हृता नामेयमनया हृदयं ननु रक्ष्यतां ।
ततोऽसौ पुनरागत्य कृतकोपमिवाब्रवीत् ॥ ५९ ॥
अपहृत्याक्षमालां मे क्व चौरि ननु गम्यते ।
अथ मन्दं विहस्येव मयास्य निहिता करे ॥ ६० ॥
अवमुच्याक्षमालेति कण्ठान्मुक्तावली निजात् ।
साप्यलक्ष्यत नानेन मन्मुखासक्तदृष्टिना ॥ ६१ ॥
सखीभिरपि मे दृष्टमिदं चापलमुच्चकैः ।
किंचित्संजातलज्जेव सरस्तटमुपागमम् ॥ ६२ ॥
तत्राहमस्वतन्त्रेव मुहुः स्नात्वा यथा तथा ।
क्व गतास्मि किमायाता दृष्टः कोऽसावहं च का ॥ ६३ ॥
किमिदं कः प्रकारोऽयमिति नाज्ञासिषं तदा ॥ ६४ ॥
मुहूर्तादिव ताम्बूलकरङ्क१ग्राहिणी मम ।
प्रिया तरलिका नाम संप्रविश्येदमब्रवीत् ॥ ६५ ॥
कर्णे मुनिकुमारेण कृता ते येन मञ्जरी ।
त्वय्यागतायां पृष्टास्मि स्वरूपं तेन तावकं ॥ ६६ ॥
तच्छ्रुत्वा मदियं तेन लिखित्वा वस्त्रपट्टिका * २ ।
एकाकिन्यै त्वया तस्यै देयेत्युक्त्वा समर्पिता ॥ ६७ ॥
ततस्तरलिकायास्तां हस्तादादाय पट्टिकां ।
तस्यां तल्लिखितामार्यामिमामहमवाचयं ॥ ६८ ॥
दूरं मुक्तालतया बिससितया विप्रलभ्यमानो † मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥ ६९ ॥
सा तु तैमिरिकस्येव बभूव बहुलक्षणा ।
मोहायार्याप्यनार्यैव सुतरां मनसो मम ॥ ७० ॥
वद तेन किमुक्तासि स किमुक्तस्त्वयापि वा ।
तदन्तिके च विस्रब्धमुषितासि कियच्चिरं ॥ ७१ ॥
एवं तरलिकां तत्र चालपन्ती पुनः पुनः ।
कांचिदह्नस्ततो मात्रामुन्मत्तेवात्यवाहयम् ॥ ७२ ॥
अथ प्रलम्बमानेऽर्के प्रतीहारी प्रविश्य मे ।
भर्तृदारिकया दृष्टौ यौ तौ मुनिकुमारकौ ॥ ७३ ॥
तयोरन्यतरो द्वारि तिष्ठतीति न्यवेदयत् ।
शीघ्रं प्रवेशयेत्युक्ता मया तदभिशङ्कया ॥ ७४ ॥
सा च प्रवेशयामास तस्य तं सहचारिणं ।

* सत्यया इति पाठान्तरम् ।
† वने क्वचिदयं पाठः ।
‡ मत्वाद्य इति क्वचित् पाठः ।
१ राजपुत्रि ।

* पत्रपट्टिका इति पाठान्तरम् ।
१ नारिकेलफलास्थिसदृशं भाजनं करङ्कः ।
२ परिधूतवल्कलखण्डम् ।
† विप्रलोभ्य—इति पाठान्तरम् ।

सत्कारेणोचितेनाहं भक्त्या चैनमपूजयं ॥ ७५ ॥
मुहूर्तमिव विश्रम्य पर्यङ्के मदुदाहृते ।
मदुत्तरीयसंमृष्टमाधौतचरणद्वयं ॥ ७६ ॥
दृष्टिं तरलिकायां च वक्तुकामः क्षणं व्यधात् ।
मया सोऽन्वयि पृष्टस्तु* लज्जमान इवाभ्यधात् ॥ ७७ ॥
अहं कपिञ्जलो नाम तस्य बालसुहृन्मुनेः ।
न वाक् प्रवर्तते चास्मिन्ननभ्यस्त इवाध्वनि ॥ ७८ ॥
क्वायं मुनिजनः शान्तः क्व चामी रागविभ्रमाः ।
तथापि व्यवसायो मे सुहृत्स्नेहरुगाश्रितः ॥ ७९ ॥
तद्व्यसे प्रयातायां राजपुत्रि तदा त्वयि ।
हस्ते मुक्तावलीं बिभ्रत् स ममान्तिकमागतः ॥ ८० ॥
अहो रम्याक्षमालेयं त्वया नीतेति तत्क्षणं ।
विहस्य स मया किं किं नोक्तश्चित्तोपशान्तये ॥ ८१ ॥
नोपदेशप्रकारोऽसौ न स दृष्टान्तविस्तरः ।
न सोऽस्त्युपायो मन्त्रो वा यो मया नाभ्यधीयत ॥ ८२ ॥
वचोभिः खिद्यमानो मे त्रपानतशिरोधरः ।
क्षणमन्तर्हितो मत्तः सुतरां मामपीडयत् ॥ ८३ ॥
कृच्छ्रादिव मया लब्धो विविच्य सकलं वनम् ।
अन्य एव स संवृत्तो वचसां यो न गोचरः ॥ ८४ ॥
तदवस्थं तमालोक्य जिरताशः प्रबोधने ।
अहं तत्प्राणरक्षार्थमेवं यत्नपरोऽभवम् ॥ ८५ ॥
आस्तीर्य नलिनीपत्रशयनं चन्दनोक्षितं ।
तत्रस्थस्यास्य कर्पूरपांशूनङ्गेष्ववाकिरं ॥ ८६ ॥
त्रपया तदवस्थोऽपि स किंचिद्वक्तुमक्षमः ।
सबाष्पमलिनां दीनां मयि दृष्टिमपातयत् ॥ ८७ ॥
ततोऽहमिदमेवात्र प्राप्तकालमचिन्तयं ।
राजपुत्रि सुहृत्प्राणरक्षणार्थमुपागतः ॥ ८८ ॥
अतः परं तु सामर्थ्यगतार्था मम या गिरः ।
कण्ठे विपरिवर्तन्ते काश्चित्ता त्वमपि वेत्सि ताः ॥ ८९ ॥
इति तस्मिन् वदत्येव प्रविश्य प्राह कञ्चुकी ।
त्वमस्वस्थशरीरेति ज्ञात्वा देवी समागता ॥ ९० ॥
तच्छ्रुत्वा जनसंमर्दभीरुर्यातः कपिञ्जलः ।
न स प्रतिवचः किंचिन्मामकीनमपैक्षत ॥ ९१ ॥

* संज्ञाविनिर्दिष्टो इति पाठान्तरम् ।
† कश्चित् पाठान्तरमेतत् ।

तदुक्तां तु दशां तस्य जनस्यावेद्य तादृशीम् ।
आगतां वा गतां वापि नाहमम्बामलक्षयं ॥ ९२ ॥
ततः कमलिनीं त्यक्त्वा रात्रौ* क्वापि गते रवौ ।
उदिते सर्वथा वामे विधौ वैधुर्यदायिनि† ॥ ९३ ॥
उन्मूलितेव कामेन दग्धेव विरहाग्निना ।
पुनस्तरलिकामेव साश्रुकण्ठमवादिषम् ॥ ९४ ॥
अहं यथा तथा वापि भवेयं स तु मत्कृते ।
कथं भविष्यतीत्येषा चिन्ता दोलायतीव‡ माम् ॥ ९५ ॥
इतः शास्त्रं कुलाचारो लज्जा गुरुजनाद्भयम् ।
इतः कामो वसन्तेन्दू विरहो मरणाद्भयम् ॥ ९६ ॥
वद किं करवाण्यत्र मुह्यतीव मनो मम ।
माभून्मे दुस्तरे विघ्नवर्धेनासि निमज्जनम् ॥ ९७ ॥
इत्यादि विलपन्त्या मे तत्कालसुलभोदया ।
जहार चेतनां मूर्छा निद्रेव नयनद्युतिम् ॥ ९८ ॥
अथ मां ग्राहयित्वासौ संज्ञां शीतजलानिलैः ।
निपत्य पादयोः साश्रुनेत्रा तरलिकाऽवदत् ॥ ९९ ॥
गन्धर्वाणां विवाहोऽयमिच्छयान्योन्यसंगमः ।
शास्त्रेषु पठितस्तस्मात् तूर्णमुत्तिष्ठ गम्यतां ॥ १०० ॥
किं शास्त्रं गुरवः के वा का लज्जा का कुलस्थितिः ।
रक्ष्यन्तामात्मनः प्राणा यूनस्तस्य च सर्वथा ॥ १ ॥
तयैवमुक्ता तत्कालयोग्यवेषग्रहा गृहात् ।
तामेकामग्रतः कृत्वा निर्गताहमलक्षिता ॥ २ ॥
अभ्यागममिमां भूमिमौत्सुक्यचटुलैः पदैः ।
तदा मे दक्षिणं चक्षुरस्पन्दत मुहुर्मुहुः ॥ ३ ॥
अव्यक्तमिव चाश्रौषं§ कानने रुदितध्वनिं ।
तेनैवोत्पन्नशङ्काहमगच्छमधिकत्वरा ॥ ४ ॥
पदानि कतिचिद्गत्वा हा वयस्य तपोनिधे ।
पुण्डरीक क्व यातोऽसि शून्यं कृत्वा जगत्त्रयं ॥ ५ ॥
हा हतोऽस्मि विलीनोऽस्मि दग्धोऽस्मि करवाणि किं ।
गत्वा तातस्य वक्ष्यामि श्वेतकेतोः किमग्रतः ॥ ६ ॥
अयि पापे महाश्वेते न तुष्टास्यक्षमालया ।

* रक्तां क्वचिदयं पाठः ।
† वै धैर्यनाशिनि इति क्वचित् पाठः ।
‡ दारयतीव इति क्वचित् पाठः ।
§ अथाव्यक्तमिवाश्रौषं क्वचित् पाठोऽयम् ।

हृता मे सुहृदोऽमुष्य प्राणवृत्तिरपि त्वया ॥ ७ ॥
वयस्य देहि मे वाचं न जीवामि त्वया विना ।
तत्राऽशृणवमित्यादि विलपन्तं कपिञ्जलम् ॥ ८ ॥
अथ प्रकम्पमानाङ्गी विसंष्ठुलपदक्रमा[१] ।
केनाप्युत्क्षिप्य नीतेव तं प्रदेशमयासिषं ॥ ९ ॥
गत्वा तमहमद्राक्षं तत्क्षणोत्क्रान्तजीवितं ।
किं चिरेणागतासीति रुषित्वेव तथा स्थितम् ॥ १० ॥
एतावदुक्त्वा मूर्छान्धा स्ववृत्तान्तमनन्तरं ।
विवक्षन्तीव सा कन्या निपपात शिलातले ॥ ११ ॥
प्रनष्टचेतनां चैनां चन्द्रापीडो विलोकयन् ।
प्रश्नकारिणमात्मानं कृतागसममन्यत ॥ १२ ॥
ससंभ्रमं समुत्थाय कदलीदलमारुतैः ।
तोयैश्च शिशिरैः स्वच्छैः संज्ञामेनामजिग्रहत् ॥ १३ ॥
अवाप्तचेतना चासौ स्मृत्वा तद्व्यसनं निजं ।
तदेवानुभवन्तीव रुरोद विललाप च ॥ १४ ॥
तरूणामप्यभज्यन्त हृदयानि तदा शुचा ।
प्रतिशब्देन चैवोच्चैर्दिशोऽपि रुरुदुश्चिरं ॥ १५ ॥
चन्द्रापीडोऽपि तामाह बाष्परुद्धविलोचनः ।
आस्तां न शक्यते वक्तुं श्रोतुं वान्यदतः परं ॥ १६ ॥
कथमप्युपसंहृत्य शोकावेगं तु साऽवदत् ।
किमतः परमस्त्यन्यद्वाच्यं श्रोतव्यमेव च ॥ १७ ॥
किंतु क्लेशाय येनाशाबन्धेन हतजीवितं ।
राजपुत्र बिभर्मीदं तदाश्चर्यं ब्रवीमि ते ॥ १८ ॥
तदा तस्यातितीव्रस्य दुःखभारस्य* तादृशः ।
न काचिन्मरणादन्या मयाग्राहि प्रतिक्रिया ॥ १९ ॥
मरणव्यवसायनिश्चयं
कृतवत्यस्मि च संविधानकं ।
निरियाय च चन्द्रमण्डलात्
पुरुषः कोऽपि हिमोग्रमद्युतिः ॥ २० ॥
सोऽवतीर्य गगनान्महीतले
तं निधाय भुजपञ्जरान्तरे ।
उत्पतन् दिवमुदात्तया गिरा
मामवोचत पितेव सान्त्वयन् ॥ २१ ॥

१ स्खलनशीलचरणविन्यासा ।
*—दाहस्य इति पाठान्तरम् ।

विरम मरणोपायादस्मात् प्रियेण तवामुना
पुनरपि महाश्वेते वत्से भविष्यति संगमः ।
इति गिरमिमां श्रुत्वा तस्मात् ससंभ्रमविस्मया
किमिदमिति तं तत्रापृच्छं प्रस्तुत्य कपिञ्जलं ॥ २२ ॥
प्रियसखमपहृत्य क्वाधुना गच्छसीति
स्फुरितविकटकोपाटोपमुक्तार्द्रदृष्टिः ।
मम वचनमदत्वा किंचिदेवातिवेगात्
कृतपरिकरबन्धः सोऽप्यगादन्तरिक्षं ॥ २३ ॥
प्रत्यक्षं मम* ते त्रयोऽपि विविशुः शीतत्विषो मण्डलं
तत्संप्रत्ययसंहृतोचितविधिः† सास्मि श्रितेदं व्रतं ।
तातेनापि ततः प्रभृत्यहमिहासीनैव नेतुं गृहं
यत्नेनापि न पारितेति स चिरं स्थित्वा गतः स्वान् गृहान् ॥ २४ ॥

॥ इति कादम्बरीकथासारे चतुर्थः सर्गः ॥ ४ ॥

इत्यावेदितनिर्व्याजवृत्तान्तबहुविस्तरा ।
विरराम महाश्वेता निश्वासग्लपितद्रुमा‡ ॥ १ ॥
चन्द्रापीडस्तु तद्ध्यायन् मनोभवविजृम्भितं ।
सकम्पविस्मयोऽप्यन्तस्तामथोवाच सान्त्वयन् ॥ २ ॥
मया ते चिरवृत्तोऽपि परिणाममपश्यता ।
शोकः प्रत्ययतां नीतः कौतुकाविष्टचेतसा ॥ ३ ॥
सा त्वमर्हसि कल्याणि न शोकं कर्तुमीदृशम् ।
आश्वासितासि देवेन नूनं चन्द्रमसा स्वयं ॥ ४ ॥
कोऽन्यस्तथाविधाकारस्तच्छक्तिमण्डलात् ततः ।
निर्गत्य तत्रैव विशन् निशि संभाव्यते नरः ॥ ५ ॥
श्रूयन्ते गतयश्चित्रा देवतानामनेकशः ।
वरशापतपःशक्तियोगवैचित्र्यनिर्मिताः ॥ ६ ॥
श्वेतकेतुश्च तस्यास्ते§ प्रजापतिसमः पिता ।
नास्त्येव तस्य तपसामवश्यं‖ नाम किंचन ॥ ७ ॥
इत्यादियुक्त्युपन्यासैरितिहासैर्निदर्शनैः¶ ।
महाश्वेतां समाश्वास्य पुनः पप्रच्छ तामसौ ॥ ८ ॥
सा ते तरलिका नाम विस्रम्भनिभृता सखी ।

* पश्यन्त्यां मयि इति पाठान्तरम् ।
†—संचितोचितविधिः इति पाठान्तरम् ।
‡—ग्लपिताधरा इति क्वाचित्कः सुपाठः ।
§ तस्यासौ इति क्वचित् पाठः ।
‖—असाध्यं क्वचिदयं पाठः ।
¶—हासनिदर्शनैः इति पाठान्तरम् ।

गता भगवति क्वाद्य न हि सा त्वां विमुञ्चति ॥ ९ ॥
पृष्टोवाच महाश्वेता क्वासौ याति तपस्विनी ।
श्रूयतां चापि निमित्तं मे यथासौ प्रहिता मया ॥ १० ॥
यश्च चित्ररथो नाम गन्धर्वाधिपतिर्मया ।
वर्णितो येन देवोऽयं प्रत्यक्षापि महेश्वर: ॥ ११ ॥
येन खानितमत्यच्छमच्छोदाख्यमिदं सर: ।
येन चैत्ररथं नाम कृतमेतच्च काननं ॥ १२ ॥
तस्यामृतसमुत्पन्ने प्रसूताप्सरसां कुले ।
महिषी मदिरा नाम जीवितादपि वल्लभा ॥ १३ ॥
तयो: कादम्बरी नाम कन्यास्ति नवयौवना ।
लक्ष्मीमुपहसन्तीव रूपलावण्यविभ्रमै: ॥ १४ ॥
तया सह महाप्रेम बाल्यात् प्रभृति मे तथा ।
यथैकमेव जानाति जनो जीवितमावयो: ॥ १५ ॥
विदित्वा दग्धवृत्तान्तमिमं सपदि मामकं ।
साग्रहीन्नियमं बाला वार्यमाणापि बन्धुभि: ॥ १६ ॥
महाश्वेतास्य* दु:खस्य यावन्न लभतेऽवधिं ।
तावन्मया न सोढव्यं पाणिग्रहणमात्मन: ॥ १७ ॥
यतो† यथा यथा तस्या यौवनश्रीर्विजृम्भते ।
तत‡स्तथा तथा खेदं धत्ते चित्ररथ: परं ॥ १८ ॥
संदिष्टं तेन मे पुत्रि यतस्वावहिता तथा ।
यथेमं दुर्ग्रहग्रन्थिं विमुञ्चति तव स्वसा ॥ १९ ॥
ततस्तरलिका तत्र मया प्रकरणोचितं ।
प्रहिता बहु संदिश्य श्वश्चागन्तैव सा तत:§ ॥ २० ॥
इतीत्थं कथया नीत्वा महाश्वेताश्रमे दिनं ।
चन्द्रापीड: प्रयातेऽस्तमर्के सन्ध्याविधिं व्यधात् ॥ २१ ॥
तत्रेन्द्रायुधमानीय संयम्य निचुले¶ क्वचित् ।
महाश्वेतोदिते देशे पर्णशय्यामकल्पयत् ॥ २२ ॥
तस्य शय्यानिषण्णस्य श्रान्तस्यापि यथा तथा‖ ।
कथामाश्चर्यबहुलां तामेव ध्यायतश्चिरं ॥ २३ ॥

* स्व– इति पाठान्तरम् ।
† ततो इति पाठान्तरम् ।
‡ तात– इति पाठान्तरम् ।
§ पुनः इति पाठान्तरम् ।
¶ स्थलवेतसे
‖ यथा श्रुतम् इति पाठान्तरम् ।

पुन: पुनर्महाश्वेतां* वैशम्पायनमेव च ।
पत्रलेखां च सा रात्रिर्गता प्रायेण जाग्रत: ॥ २४ ॥
इन्द्रायुधश्च बाष्पार्द्रो† महाश्वेताश्रमे भृशं ।
सप्रत्यभिज्ञमश्वोऽपि दृष्टिं मानुषवद्ददौ ॥ २५ ॥
प्रयातायां तु शर्वर्यां कृतप्राभातिकक्रिये ।
समाधेरुत्थितां बुद्ध्वा महाश्वेतां तदन्तिकम् ॥ २६ ॥
चन्द्रापीडे प्रविष्टेऽथ नातिदूरं गते‡ रवौ ।
सगन्धर्वकुमारासौ ततस्तरलिकाऽऽययौ ॥ २७ ॥
सा प्रविष्टा§ महाश्वेतां प्रणिपत्योपविश्य च ।
सिद्धार्थासीति तत्पृष्टा चलितग्रीवमब्रवीत् ॥ २८ ॥
त्वत्संदेशं निशम्योक्तं यत् तया भर्तृदारिके ।
तच्च तच्छाशनाकारि‖ केयूरकमुखाच्छृणु ॥ २९ ॥
अथ केयूरक: प्राह नानभिज्ञासि चेतस: ।
स्वस्य स्वमेव चेतस्ते मन्मन: किं परीक्षसे ॥ ३० ॥
भूमिर्वै तादृशस्याहमुपालम्भस्य भूयस: ।
त्या ¶वननिवासिन्यां त्वय्यहं गृहवासिनी** ॥ ३१ ॥
आकर्ण्य तव संदेशवचस्तरलिकामुखात् ।
एष ते प्रतिसंदेश: प्रियसख्या निवेदित: ॥ ३२ ॥
इति श्रुत्वा महाश्वेता चिरं निश्चललोचना ।
चिन्तयित्वा किमप्यन्तश्चन्द्रापीडमवोचत ॥ ३३ ॥
राजपुत्र तवोदार: †† समाचारश्च पेशल: ।
तनोति सर्वभावेषु निस्पृहाणामपि स्पृहां ॥ ३४ ॥
कादम्बरीवचश्चेदं श्रुतं केयूरकात् त्वया ।
तत्र को वा प्रतीकार: स्वयं मद्गमनादृते ॥ ३५ ॥
इतो न दूरे गन्धर्वराजधानी तदद्य तां ।
पश्यास्मदनुरोधेन श्वो गन्तासि स्ववाहिनीम् ॥ ३६ ॥
उदात्तमधुरामेनां दर्शयन्त्या त्वदाकृतिं ।

* पुनश्चिन्तयतः सेनां इति पाठान्तरम् ।
† बाष्पार्द्रो क्वचिदिति पाठान्तरम् ।
‡–दूरोद्गते इति पाठान्तरम् ।
§ प्रविश्य इति पाठान्तरम् ।
‖–ऽऽयात– इति पाठान्तरम् ।
¶ तपोवन– इति पाठान्तरम् ।
**–शायिनी इति पाठान्तरम् ।
††–वाक्कारः इति पाठान्तरम् ।

बहु गन्धर्वलोकस्य मयाप्युपकृतं भवेत् ॥ ३७ ॥
चन्द्रापीडस्तु तामाह बहूक्त्वा भगवत्यलम् ।
अनतिक्रमणीयं ते मुनीनामपि शासनं ॥ ३८ ॥
प्रावर्तत ततो गन्तुं स महाश्वेतया सह ।
पद्भ्यामेव नियुज्याश्वं प्रति केयूरकं द्रुतं ॥ ३९ ॥
केयूरकोऽग्रतो गत्वा कादम्बर्यै न्यवेदयत् ।
तस्यागमनमाकारं गुणांश्चाहितविस्मयान् ॥ ४० ॥
गत्वा कथंचिदध्वानं चन्द्रापीडः समासदत् ।
गन्धर्वराजनगरीमपराममरावतीम् ॥ ४१ ॥
आसाद्य राजधानीं च तुङ्गस्फाटिकतोरणां* ।
सप्त कक्षा अतिक्रम्य कन्यान्तःपुरमभ्यगात् ॥ ४२ ॥
केयूरकोपदिष्टेन वर्त्मनाथ प्रविश्य सः ।
भास्वन्मरकतस्तम्भं श्रीमण्डपमलोकयत् ॥ ४३ ॥
तन्मध्ये मणिपर्यङ्कमध्यासीनां महीयसा ।
रत्नाभरणचित्रेण स्त्रैणेन परिवारितां ॥ ४४ ॥
देहप्रभावितानेन रत्नकान्त्यभिभाविना ।
उत्तप्तकनकद्योतधौता विदधतीं दिशः ॥ ४५ ॥
तटस्थमप्याद्रयतः स्वमाधारमसिस्रुतः ।
स्थितां नवस्य लावण्यसिन्धो रत्नतरङ्गिणीं ॥ ४६ ॥
सर्वोपमेयभावानामुपमानत्वमागतां ।
कादम्बरीं ददर्शासौ दूरविस्फारितेक्षणः ॥ ४७ ॥
पराातिशयकोटिस्थां रूपलावण्यसंपदं ।
तस्या निरूपयन्नन्तश्चिन्तयामास स क्षणं ॥ ४८ ॥
सत्यं न कश्चिदाश्चर्यनिर्माणेष्ववधिर्विधेः ।
ईदृशाण्यपि रत्नानि स्रष्टुं प्रभवति स्म यः ॥ ४९ ॥
मोघं याति हरेः कालो लक्ष्मीं वक्षसि बिभ्रतः ।
देहार्धेन दधद् गौरीं वञ्चितश्चन्द्रशेखरः ॥ ५० ॥
कृतमक्ष्णां सहस्रेण निर्निमेषेण वज्रिणः ।
अनन्यकर्मणा येन नित्यमेषा न दृश्यते ॥ ५१ ॥
इत्यादि चिन्तयत्यस्मिन्नथ चित्ररथात्मजा ।
प्रत्युद्ययौ महाश्वेतामभ्युत्थाय ससंभ्रमं ॥ ५२ ॥
महाश्वेता तु निःसङ्गमालिङ्ग्य स्नेहनिर्भरं ।
तां चन्द्रापीडनिर्देशपुरःसरमभाषत ॥ ५३ ॥

*—स्फटिक— इति पाठान्तरम् ।

अयं हि भारते वर्षे सार्वभौमस्य भूपतेः ।
तारापीडस्य तनयश्चन्द्रापीड इहागतः ॥ ५४ ॥
अनेनेह प्रविष्टेन दृष्टेर्विषयवर्तिना ।
भवत्वखिलगन्धर्वकुटुम्बकमहोत्सवः ॥ ५५ ॥
अथ कादम्बरी तस्मिन् पक्ष्मोत्क्षेपविकासिनी ।
आकर्णप्रसृतापाङ्गं चिरं दृष्टिमपातयत् ॥ ५६ ॥
द्वारेण विवृतेनाथ तेनैव निजमाययः ।
मदनोऽन्तः प्रविश्यास्या बबन्ध हृदये पदं ॥ ५७ ॥
रत्नपीठोपविष्टे तु चन्द्रापीडे तदन्तिके ।
अध्यासिषातामेकत्र हंसचित्ररथात्मजे ॥ ५८ ॥
लज्जास्तिमितमासीनामथ कादम्बरीं बलात् ।
महाश्वेता गृहाचारं चन्द्रापीडे व्यधापयत् ॥ ५९ ॥
शरीरनिर्विशेषाथ कादम्बर्याः प्रिया सखी ।
मदलेखाभिधानास्य चरणक्षालनं व्यधात् ॥ ६० ॥
कादम्बरी तु सस्वेदप्रकम्पकरपल्लवा ।
ताम्बूलच्छद्मनात्मानं स्वयमस्मै न्यवेदयत् ॥ ६१ ॥
तदङ्गुलितलस्पर्शमाधुर्यहृतमानसा ।
व्यालक्षयत सा रत्नवलयं प्रच्युतं करात् ॥ ६२ ॥
चन्द्रापीडोऽपि तत्पाणितलसंस्पर्शमात्रया ।
तया त्रिभुवनाधीशमिवात्मानममन्यत ॥ ६३ ॥
तूष्णीमथ तदासीने सर्वस्मिन् कन्यकाजने ।
शुकसारिकयोरासीत् कलहः केलिकारणं ॥ ६४ ॥
तत्प्रसङ्गेन सोत्प्रासं तयोः कलहवृद्धये ।
चन्द्रापीडोऽब्रवीद्येन सर्वास्तुतुषुरङ्गनाः ॥ ६५ ॥
ताश्च दन्तप्रभाधौतदिङ्मुखा मधुरस्वराः ।
चन्द्रापीडगिरो जहुस्तदा कादम्बरीमनः ॥ ६६ ॥
क्षणं प्रविश्य तत् स्थानं मधुरं प्राह* कञ्चुकी ।
राजपुत्र्यो युवां द्रष्टुं देवी निर्विघ्नमिच्छति ॥ ६७ ॥
क्रीडापर्वतके कृत्वा सुतारमणिमन्दिरे ।
चन्द्रापीडं सुखावासमयातां मातुरन्तिके ॥ ६८ ॥
तत्राध्यासितपर्यङ्कं केयूरकपुरःसराः ।
मुख्याः कादम्बरीसख्यश्चन्द्रापीडं सिषेविरे ॥ ६९ ॥
स्नानानुलेपनाहारक्रियाः स तदुपाहृतैः ।

*क्षणमात्रे व्यतीतेऽथ प्रविश्य प्राह इति पाठान्तरम् ।

चक्रे शक्रपुरं प्राप्य विभवैरुपपादिता: ॥ ७० ॥
अथ मन्दप्रभे भानौ भेजे कादम्बरी निजं ।
मदलेखाद्वितीयैव महाप्रासादमस्तकं ॥ ७१ ॥
चन्द्रापीडं च तत्रस्था क्रीडापर्वतवर्तिनं ।
निरवर्णयदाकर्णप्रसृतापाङ्गया दृशा ॥ ७२ ॥
चन्द्रापीडे तदा तस्या: कटाक्षास्तीक्ष्णकोटय: ।
समं निपेतुरस्यां च कुसुमायुधसायका: ॥ ७३ ॥
कटाक्षैरुपनीतं च तीव्रं कृतसमागमै: ।
तल्लावण्यं पीबन्तीव मदलेखामुवाच सा ॥ ७४ ॥
न मया मदनो नाम कथास्वपि सखि श्रुत: ।
अद्य प्रत्यक्षतो दृष्ट: स चन्द्रापीडविग्रह: ॥ ७५ ॥
न महाश्वेतया किंचिदुक्तं प्रकृतवस्तुनि ।
अथवेह्नानयन्त्यामुं सर्वमुक्तमनक्षरम् ॥ ७६ ॥
अपि नाम विकारो मे तदानीं लक्षितस्तया ।
किंवा न लक्षयत्येषाऽदृष्टमन्मथविभ्रमा ॥ ७७ ॥
अद्यापि निजसंकल्पविरुद्धां विक्रियामिमां ।
मनस: संहराम्येव स्थूलामपि यथा तथा ॥ ७८ ॥
किंत्वसौ शेषहारोऽस्यास्तुल्यं मण्डनमाकृते: ।
उरस्यनिच्छतोऽप्यस्य तूर्णमामुच्यतां त्वया ॥ ७९ ॥
मदलेखा गृहीत्वा तं हारं गत्वा तदन्तिकं ।
तथोवाच यथानेन प्रत्युक्ता सा न किंचन ॥ ८० ॥
आमुच्यत तत: कण्ठे हारोऽस्य मदलेखया ।
शरदिन्दुकरोदारप्रभाप्लावितदिङ्मुख: ॥ ८१ ॥
चन्द्रापीडश्च हारेण रराज कृतमण्डन: ।
पूर्णेन्दुरिव नक्षत्रकलापपरिवारित: ॥ ८२ ॥
कादम्बरी चिरं त्वेनमवलोक्य निशागमे ।
प्रासादशिखरात् तस्मान्मन्दं मन्दमवातरत् ॥ ८३ ॥
उत्थाय चन्द्रापीडोऽथ कृतसन्ध्याविधिस्तत: ।
अवालम्बत देहेन शय्यां चिन्तां च चेतसा ॥ ८४ ॥
किं स्वर्गन्धर्वकन्याया विलासा: सहजा इमे ।
अथेमं जनमुद्दिश्य बालां नर्तयति स्मर: ॥ ८५ ॥
दृष्टिर्निपुणदूतीव यथा त्वस्या विचेष्टते ।
तथा संभावना ह्येयं मम चेतसि वर्तते ॥ ८६ ॥
दृश्यते पुष्पितस्तावत् किमनङ्ग इति द्रुम:* ।

* किंनरानुसृतिद्रुमः इति पाठान्तरम् ।

स्वकालपरिणामेन न जाने किं फलिष्यति ॥ ८७ ॥
अथवा यौवनोन्मादकृत एव मम भ्रम: ।
क्व मनुष्या: क्व गन्धर्वा बत किं केन संगतम् ॥ ८८ ॥
आत्मसंभावना चेयमास्तामसदृशक्रमा ।
कालेन व्यज्यते सर्वं कथं नु मम सैनिका: ॥ ८९ ॥
इति चिन्तयतस्तस्य निद्रा सुचिरसंभृता ।
चकार मुकुलाकारे अक्षिणी आ निशात्ययात् ॥ ९० ॥
अपरेद्युरथोत्थाय कृतसन्ध्याविधिक्रम: ।
कादम्बरीमहाश्वेते दृष्ट्वा लब्धे चिरादिव ॥ ९१ ॥
तदनुज्ञासमादिष्टगन्धर्वपरिवारित: ।
स इन्द्रायुधमारुह्य* प्रतस्थे पृतनां प्रति ॥ ९२ ॥
अथ केनाप्युपायेन लब्ध्वा मार्गमसौ निजं ।
संनिविष्टं सरस्तीरे† स्कन्धावारं१ व्यलोकयत् ॥ ९३ ॥
तदा दृष्ट्वा नृपान् सर्वान् मन्त्रिपुत्रं रहस्यसौ ।
स्ववृत्तान्तविदं चक्रे पत्रलेखां विशेषत: ॥ ९४ ॥
निशि तस्यामतीतायामन्येद्युरुदिते रवौ ।
केयूरक: समागत्य हेमकूटादथाब्रवीत् ॥ ९५ ॥
कादम्बरी नरपते त्वामभीक्ष्णं दिदृक्षते ।
विस्मृतं शयनीये च शेषहारमुपाहरम् ॥ ९६ ॥
केयूरकवच: श्रुत्वा संगत: पत्रलेखया ।
चन्द्रापीड: पुनस्तूर्णं हेमकूटमथागमत् ॥ ९७ ॥
अभिवन्द्य महाश्वेतां श्लाघितागमनस्तया ।
कादम्बरीमथापश्यत् पत्रलेखापुर:सर: ॥ ९८ ॥
उद्याननलिनीपार्श्वाकल्पिते हिममन्दिरे ।
कदलीदलशय्यायां निषण्णां म्लानविग्रहां ॥ ९९ ॥
तदालोकनमात्रेण मुहुराश्वासितेव सा ।
तत उत्थातुमिच्छन्ती शयानैवास्त तद्गिरा ॥ १०० ॥
तत: कुशलसंप्रश्नसुखमात्रपविचिता: ।
नानानर्मविलासार्द्रा: प्रावर्तन्त तयोर्गिर: ॥ १ ॥
तथा तत्र चिरं स्थित्वा तदिच्छावशवर्तिनं ।
भङ्गीभणितिभिर्व्यक्तमावेद्य निजमाशयं ॥ २ ॥
तदभ्यर्थनयादिश्य पत्रलेखां तदन्तिके ।
केयूरकद्वितीयोऽसौ जगाम कटकं पुन: ॥ ३ ॥

* इन्द्रायुधं समारुह्य इति पाठान्तरम् ।
१ सेनाम् ।
†—तीर— इति पाठान्तरम् ।

तत्रोज्जयिन्याः संप्राप्तमन्येद्युर्लेखहारकम् ।
अवलोक्य तदानीं तं लेखं स्वयमवाचयत् ॥ ४ ॥
पितुराज्ञां ततो ज्ञात्वा शीघ्रागमनशंसिनं* ।
केयूरककरे न्यस्य तं लेखं कूणितेक्षणः१ ॥ ५ ॥
तदर्थमथ संमन्त्र्य सह मन्त्रिसुतेन सः ।
एवमेतदिति ध्यायन् प्रस्थाने स्थैर्यमग्रहीत् ॥ ६ ॥
सत्यं वच्मि भवत्प्रसादरसिकं चेतो ममैतत् परं
गन्तुं नेच्छति किंतु शासनमिदं नोल्लङ्घनीयं गुरोः ।
मन्युः सम्प्रति सह्यतां पुनरिहागन्तास्मि कादम्बरीं
संदिश्येति सबाष्पगद्गदमसौ केयूरकं प्राहिणोत् ॥ ७ ॥
वैशम्पायनमप्यभाषत भवान् संवाहयन् वाहिनीं
पश्चादेष्यति यामि सत्वरमहं स्वल्पैरितो वाजिभिः ।
निश्चित्येति तथा प्रयाणपटहे दत्ते प्रतस्थे पुरो गत्वा
किंचन चण्डिकाश्रममहीमध्यास्त तस्मिन् दिने ॥ ८ ॥
तत्रोद्भुतद्राविडधार्मिकरूपवेष-
भाषातपश्चरणसिद्धिकथाविनोदैः ।
नीत्वा निशां सततमस्खलितप्रयाणैः
स्वल्पैर्दिनैस्त्वरितमुज्जयिनीमवाप ॥ १०६ ॥

इति कादम्बरीकथासारे पञ्चमः सर्गः ॥ ५ ॥

---

॥ श्रीः ॥

यत्संयोगात् प्रकृतिरनिशं चेतनाभाक् सतोऽपि
कार्यव्रातान् प्रकटयति सा सम्यगालोच्य पूर्वम् ।
यश्चाम्नातः श्रुतिषु विमलः पूरुषो निर्विकारः
सांख्या ज्ञात्वा यमजमगुणं मुक्तिमापुस्तमीडे ॥ १ ॥

इह खलु सांख्यशास्त्रं प्रायेण बौद्धमीमांसकनैयायिकवैशेषिकलोककृतवाक्कलहश्रवणव्याकुलितश्रोत्रैर्व्यग्रचित्तैर्विचारफलं तत्त्वनिर्णयमलभमानैः शमदमादिशिष्यधर्मोपपन्नैस्तत्त्वजिज्ञासुभिः प्रार्थितेनादिपुरुषेण प्रणीतम्। तस्य च लोकेऽतिचिरंतनप्रवृत्तिकस्य विचारशास्त्रस्य बहुभिराचार्यैर्बहुलीकृतस्य केनचित् कारणेनोच्छेदस्तथा जातो यथा तदीया उत्तमग्रन्थाः साचार्या नाम्नापि नाश्रूयन्त । अथ कपिलरूपेणावतीर्णेन तेनैव२ परमदयालुना भगवता लोकोपकारार्थं यावत्स्मृति तस्य क्षीयमाणस्य जीर्णोद्धारः प्राचीनाचार्यमतोपन्यासपूर्वकं सूत्रषडध्याय्या कृतः । तदा प्राचीनः सांख्यशास्त्रग्रन्थः सांख्यतत्त्वसमासाख्यः१ स्थितस्तस्य व्याख्यानान्यपि कपिलसूत्रानुसारेण पश्चात् प्रवृत्तानि । तदिदं कपिलकृतं शास्त्रमस्मिन् देशे विपुलां प्रसिद्धिमासाद्य वर्धमानबुद्धधर्मोपद्रववशादुच्छिन्नप्रच्छन्नं भूत्वा विशीर्यमाणाभिर्व्याख्याभिर्विधृतं यावन्नान्तं गच्छति तावत् तत्सारांशोद्धारकारिकाभिरीश्वरकृष्णेन प्रोद्धृतं वाचस्पतिना तासां कारिकाणां व्याख्यानेन प्रचयं नीतमपि षडध्यायीरूपेण विरलप्रचारमासीत् । अद्य त्वेतत् पुनर्विज्ञानभिक्षुणा भाष्यप्रबन्धरचनया प्रसिद्धिं प्रापितं परिकरभूतप्रकरणग्रन्थावलम्बरहितं विततत्तयाऽव्युत्पन्नजनबुद्धेरगम्यं सांख्यतत्त्वकौमुदीतोऽल्पतरप्रचारं विलोक्यते । तथा च सांख्यशास्त्रं प्रथमे विनिपाते कपिलेन२ द्वितीये विनिपात ईश्वरकृष्णेन तृतीये च विज्ञानभिक्षुणावष्टब्धं व्याख्याय प्रचारितं च । तस्य च प्रसिद्धिः प्रकरणग्रन्थान् विनाऽशक्यैव । अस्माभिर्विषयवशैर्न भवितव्यं विचारपरैर्भाव्यमितीच्छायास्तारतम्यादस्य शास्त्रस्य लोके प्रचारारम्भात् तादृशेच्छाया लोकचित्तेषूत्तेजकाभावेन मान्द्यस्य जातत्वात् तन्मूलकशास्त्रस्यापि प्रचारमान्द्यं कारणानुसारित्वादवर्जनीयमेव ।

तदिदानीं सांख्यशास्त्रे षडध्यायीभाष्यं राजवार्तिकं महादेवकृतवृत्तिरनिरुद्धवृत्तिश्चेत्याकरग्रन्था आकरग्रन्थनाम्नोऽनर्हा अपि तस्मिन् पदे वर्तन्ते । सांख्यचन्द्रिका सांख्यतत्त्वकौमुदी सांख्यसारः सांख्यतत्त्वसमास इति च प्रकरणान्येतच्छास्त्रपाठकजनसंप्रदायप्रसिद्धानि सन्ति ।

शास्त्रे चैतस्मिन् प्रसिद्धपुरुषाः कपिल आसुरिः पञ्चशिखः सनन्दन ईश्वरकृष्णो विज्ञानभिक्षुर्महादेवोऽनिरुद्धो वाचस्पतिरिति नवैव । तत्र सप्तानां ग्रन्था उपलभ्यन्ते ।

आधुनिकास्तु जनाः काव्यकोशव्याकरणन्यायगणितज्योतिषवैद्यकविद्या एव विशेषेणोपासमाना इतराणि सर्वाण्येव शास्त्राण्यवज्ञाय व्यवहरन्ति विशेषेण च सांख्यं तेषां दृष्यातिनीरसं दृश्यत इति । बुद्धिमद्भिस्तु परमादरपुरःसरं तत्त्वज्ञानोपदेशपरं शास्त्रमेतदभ्यस्यत एवेत्यलमतिविस्तरेणेति शिवम् ॥

पौनःपुन्येन नत्वाहं याचे सर्वान् विपश्चितः ।
यदत्रानुचितं किंचित् तत् क्षन्तव्यं दयाधिया ॥ १ ॥

---

* शंसिनीम् इति पाठान्तरम् ।

१ संकोचितनयनः ।

†—:सदृश— इति पाठान्तरम् ।

२ तथा च भागवते प्रथमस्कन्धे । पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयमिति । तथा तृतीयस्कन्धे देवहूतीं प्रति कपिलवाक्यम् । तमिमं ते प्रवक्ष्यामि यमवोचं पुरानघे । ऋषीणां श्रोतुकामानामित्यादि ।

१ अयं कपिलकृत इति भाष्यानुसारिणः ।

२ यथा भागवते । एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा । तं प्रवर्तयितुं देहमिमं विद्धि मया धृतमिति ।

॥ सांख्यशास्त्राध्यापको बेचनरामशर्मा ॥

## RÁMA AND SÍTÁ

### VI.

Weighed down by woe, with wild despairing mien,
There sate the monarch with the cruel queen.
Then RAMA bowed, his royal sire to greet,
And did obeisance at KAIKEYI's feet.
The King with downcast eyes still brimming o'er,
Just murmured, RÁMA; and could do no more.
Then sudden fear made even RÁMA shake,
As though his heedless foot had touched a snake.
How could he look upon that awful change,
And bear unmoved, a sight so sad and strange!
A mighty monarch but an hour ago,
Now a poor mourner, weak and wan with woe:
Weeping and groaning, mad with wildering thought,
Like the deep wave-crowned sea to frenzy wrought.
Like the bright sun-god labouring in eclipse,
Or like a holy sage whose heedless lips
Have spoken falsely. RÁMA's filial breast
Knew for a while the moon-drawn sea's unrest;
And, pierced with sorrow for his father's sake,
To queen KAIKEYI, reverent, he spake:
"Tell me my fault, or plead for me and win
His pardon, angered by my careless sin.
Why is my father, whom I ever find
Most full of love, so silent and unkind?
To what sharp anguish or what care a prey
Weeps he and sighs and turns his face away?
Say, has some grievous woe, some deadly ill,
Stricken his sons, or consorts dearer still?
Better to die than grieve a loving sire:
Death has no terror like a father's ire.
Surely the source to which he owes his birth
Must to a son be as a god on earth
Then speak, O lady, speak, that I may know
What sudden grief has changed my father so"
Thus RÁMA questioned, and the greedy dame
Gave her bold answer, lost to ruth and shame.
"No fault of thine thy father's soul offends;
No deadly stroke upon his house descends.
One wish he fosters, to his heart most dear,
And he would tell thee, but he shrinks in fear.
Thou art so fondly loved, no voice has he
To utter aught but pleasant words to thee
Then hear his wish, and, as a duteous son,
Look that thy father's will be quickly done.
He, though a King, with most unkingly mind
Like a mean caitiff of the lowest kind,
Would stint the honour and the boon deny
He sware to grant me in the days gone by.
Faith, holy faith, whence all our duties spring,
Should ne'er be slighted by our lord the king.
Not e'en in anger, not for thy dear sake,
May he his oath and plighted promise break.
He will not say what promised boon I seek;
Before thy face he will not, dare not, speak.
Do thou but swear his promise shall not fall
Lost to the ground, and I will tell thee all"
She ceased. Then RÁMA, with a troubled breast,
These words in answer to the queen addressed.
"Thou needst not utter words like these to me.
To do his will my highest joy must be
To feed the flames my body I will throw,
Drink deadly poison, if his will be so,
Plunge in the tide if he would have it done,
My sire, my master, and my King in one.
Then speak, O lady; with no doubting heart
The secret longing of my sire impart.
I swear obedience: let my word suffice,
For 'tis not Rama's wont to promise twice"
Then spoke KAIKEYI to the noble youth,
That generous champion of the rights of truth:
"When the Gods, aided by thy father's might,
Waged with the Fiends, of yore, their furious fight,
Wounded by many a dart the monarch fell,
And I preserved the life I loved so well.
Restored by me to health and strength, he sware
To grant two boons, the guerdon of my care,
And these, at length, I crave this day may be
The throne for BHARAT and the woods for thee.
Now if his honour in thine eyes be dear,
Keep his fair fame from stain of falsehood clear
Go to the distant wilderness, and wear
The hermit's mantle and the matted hair;
Nine years and five in the wild forest stay,
That BHARAT may be lord, ordained to-day,
And then this land, rich in each precious thing,
Steed, car and elephant, shall hail him King.
Moved with great pity for thy mournful case,
Thy father cannot look upon thy face;
Come, noble prince, his darling honour save,
And, firm in faith, observe the oath he gave."
The hero answered, tranquil and sedate,
That cruel speech, fell as the doom of fate:
"Fear not, O lady, but thy wish obtain:
My father's faith shall ne'er be pledged in vain.
With hermit's mantle and with matted hair
Forth to the woods, an exile, will I fare.
One thing alone, O queen, I fain would learn,
Why is my lord the King to-day so stern?
Why is he now so silent and so cold,
Without one smile to greet me, as of old?
My greatest joy is ever to fulfil
My King's, my master's, and my father's will;
One only care torments my anxious breast,
Why his own lips have not his will expressed;
Why did he not himself to me make known
His choice of BHARAT for the royal throne.
To BHARAT's hand I gladly would resign
SITA, my life, my gold and all that 's mine.

Unasked, most freely would I give him all:
How much more gladly at my father's call!
How much more gladly, when the gift may be
His pledge's ransom and a boon to thee!
Comfort my father with these words, O dame,
And free his spirit from the load of shame.
But tell, I pray thee, why the monarch keeps
His sad eyes fixed upon the ground, and weeps.
Let swiftest heralds, ordered by the king,
Home from thy brother's house thy BHARAT bring.
To judge my father's words I will not stay,
But seek the forest ere the close of day;
There live, a banished man, four years and ten,
Keeping the promise of the king of men.
"'Tis well," she answered. "Let the herald speed,
Carried by coursers of the fleetest breed,
And bring my BHARAT home. Methinks that thou
Wilt brook no tarrying, nor linger now.
And if the king, o'erwhelmed with shame, could find
No tongue to tell thee, bear not this in mind.
But, best of youths, until thou hence art fled,
Thy sire will neither bathe nor call for bread."
"Woe! woe!" the monarch murmured, with a groan,
Deep neath the waves of whelming anguish thrown,
Then in exceeding grief he swooned away,
And on the gold-wrought couch all senseless lay.
Then RÁMA raised him, while KAIKEYI's tongue
Still urged him, like a horse by lashes stung.
Unmoved he answered: "Queen, I strive to do
My duty only, like the sages, true;
Nor would I, with a soul athirst for gain,
Against my promise, in the world remain.
All I can do to please my father, think
Already done: from death I would not shrink.
One duty, paramount of duties still,
Is that a son should do his father's will.
By him unbidden, if the word thou give,
Will I an exile in the forest live.
Couldst thou no virtue in my nature see
That thou must crave of him, not ask of me?
This day I go in DANDAK's wilds to dwell,
First to my mother I must bid farewell,
And comfort SITA. Thine the charge must rest
That BHARAT listen to his sire's behest,
And keep the kingdom happy and secure:
This is the law of old that ever shall endure."
In speechless woe the hapless father heard,
Wept with a bitter cry but spoke no word.
Then bowing at the senseless monarch's feet,
And stern KAIKEYI's, for such love unmeet,
Once round the pair his circling steps he bent,
Then from the bower the glorious exile went.
Him followed LAKSHMAN, sweet SUMITRA's child,
With angry weeping eyes so sad and wild
And RÁMA saw, nor turned his eyes away,
The sacred vessels ranged for that great day,
And golden chalices, whose waters poured
Upon his head would have ordained him lord.
He saw, and round them in due honour paced,
His eye no anguish showed, his foot no haste.
Still on his brow, with lofty hope o'erthrown,
Shone the great glory which was all his own;
So doth the moon, through the world's love, retain
Delicious splendour in the days of wane.
The banished hero, with untroubled mind,
The white umbrella and rich fans declined,
Dismissed the crowd that followed from afar,
And all his people with the steeds and car
He came with LAKSHMAN to KAUSALYA's gate,
Thronged by her servants with high joy elate,
And moved with tender pity spared to show
One hint or token of the coming woe.
On to his mother's splendid bower he went,
And found the queen on holy rites intent:
There oil and rice and brimming vases stood,
With wreaths of flowers and curds and cates and wood.
She with her thin cheek pale with many a fast,
And many a night in painful vigil past,
In linen robes of purest white arrayed,
To LAKSHMI, Queen of Heaven, her offerings made.
Soon as she saw the darling of her soul,
As a fond mare who springs to meet her foal,
To greet her son, unseen so long, she flew,
And round his neck her tender arms she threw:
"May all the glories of thy royal line,"
She cried, with kisses on his brow, "be thine.
Be wise and mighty like thy sires of old,
Be good and noble, pious, lofty souled.
This day thy father's faithful love is shown,
This day he sets thee on his ancient throne."
Then answered RÁMA, "Dearest lady, know
That danger threatens, fraught with mighty woe.
My father's choice this day makes BHARAT heir,
And I must hence to DANDAK's wood, and there
Living on fruit and honey, hermit's food,
Pass twice seven dreary years in solitude."
Swift as a Sal branch, by the woodman lopped
In some primeval grove, the lady dropped
And lay upon the ground: so falls a mare
Beneath the load she strives in vain to bear.
And RAMA raised her up, and brushed away
The dust that on her arms and shoulders lay.
Then, sad with grief—Ah! far more worthy she
For ever joyful, ever blest, to be—!
While LAKSHMAN listened, to her son she cried,
That noblest hero, standing by her side:
"A grief more sore than this I ne'er could mourn
If thou hadst never, O my son, been born;
Yet, well I know. their childless fate, to those
Who pine for offspring, is the crown of woes.

अस्तु देह एवात्मा न तत्रेमौ दोषौ प्रसज्येते । मैवम् । ज्ञाता ह्यात्मा नच देहस्य ज्ञातृता संभवति । नेति ब्रूमः । भूतान्तरसहितस्य भूतान्तरस्य कार्यारम्भकतेति वदामः । न पुनर्मिथोऽपि भूतानि न संयुज्यन्त इत्याचक्ष्महे । अतः संयुक्तभूतानां गुणान्तरोपलम्भो नानुपपन्नः । कथं पुनरारम्भकत्वसंभवः । न तावत् पञ्चानां चतुर्णां वा संभूयारम्भकत्वं संभवति । चाक्षुषाचाक्षुषद्रव्यारब्धस्य तत्समवायिनोऽचाक्षुषत्वापत्तेः । यत् खलु चाक्षुषाचाक्षुषद्रव्यारब्धतत्समवेतं तन्न चाक्षुषं वायुवनस्पतिसंयोगवत् । चाक्षुषश्च देहः । अतो न पञ्चभिश्चतुर्भिः समारब्धः । आकाशानिलयोरचाक्षुषत्वात् । कथं पुनरचाक्षुषं नभः । अचाक्षुषस्य सत्तापि किंप्रमाणिकेत्येतदपि चिन्त्यम् । उच्यते । न चाक्षुषं व्योम द्रव्यत्वे सत्यरूपत्वात् । ननु नारूपं गगनं । तद्धि धवलमुत्पलपलाशश्यामलं चोपलभ्यते । उच्यते । धवलिमा हि प्रायेण तैजस एव नीहारे तौहिनोऽपि वा तदपगमे तदनुपलम्भात् । यः पुनर्निशि नीलिमेवावलोक्यते नासौ नभसः । कस्य तर्हि न कस्य चित् । कथं पुनर्गुणो न कस्य चित् । सत्यं । गुण एवायमप्रसिद्धः । ननु प्रतीतिबलेन सिद्ध एव । सिध्येद्यदि प्रसिद्धिरेव सिध्येत् । सा तु कारणाभावान्न सिद्धा । ननु चक्षुरेव कारणं । न । आलोकोपकारानपेक्षस्य चक्षुषोऽप्रकाशकत्वात् । तेनाप्रतीतावेवायं प्रतीतिभ्रमो मन्दानाम् । अत एव दिवानुपलम्भः । अन्यथा सौरीभिर्भाभिरनुगृहीतं चक्षुः स्फुटतरं व्योम्नि नीलिमानं प्रकाशयेत् । रूपं च स्पर्शसहचरितमिति स्पर्शवत्त्वं नभसः स्यात् । ततश्च सर्वमूर्तद्रव्यप्रतिघातप्रसङ्गः ।

केचित् तु तमसो नीलिमा गगनस्येवोपलभ्यत इत्याहुः । तदसदित्येके । तमसो निष्पत्त्यनवक्लृप्तेः । रूपवत्त्वेन हि तमो द्रव्यं स्यात् तच्चानेकद्रव्यारब्धं सच्चाक्षुषं भवेत् । नच तानि द्रव्याणि सन्ति सन्ति चेद्दिवाप्यारभेरन् । अन्धानामिव नीलिमाभिमानो नभस एवेत्युक्तं ।

यच्चेदमुच्यते छायैव तमः सा चलत्वाचलत्वमहत्त्वामहत्त्वदूरत्वासन्नत्वादिगुणयोगिनी वस्तुभूतेति । तदिदमप्यसारम् । अनवक्लृप्तेरेव । यच्चलाचलत्वादिकमुपन्यस्तं तदपि स्थूलदर्शितया । तथाहि । आलोकेऽपवारिते छायाप्यपेयते । ततोऽपवारितालोकभूभागादिभावव्यतिरेकिणी न रूपान्तरवच्छाया दृश्यते । तेन मन्यामहे व्यपवारितालोकभूभागादिकमेव छायेति । एतेन महत्त्वामहत्त्वदूरत्वासन्नत्वादीनि समर्थितानि । यत्तु तेजःप्रतिरोधि द्रव्यं तद्यथा यथा संचरति तथा तथालोकः प्रतिमुच्यते प्रतिरुध्यते चेति चलतीव छाया प्रतिभाति । अन्यथा शरीरेऽपि चलति किमिति छायापि चलेत् । हेत्वभावात् । एतेन चलति शरीरे चलत्वं व्याख्यातं । संख्यापरिमाणप्रचययोनि हि महत्त्वं तदभावे कथमिव छायायामुपपत्स्यत इत्यलमनया स्थूलदर्शनकथया नवबद्ध्या । ननु भूभागादेरेव छायात्वे कथं द्रव्यान्तरेणापदेशः । अस्येयं छायेति । अपवारितालोकभूभागादिरेव छायेत्युक्तं । तत्र येनापवारणं तदपेक्षत्वादुच्यते व्यपदेशः । एवं च स्मृतिकाराणामपि नाक्रामेत् क्रामतश्छायामित्येवमादिव्यवहार उपपन्नः । योऽपि च शास्त्रकाराणां व्यवहारश्चित्रगृहादीनां तुल्यं छायालक्षणं कार्यमिति सोऽप्यालोकापवारणाभिप्रायेण वर्णनीयः । न त्वालोकापवारणे भूभागादेरेव दर्शनप्रसङ्गः । मैवम् । प्रचुरतरालोकावयवसंयोगस्तत्र वार्यतेऽल्पशस्तु तेजोऽवयवाः समन्ततः संचरन्तः संयुज्यन्त एव । यत्र तु सर्वथा तेषामसंयोगः स महानन्धकार इति निरवद्यं । यश्च विस्फारिताक्षे रूपादिषु विवरमध्यवमीक्षत इत्युच्यते तत्रापि तेजोऽवयवास्ते रूपनैर्मल्याच्छेदास्तथा प्रतीयन्त इत्युक्तम् । नचैवं सत्याकाशस्यासिद्धिरेव । शब्दलक्षणगुणानुमानसिद्धत्वात् । ननु गुणतैव शब्दस्यासिद्धा द्रव्यत्वेन वादिभिरभ्युपेतत्वात् । यदाहुः ।

वर्णात्मकाश्च ये नित्याः शब्दाः सर्वगतास्तथा ।
पृथग्द्रव्यतया ते न तु गुणाः कस्य चिन्मताः ॥

इति । तदिदमसारम् । एकेन्द्रियप्रत्यक्षतया रूपादिवद्गुणत्वसिद्धेः । नच वायुनाऽनैकान्तिकता । तस्य वायोरतीन्द्रियतयाभ्युपेतत्वात् । येऽपि चैन्द्रियकं वा वायुमिच्छन्ति तेषामपि स्पर्शविरहे सतीति विशेषणोपादानाददोषः । एवं सिद्धगुणभावः शब्दो गुणिनमनुमापयति तत्र भूजलादिभावावगमकारणाभावाद् द्रव्यान्तरमेव तदवतिष्ठते । अप्रतीतसामानाधिकरण्यगुणभेदेन भेदानवगमात् । ननु मुखादिगतः शब्द उपलभ्यते । नेत्युच्यते । प्राप्यकारि श्रोत्रं । बहिरिन्द्रियत्वात् । कायेन्द्रियवत् । तत्र न तावच्छ्रोत्रं मुखादिदेशं गच्छति प्रत्यक्षा हि कर्णशष्कुली स्वदेशस्था दृश्यते । नापि मुखं श्रोत्रदेशमुपसर्पति तस्यापि स्वदेश एवोपलम्भात् । अतः श्रोत्रगत एव शब्दो गृह्यते । भ्रान्तिस्त्वेषा मुखे शब्द इति । नच गुणभूतस्य शब्दस्य संयोगलक्षणप्राप्तिरुपपद्यत इति समवाय एव तस्य प्राप्तिः । एवं शब्दगुणत्वाच्छ्रोत्रस्य । यत्तु शब्दगुणकं द्रव्यमाकाशपदावेदनीयं तदेव श्रोत्रमिति सिद्धं । ननु पार्थिवी कर्णशष्कुली श्रोत्रमस्तु । संयुक्तसमवायेन चाकाशगतं शब्दमुपलभतां । नैतदेवं । न हि साक्षात् प्रतीतिसंभवे प्रणालीसंश्रयणमुपपन्नं । नापि द्रव्यात्मकशरीरं गुणान्तरप्रादुर्भावापत्तेः । भूजलतेजांसि हि यथाक्रममनुष्णाशीतशीतोष्णस्पर्शानि । तैरारब्धं द्रव्यमेतत्त्रयविलक्षणस्पर्शमापद्येत चित्रपटवत् । यथा सितासितादितन्तुसमारब्धः पटस्तन्तुरूपविलक्षणरूपस्तथा शरीरमप्यारम्भकद्रव्यस्पर्शविलक्षणस्पर्शं भवेत् । अनुष्णाशीत-

स्पर्शौ चैतदुपलभ्यते । एतेनाध्यात्मिकतापि निषिद्धा । किंच । गन्धस्य पार्थिवद्रव्यसमवेतस्यैकाकिनो गन्धान्तरारम्भकत्वानुपपत्तेरगन्धं शरीरं स्यात् । भूतेजसोरप्तेजसोरारम्भकत्वेऽरसत्वमगन्धत्वमेवं वेदितव्यम् । अतो रूपस्पर्शगन्धयोगि शरीरं पार्थिवमेव । ज्ञानं च विशेषगुणः कार्यद्रव्ये च विशेषगुणः कारणगुणपूर्वक एव रूपादिवत् । नच कारणभूतेषु पार्थिवेषु ज्ञानमस्ति । तदारब्धे द्रव्यान्तरे घटादावदर्शनात् । स्यादेतत् । मदशक्तिवच्चैतन्यमधीति । यथा मदशक्तिः पार्थिवेष्वणुष्वसत्यपि तदारब्धे द्रव्ये सुराख्ये निष्पद्यते तथा चैतन्यमपि निष्पत्स्यत इति । तच्च । शक्तेरविशेषगुणत्वात् । शक्त्याख्यो हि गुणः सर्वत्र द्रव्येषु तत्तत्कार्यविषयः कार्यसमधिगम्योऽभ्युपगम्यते । चैतन्यं तु न देहादन्यस्य विद्यत इति विशेषगुणोऽसौ । अपिच द्रव्यान्तरसंयोगादकार्यभूतेषु पार्थिवाणुष्वकारणपूर्वोऽपि मदशक्त्याख्यो गुणो नानुपपन्नः । तदारब्धे सुराख्ये कार्यद्रव्ये कारणगुणपूर्व एव । चैतन्यं तु न प्रत्येकं परमाणुष्वभ्युपगम्यते । तस्माच्छरीरादन्यस्य गुणो ज्ञानमिति देहव्यतिरिक्तपुरुषानुमानं । स्यान्मतं । गुणत्वमेव ज्ञानस्याप्रसिद्धमिति । तच्च । द्रव्याश्रयत्वेन द्रव्याश्रयसंयोगविभागौ प्रति निरपेक्षकारणत्वाभावेन च गुणत्वसिद्धेः । नच वाच्यं द्रव्याश्रयत्वमेवासिद्धमिति । कार्यत्वात् । न हि कार्यं किंचिद्द्रव्यानाश्रितमात्मानं लभते । एवं सुखादिभ्योऽपि देहातिरिक्तपुरुषानुमानं वेदितव्यं ।

नैतदेवम् । घटमहं जानामीत्यहंकारास्पदस्य दृष्टत्वादहं गच्छाम्यहं स्थूल इत्यादौ चाहंकारस्य शरीर एव प्रवृत्त्यविवादाच्छरीरमेव प्रत्यक्षं ज्ञातृ प्रतीयते । प्रत्यक्षविरोधे चानुमानमात्मानं न लभत इति वैशेषिको गुणो ज्ञानं न कारणगुणपूर्वकमिति पार्थिवपरमाणुष्वविद्यमानमपि शरीरे संभविष्यतीति न शरीरादन्यस्यानुमानं । ननु शरीरचैतन्ये मृतशरीरेऽपि तत् स्यात् । न । तस्य वायुगुणत्वात् । मरणेन शरीरं विगुणमित्यविवादं । ननु ममेदं शरीरमिति देहातिरिक्तमहंकारो निविशते । न । अभेदेऽपि भेदावगमोऽयं शिलापुत्रशरीरवत् । अन्यथा ममात्मेत्यपि व्यपदेशादात्मान्तरमपरमाश्रीयेत । येऽपि च सुखादयस्ते चाहं सुखीत्यहंकारविषयसंविद्विषयतयावगम्यमानाः शरीरसमवायिन एव । अतो न तदतिरेकिणमात्मानमनुमापयितुमीशते । शरीरविकारहेतुत्वाच्च तेषां सुतरां शरीरगुणत्वं । न ह्यन्यगुणो गुणिनं विकर्तुमुत्सहते । विक्रियते हि शरीरं नयनविकारमुखप्रसादरोमहर्षादिभिः । सुखादिषूत्पन्नेषु शरीरे विकारं प्रति समवायिकारणभूते तत्प्रत्यासन्नेनैवासमवायिकारणेनापि भवितुं युक्तं । नच शक्यते वक्तुं सुखादिमदात्मसंयोग एव शरीरसमवेतविकारेष्वसमवायिकारणमस्त्विति । प्रमाणाभावात् । सिद्धे ह्यात्मनि स्यादेषा कल्पना । साध्ये त्वव्यवहितानामेव कारणतोचितेति न देहातिरिक्तानुमाने सुखादीनां हेतुत्वम् ।

अत्रोच्यते । स्यादेतदेवं यदि देहातिरिक्तो नोपलभ्येत ज्ञाता । घटमहमुपलभ इति घटस्यानुभविता शरीरातिरिक्तः प्रतिभासते । शरीरं हि करचरणाद्यनेकावयवयोगि । नच घटाद्यनुभवसमये तस्यावभासोऽन्वयी । अवश्यं ज्ञातुरवभासो मेयानुभवेष्वनुवर्तेत इत्यास्थेयम् । अन्यथा स्वपरसंवेद्ययोरनतिशयः । अहं गच्छामीति प्रतिपत्तिसमयेऽपि प्रत्येता शरीरातिरिक्तः प्रपत्तृमात्रस्वभावो गन्ता देहं प्रतिपद्यमानः प्रतीयत एव । लाक्षणिकोऽहंशब्दानुविद्धस्तु शरीरे प्रत्ययः । ममात्मेत्यत्रापि लाक्षणिकः शरीर एव ममकारः । यस्तु चेतनस्तत्रास्मच्छब्दो मुख्यः । नच शरीरं चेतनं । चेतनासमवायाभावात् । शरीरातिरिक्तवस्त्वन्तरसमवायिनी हि चेतना चकास्ति । नन्वात्मधर्मभूता चेच्चितिस्तर्हि विषयासंस्पर्शिनी कथं प्रति विषयं विभज्यते । उच्यते । प्रतिभाससिद्धा तावच्चेतनसमवायिनी चितिरनागतातीतसमवेदने व्यक्तमविषयाश्रितत्वं प्रतिकर्मप्रविभागस्तुल्यव्यवहारानुगुणत्वाच्चितेः । यद्व्यवहारानुगुणा या चितिस्तदीयासौ व्यपदिश्यत इति न किंचिद्धीनं । नन्वेवं प्रथमदर्शनेऽपि देहव्यतिरेके सिद्धेऽन्येद्युर्दृष्टे परेद्युरहमिदमदर्शमिति प्रत्यभिज्ञोपन्यासोऽनर्थक एव । उच्यते । व्यतिरेकसिद्धावपि स्थिरतया क्रियावत्त्वसिद्धये प्रत्यभिज्ञोपन्यस्ता । अस्थिरत्वे हि तत एव कादाचित्ककार्यसिद्धेस्तत्सिद्धये न क्रियानुमानं क्रमते । अक्रियस्य कर्तृत्वं भोक्तृत्वं चानुपपन्नं । कर्ता भोक्ता च यज्ञायुधवाक्येनेवाक्षिप्तः समर्थयितव्य इत्युपयुक्तः प्रत्यभिज्ञोपन्यासः । यदा चायमात्मा प्रत्यभिज्ञायते तदासौ चिदात्मा तस्य धर्मः । नासौ तन्मात्रप्रभवः कदाचिदुदियात् । सदा संनिहितकारणं हि कार्यमकादाचित्कं भवेत् । कारणासंनिधाननिबन्धो हि कार्योदयप्रतिक्षेपः । तस्मादयमात्मा समवायिकारणभूतः किंचिदसमवायिकारणभूतमपेक्षते । तत्र केचिन्मननलक्षणं व्यापारान्तरं तत्समवेतमेवासमवायिकारणमाहुः । तदनुपपन्नमिति मन्यामहे । यतस्तस्यापि किंचिदसमवायिकारणमनुसरणीयं । तच्च वरं चितेरेवास्तु । तच्चात्ममनःसंनिकर्षाख्यं । तस्य चासमवायिकारणं मानस एव परिस्पन्दः । तस्याप्यात्ममनःसंनिकर्षान्तरमात्मसमवेतं प्रयत्नमदृष्टं चापेक्षमाणमसमवायिकारणं । प्रयत्नादृष्टयोश्चात्ममनःसंनिकर्षान्तरमेवेत्यनादिरेषा कार्यकारणपरंपरा बीजाङ्कुरवदिति वेदितव्यं । मनसोऽभ्युपगमे च सकलात्मगुणोदय एव प्रमाणं । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नादृष्टसंस्काराणां नवानामपि वैशेषिकगुणानां मनःसंयोगेनैवोत्पत्तेः । तत्र बुद्धिः स्वसंवेदनसिद्धा प्रमितिस्मृतिरूपा । सुख-

दुःखेच्छाद्वेषप्रयत्नास्तु मानसप्रत्यक्षवेद्यानि। नच दुःखाभावमात्रं सुखं। दुःखाभावस्य दुःखानुपलम्भरूपत्वात्। तद्वियुक्तात्मन उपलब्धेरेव दुःखानुपलम्भरूपत्वात्। आत्मोपलम्भातिरिक्तसुखोपलम्भानुभवाच्च। संस्कारस्य तु स्मृतिलक्षणमेव कार्यमवगमकमनुभूतविषय एव स्मृतिर्भवतीत्यनुभवाधेयं कंचिदात्मनोऽतिशयमुपकल्पयति। अदृष्टं तु धर्माधर्मलक्षणमागमगम्यमेव। नच केवलादात्ममनःसंनिकर्षादेव रूपाद्यवगमः। अन्धादीनामभावादिति चक्षुरादिबहिरिन्द्रियाण्यङ्गीक्रियन्ते। पञ्चधा च बाह्यरूपाद्युपलम्भलक्षणकार्यव्यवस्थानात् पञ्च चक्षुरादीनि कल्प्यन्ते। एवंप्रभृतीनि षडिन्द्रियाणि यस्मिन्नायतन्ते तदिन्द्रियायतनं शरीरं जरायुजाण्डजसंस्वेदजभेदभिन्नं त्रिविधं। उद्भिज्जं शरीरं न भवत्येव। इन्द्रियायतनत्वे प्रमाणाभावात्। यदि श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवित इति निषिद्धफलत्वस्मरणादुद्भिज्जं शरीरमवतिष्ठते तदप्यनुपपन्नम्। अस्मिन्नंशे प्रमाणाभावात्। स्मृतेर्विमूलतया मुख्यार्थत्वानुपपत्तेः। नच वेद एव मूलमवकल्पतेऽकार्यार्थत्वात्। नचात्र विधिनिषिध्यमानानुष्ठानात् प्रत्यवाय इत्यवगमकः। यद्यपि शंय्वधिकरणसिद्धान्तालोचनया निषिद्धादपि कुतश्चित् प्रत्यवायोदयस्तथापि वृक्षादिरूपशरीरफलतावसातुं न शक्यते। फलतयान्वयायोग्यत्वात्। यस्य ह्यन्वययोग्यत्वमवधारितं तस्य वाक्यार्थानुप्रवेशित्व यस्य त्वन्वययोग्यत्वाभावस्तस्य वाक्यार्थानुप्रवेशित्वमपि नास्ति। वह्निना सिञ्चेदितिवत्। यो वेदे तथाभूतार्थप्रयोगः स गौणेनार्थेन लाक्षणिकेन वा वर्णनीय इत्यत्रापि गौण्या लाक्षणिक्या वा वर्णनीयमिति त्रिविधमेव शरीरं। यत् पुनरपार्थिवमयोनिजं शरीरं केवलधर्माधिपत्यनिबन्धनं कैश्चिदभ्युपगम्यते तत् सर्वशरीराणां पार्थिवत्वाव्यभिचारान्नानुमातुं शक्यते। सर्वशरीरेषु मनस्त्वक्त्वाविशिष्टमिन्द्रियद्वयं। मनश्चान्तःशरीरं परमाणुपरिमाणं। तत् खलु द्रव्यभूतं संयोगगुणभागितयेष्यते। द्रव्यं च द्विविधम्। अनेकद्रव्यमद्रव्यद्रव्यं चेति। तत्र मनसोऽनेकद्रव्यत्वे कल्पनागौरवम्। आरभ्यारम्भकद्रव्याभ्युपगमप्रसक्तेः। अद्रव्यद्रव्यत्वाभ्युपगम आत्मना सह संयोगापह्नवः। न हि परममहतोरनवयवयोश्च संयोगोपपत्तिः। त्रिविध एव संयोगः। अन्यतरकर्मज उभयकर्मजः संयोगजश्चेति। तस्मात् परमाणुपरिमाणं मनः। तच्च सदकारणत्वान्नित्यमाशुतरसंचारि च तत्। आशुतरेन्द्रियाधिष्ठानदर्शनात्। न हि तदधिष्ठितमिन्द्रियं स्वविषयमवसाययितुमलम्। अन्यत्रासक्तचित्तस्य विषयान्तराप्रतीतेः। तस्य च मनसोऽनादिधर्माधर्मापेक्षः क्षेत्रज्ञेन सह संयोगः। देहान्तरसंयोगश्च तस्यादृष्टापेक्षादात्ममनःसंनिकर्षादुत्पन्नस्य कर्मणः प्रसादेन। सोऽयमात्मा भोक्ता भोगायतनं शरीरं भोगसाधनानीन्द्रियाणि भोग्याः सुखादय आन्तरा बाह्याश्च पृथिव्यादयश्च भुक्तिश्च वेदनेति पञ्चसु विधासु तत्त्वं परिसमाप्यते। केन पुनरस्य प्रमाणेनात्मनः प्रमितिः। अप्रमीयमाणस्य सत्तोपगमो निर्निबन्धनः। तत्र केचिदाहुः। मानसं प्रत्यक्षं सुखादिष्विवात्मनि प्रमाणमिति। तदयुक्तमिति प्राभाकरवराः। न ह्येकस्य कर्तृत्वं कर्मत्वं च स्वापेक्षमुपपद्यते। स्वात्मनि क्रियावृत्तिविरोधात्। नचाहंसंविद्वशेनाविरोधः। स्वयंप्रकाशत्वेन विषयप्रतीतिगोचरत्वेनापि तदुपपत्तेः। विषयैः सहोपलम्भनियमश्चैवं सत्युपपन्नः। अन्ये मन्यन्ते। प्रकाशाय हि प्रमाणमप्रकाशस्वभावेषु विषयेष्वपेक्ष्यते। प्रकाशस्वरसे त्वात्मनि प्रकाशापेक्षा मुधैव संवित्तिवत्। प्रमाणफलभूता संवित्तिरवश्यं स्वयंप्रकाशाभ्युपगमनीया। अन्यथोत्पन्नायामपि तस्यां विषयाणां विदितत्वावेदने विदितत्वव्यवहारो न स्यात्। नच वाच्यं व्यवहारयोग्यतैव विषयेषु पुरुषस्य संवित् सा व्यवहार उत्पन्ने फलेनानुमीयत इति। यतो व्यवहारप्रवृत्तेरपि पुरस्ताद्विदितत्वं विषयाणामनुसंधीयत इति सर्वजनसमवेतमेतत्। नापि मानसप्रत्यक्षसमधिगमनीया संवित्। स्वयंप्रकाशेनाप्युपपत्तौ सत्यां तत्कल्पनायां प्रमाणाभावात्। विषयेषु स्थायिषु स्वयंप्रकाशेष्वभ्युपगम्यमानेषु स्वापादिदशाः पुरुषाणामनुपपन्नाः स्युः। संविदि तु स्वयंप्रकाशायां नैष दोष आपद्यते। स्वापादिषु तस्या एवासत्त्वात्। विषयास्तु प्रत्यभिज्ञाबललभ्यस्थेमानः पुरुषाणां स्वापादिदशास्वपि न सन्तीति न शक्यमभिधातुं। ततस्ते परायत्तप्रकाशाः। संवित्तिस्तु स्वप्रकाशेति सिद्धो दृष्टान्तः। प्रकाशायत्तोऽस्य सत्तोपगमो न प्रमाणायत्तः। एवं च तुरीयेऽपि प्रकाशो नोपरमते। अत एव च मोक्षस्य पुरुषार्थता। अन्यथा विच्छिन्नसकलोपलम्भनात् स्वापादविशिष्टः पुरुषैर्नेष्येत। एतदपि प्रामाणिका न साध्वित्याहुः। स्वरसप्रकाशत्वे पुरुषस्य जाग्रत्स्वप्नतुरीयेष्विव सुषुप्तेऽपि प्रकाशापत्तेः सुष्वापस्ताभ्यो न भिद्येत। न हि स्वारसिकस्योच्छेद आवरणं संभवति। यत् त्विदं केन चित् प्रलप्यते पार्थिवानामणूनां श्यामत्वं पाकपद्धावेदनीयेनाग्निसंयोगेन निवर्तत इति। तदसत्। अकृतकं सर्वमविनाशि दिगादिवत्। अकृतकश्च श्यामिमा पार्थिवानामित्यनुमानमस्तत्वाचादरणीयम्। स्वारसिकता च पार्थिवानामणूनां श्यामतया न सिद्धा। लौहित्यस्येव तस्यापि पाकजत्वोपगमात्। सदकारणत्वमेव नित्यत्वम्। अकारणमपि चेदनित्यं न नित्यलक्षणं क्वचिदवशिष्यते। तत्त्वविदस्त्वाचक्षते। नात्मा विषयाननुविद्धोऽवभासते नच विषया बोद्धर्यनवभासमाने भासन्त इति तावत् सिद्धं। तत्र यदेतद्विषयेषु प्रमाणं तज्जनितैव या संवित् सा पुरुषं विषयांश्च विषयीकुर्वन्ती समुदीयते।

तत्संवित्तिफलभागित्वेऽपि पुरुषस्य न कर्मता किंतु कर्तृतैव गन्तृवत्। यथा गमनफलसंयोगिनो गन्तुर्न कर्मता किंतु कर्तृतैव तथा बोद्धुरपि वेदितव्यं । परसमवायिक्रियाफलयोगि कर्मेति कर्मज्ञाः । अत एव कर्मत्वकर्तृत्वे नात्मनः संभवतः । अत एव च सहोपलम्भनियमोऽपि विषयविषयवित्तीनामुपपन्नः। एवं च विषयवित्तिगोचरत्वादात्मनो विषयवेदनोपायोपरमे स्वापादिष्वप्रकाशो युक्त एव पुरुषस्य। तुरीयेऽपि संभूतसकलोपलम्भोपाय आत्मा सन्मात्रतयैवावतिष्ठते । नच मोक्षस्यापुरुषार्थता । सांसारिकविविधदुःखोपरमरूपत्वान्मोक्षस्य। दुःखोपरमो हि पुरुषैरर्थ्यते । न चेदं युक्तं। यथा निखिलदुःखोपरमरूपत्वात् पुरुषार्थत्वं तथा सकलसुखोच्छेदहेतुरूपत्वादपुरुषार्थतापीति । यतः सांसारिकं सुखं विवेकिनः साधनपारतन्त्र्यलक्षणया क्षयितालक्षणया च दुःखतया कवलितं दुःखमेवेति मन्यमाना नान्यं तमाद्रियन्ते विवेकिनः। एवं मोक्षायोत्तिष्ठते । एवं च परमानन्दताभ्युपगमोऽपि मन्दफल एव । नच प्रमाणमपि तत्रैवावकल्पते । श्रुतीनां सिद्धवस्तुबोधकत्वाभावात् । प्रत्यक्षविरोधश्च । नच संसरन्तस्तथाविधमानन्दमनुभवन्ति । नचाभिभूततयाननुभवः । स्वारसिकस्य स्वप्रकाशस्यानन्दस्याभिभवायोगात् । नच प्रेमास्पदतया आत्मन आनन्दतासिद्धिः । आत्मनि प्रेमासिद्धेः । शरीरोपघाते हि दुःखोदयात् तदुपघातपरिहारं सर्वे प्रार्थयन्त इत्यात्मनि प्रेमाभिमानः । किंच संसारिणां स्वारसिकः परमपरमानन्दो नानुभूतपूर्व इति कथं निर्बन्धनमात्मनि प्रेम । अतो विषयविशेषसंभोग एवानन्द इति सुन्दरं । मोक्षस्तु सांसारिकदुःखोपशमात् पुरुषार्थ इति पुष्कलं ।

कः पुनरेष मोक्षः । अविद्यास्तमय इति केचित् । एवमेवाद्वितीयमसंसृष्टं सकलोपाधिपरिशुद्धं ब्रह्म तदनाद्यविद्यावशेन शरीरादिसद्वितीयमिवोपाधिकलुषितावभासमानं लब्धजीवव्यपदेशं सद्बद्धमिव कल्प्यते । अतोऽनाद्यविद्यैव संसारो निखिलविकल्पातीतपरिशुद्धविद्योदयात् तदस्तमय एव मोक्षः। तदिदं श्रद्धाविजृम्भितमिति प्रमाणपरतन्त्राः । न खल्वद्वैतं कस्य चित् प्रमाणस्य गोचरः। स्यान्मतं। प्रत्यक्षमेव विधिमात्रोपक्षीणव्यापारमपरिस्पृष्टान्योन्यभेदं तदेकमेव तत्त्वं साक्षात्करोतीति । तदसत् । सत्यं विधायकमेव प्रत्यक्षं। तत्तु विदधदपि स्वरूपं रूपतया रसं च रसतया विदधाति न पुनः सर्वमेकरूपमेव । यथा रूपे तद्धारावाहिनी बुद्धिस्तथाभूतैव यदि रसेऽपि स्यात् तदा भवेदेव प्रत्यक्षेण साक्षात्कृतमद्वैतं । न त्वेवमेतदिति सर्वप्रतिपत्तृस्वसंविदितं। यच्च प्रमेयविकल्पेन सामान्यमेव वस्त्विति स्थापयित्वा सत्तया महासामान्यरूपत्वात् तावन्मात्रमेव तत्त्वमिति साधितं तदपि गगनग्रासकल्पं। सत्यं न विशेषमात्रमेव वस्तु सत्यं च सामान्यविशेषात्मकं वस्तु नास्ति किंतु सामान्यविशेषावन्योन्यसंबद्धौ द्वे वस्तुनी । यथा च तत्राभावेष्विह प्रत्ययो नास्तीति तथा जातिप्रकरणे निर्णीतं। अथागमादेवाद्वैतं सिध्यति । तन्न । आगमस्य कार्यैकविषयतया सिद्धे तत्त्वे प्रामाण्यानुपपत्तेः। अपिच वाक्यार्थे आगमः प्रमाणमिष्यते। तच्चानेकपदार्थात्मनि वाक्यार्थे धियमुपजनयत् कथमद्वैतमवभासयेत् । अथेदमुच्यते स एष नेति नेतीति सकलोपाधिनिषेधेन नानाभूतवस्त्वन्तरापाकरणादद्वैतमागमेन साध्यत इति । तदप्यसारं । यः खल्वेष इति सद्रूपतया प्रत्यवमृष्टः पदार्थः सोऽसत्त्वापादकेन नञर्थेन सह संबद्धुमयोग्यः। अस्ति नास्तीतिवत्। अन्वयायोग्ययोश्च पदार्थयोरन्वयाभावान्न वाक्यार्थीभवनम्। तर्हि निराकृतान्येव सर्वाणि निषेधवाक्यानि । मन्द मैवं परिभाषय । नहि निषेधवाक्येषु कस्य चिदात्यन्तिको निषेधः किंतु क्वचिन्निषिध्यते । अद्वैताभिमानी तु भवानात्यन्तिकमेव निषेधमभिलष्यति । सोऽयमात्मीय एव बाणो भवन्तं प्रहरति ।

लभ्यरूपे क्वचित् किंचित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ॥

इति ।

प्रत्यक्षादिविरुद्धार्थत्वादद्वैतावबोधक आम्नायो न यथावस्थितो वर्णयितुं न्याय्यः। यत् त्विदं प्रपञ्चेन साधितं प्रत्यक्षादिविरोधेऽप्याम्नायस्य बलीयस्त्वं तद्वशेन प्रत्यक्षादीनामेव भ्रान्तता कल्पनीयेति । तदपि मनोरथमात्रं। प्रत्यक्षादिविरोधे पदार्थानामन्वययोग्यताविरहादाम्नायस्यैव तद्विरोधेऽनुदयात्। अतः प्रत्यक्षादिविरोधादाम्नाये गौणी लाक्षणिकी वा वृत्तिरास्थेया । तत्रानन्दश्रुतयः स्वाभाविकदुःखाभावपरतया वर्णनीयाः । लौकिकानन्दस्य चाल्पतया दुःखानुषक्ततया च व्याख्येयाः । एकत्वश्रुतयश्चैकस्मिन्नायतन एकस्यैव स्वामित्वमित्येवंपराः । इन्द्रो मायाभिः पुरुरूप ईयते इति देहात्माभिमानेन जन्मनि जन्मनि भिन्न इव भातीत्यर्थः। अनेकदेहपरिग्रहेऽप्येक एवात्मेति नानात्वनिषेधस्यार्थः । एष नेति च शरीरादीनामात्मत्वनिषेधस्तद्व्यतिरिक्तप्रतिपत्तिपरः। विज्ञानश्रुतयश्च चिच्छक्तियोगित्वाश्रयाद्व्योमादिभ्यो विशेषापादनफलाः । सर्वात्मश्रुतयश्च सर्वस्यात्मार्थत्वात् तादर्थ्यनिमित्तोपचारात् । आत्मनि विज्ञाते सर्वमिदं विज्ञातमिदं विज्ञातमिति यदुच्यते तदात्मज्ञानस्य परमपुरुषार्थमोक्षफलत्वादस्मिन् विज्ञाते सर्वमेव ज्ञानं निष्फलमिति दर्शयितुमित्येषा दिक् । अथोच्येत । वित्तेर्भिन्नस्याप्रकाशात्मनः प्रकाश एवानुपपन्न इति यद्यत् प्रकाशते तत्तत् प्रकाशादभिन्नं । प्रकाशात्मकं हि ब्रह्म। अतो ब्रह्मात्मकं जगदिति सिद्धमद्वैतमिति । तदिदं स्वपक्षविरुद्धं । कथमेवं

बुद्धिमन्तोऽभिदधति । एवं हि नानाभूतानामाकाराणां प्रकाशाभेदे प्रकाशस्यापि नानाभावापत्तेरद्वैतं दूरापास्तम् । अथोच्येत । विविधोऽयमाकारप्रपञ्चोऽविद्याध्यासवशादवभासत इत्येतदपि स्ववचनविरुद्धं । सदात्मा प्रकाशस्तेन सह सदात्मान आकारास्तावदभिन्ना इति न घटते । तथाच सत्यप्रकाशात्मानस्ते कथमिव प्रकाशेरन् । अपिच । अप्रकाशात्मन एव प्रकाशः संभवतीति बाह्यार्थसिद्धावुक्तम् । अत एषोऽपि माहायानिकपक्षानुप्रवेशिनां ब्रह्मवादिनां मोह एव । अपिच । अत्यन्तमसन्तं प्रपञ्चं कथमिवाविद्या प्रकाशयितुमलं । न खल्वसत्ख्यातिरसिद्धा किं त्वग्रहणरूपैवेति नयवीथ्यां साधितम् । अतो नाविद्यास्तमयो मोक्षः । आत्यन्तिकस्तु देहोच्छेदो निःशेषधर्माधर्मपरिक्षयनिबन्धनो मोक्ष इति सिद्धं । धर्माधर्मवशीकृतो जीवस्तासु तासु योनिषु संसरति । तयोरेकान्तोच्छेदेऽप्यपगतदेहेन्द्रियसंबन्धः समुत्खातनिखिलसांसारिकदुःखबन्धनो मुक्त इत्युच्यते । कथं पुनरशेषधर्माधर्मपरिक्षयः । न तावदुपभोगेनैव । अनादिशरीरसंततिसंचितानां भोगसमये संचीयमानानां कर्माशयानामनन्तानां क्षेप्तुमशक्तेः । उच्यते । यः खलु सांसारिकेभ्यो दुःखेभ्य उद्विग्नस्तदनुषङ्गशबलेभ्यश्च सुखेभ्योऽपि गतस्पृहो मोक्षायोत्तिष्ठते स तावद्दुःखहेतुभूतेभ्यो निषिद्धेभ्यः प्रत्यवायहेतुभूतेभ्योऽभ्युदयसाधनेभ्यश्च निवर्तमानः सन्नुत्पन्नपूर्वौ धर्माधर्मौ भोगेन क्षतावपि क्षयं नयन् शमदमब्रह्मचर्यादिकाङ्गोपबृंहितेनात्मज्ञानेन नच पुनरावर्तत इत्यपुनरावृत्तये चोदितेन निःशेषकर्माशयं नाशयन् मुच्यते । नचापुनरावृत्तेरर्थवादतया वर्णनमात्मज्ञानस्यापरार्थत्वात् । परार्थत्वे हि पर्णमयीन्यायेन फलश्रुतिरर्थवादतया वर्ण्यते । अपारार्थ्ये तु सैवाधिकारिविशेषणं रात्रिसत्रवत् । नच कर्मविधिशेषभूतमात्मज्ञानं तस्यापरार्थत्वात् । परार्थत्वे प्रमाणाभावात् । उपकारलक्षणशेषत्वनिराकरणादित्यलमतिविस्तरेण ।

ननु मुक्तस्यात्मनः सकलोपलम्भातीतस्य सन्मात्रावस्थितौ किं प्रमाणम् । उच्यते । सदकारणं च यत् तदविनाशि गगनवत् । सदकारणं चायमात्मेत्यविनाशित्वाभावः सिद्धः । परममहत्त्वं चात्मनः परिमाणं गगनवत् । यत्र यत्रात्मनो गुणा उपलभ्यते तत्र तत्र तावदात्मा वर्तत इति प्रमाणसिद्धं । गुणिनमन्तरेण गुणस्यावृत्तेः । तत्र ह्येष संशयः किमयं गत्या संनिधीयते उत गतिनिरपेक्ष एवेति । तत्र गतिसव्यपेक्षत्वाश्रयणे गतेरेव तावत् कल्पना । तस्याश्चासमवायिकारणं कल्पनीयं । नच तत्र किंचन प्रमाणमस्ति । अगच्छतोऽपि संनिधानोपपत्तेः । गगनवत् । अथोच्येत यत्रापि देहो न वर्तते तत्रापि चेदात्मा संनिधीयते तदा शरीर इव तत्रापि तद्गुणानामुपलब्धिः स्यादिति । तन्न । यतः सर्वात्मगुणानामात्ममनःसंनिकर्षोऽसमवायिकारणं । स च संयोग आत्ममनोविरहेणान्यत्र न वर्तते । मनश्च शरीरान्तरवतिष्ठत इत्युक्तं । यत्रैव चासमवायिकारणं तत्रैव कार्यमिति न बहिर्देहमात्मनो गुणोपलम्भः । नन्वेवं शरीरस्यापि गतिकल्पनमप्रमाणकमेव । न । तस्यैकत्र सतोऽन्यत्र दर्शनप्रसङ्गात् । आत्मनस्तु सतोऽपि सकलकरणपथातीतस्य दर्शनप्रसक्तिरापादयितुमशक्येत्यगत्या सर्वसंयोगिभिरात्मा संयुज्यते । तत्तु परममहत्त्वमन्तरेण न संभवतीति नाणुपरिमाणः शरीरपरिमाणो वात्मा । शरीरपरिमाणत्वं च विना सावयवत्वमनुपपन्नं । तादृशमपि महत्त्वमवयवबहुत्वमहत्त्वप्रचयविशेषाणामन्यतरस्मिन्नायत्तं । नचावयवकल्पना प्रमाणवती । ननु सर्वगत्वे पुरुषस्य शरीरान्तरेऽपि भोगप्रसङ्गः । मैवं । यस्य तच्छरीरं यस्य तद्भोगायतनं यानि च यस्येन्द्रियाणि तानि तस्य भोगसाधनानीति नायतनान्तरे भोगप्रसङ्गः । ननु शरीरेन्द्रियसंबन्धव्यवस्थापि किंनिबन्धना । उच्यते । धर्माधर्मसमवायनिबन्धनेति भवानवबुध्यतां । यदीयाभ्यां धर्माधर्माभ्यां यानि शरीरेन्द्रियाण्युपात्तानि तानि तस्यैव । धर्माधर्मव्यवस्थैव किमायत्तेति चेत् । तदुपायभूतकर्मसंबन्धाद्व्यवस्था तत्समवायिकारणभूतशरीरेन्द्रियसंबन्धनिबन्धनेत्यनादितया शरीरेन्द्रियधर्माधर्मसंततेः सर्वमुपपन्नम् । आह विभुत्वं चेदात्मनस्तदा सर्वशरीरेष्वेक एवास्तु गगनवत् । यथा गगनमेकमेव घटमणिकादितत्तदनेकसंबन्धि तद्वदात्मापि किं नाभ्युपेयते किं प्रत्यायतनं भेदाभ्युपगमेन । उच्यते । यस्तावत् प्रतिपत्ता परायतनस्वामिनं स्वप्रयत्नपूर्वकात्मीयशरीरसमवेतसमानचेष्टादर्शनादनुमानतः प्रत्येति प्रयत्नवत्तया नासौ तद्ग्राहकैकरसस्वात्मभूततया । किंतु ग्राह्यकोटिनिविष्टमनात्मभूतमेव । तेन प्रतीतिविरुद्धत्वाद्भेदस्य किं भेदाभ्युपगमेनेति वचनमकिंचित्करं । न हि परायतनं स्वमित्येवमनुमानमुदेतुमलं । यथा मम शरीरे मदीयप्रयत्नपूर्वा चेष्टा तथा परशरीरे मत्प्रयत्ननिबन्धनैवेति प्रत्यक्षविरोधात् । प्रत्यक्षेण हि स्वात्मनि समवयत्प्रयत्न उपलभ्यते । नच परशरीरचेष्टानुगुणः प्रयत्नः स्वात्मनि पुरुषाणां प्रत्यक्षीभवतीति पर एव प्रयतिता परशरीरेऽनुमीयते । नचैवमनुमानेन परात्मप्रतीतौ कथमिदमुच्यतेऽग्राह्यो न गृह्यत इति । परेण न गृह्यत इत्येतदभिप्रायमेतद्भवतीति । उच्यते । ग्राहकैकरसतया परेण न गृह्यत इति तस्यार्थः । तस्मान्न विरोधः । किंच नानाव्यवस्थाना नानाभूताः प्रति क्षेत्रं पुरुषाः । धर्माधर्मसुखादिव्यवस्थादर्शनात् । अन्यथा ह्येकस्य धर्माधर्मादयः सर्वस्य भवेयुः । तत्र केचित् पण्डितमानिन आहुः । काल्पनिकी सुखादिव्यवस्था भविष्यति । यथैकस्मिन्नेव शरीरे पादादिवेदनाव्यवस्था न व्यतिकीर्यते तथा नानाशरीरेषु न

व्यतिकरिष्यत इति। न हि पादगता वेदना शिरसि शिरोगता वा पादे। नच वेदना पादादिष्वेव समवेतेति शक्यते वक्तुं। तेषामज्ञत्वात्। ज्ञाता हि वेदनाभिः सह संबध्यते दुःखविशेषरूपत्वात् तासामिति। तदिदं मन्दं बालजनमोहनमिति वृद्धाः। तथाहि पादे मे वेदना शिरसि मे वेदनेति सर्ववेदनास्वेको दुःखी प्रकाशते। पादादिषु तु संतापादिकं समवैति। तत्र संतापस्तेजसा सह संयोगः। शूलस्तु वायुना सहेति वातपित्तश्लेष्मणां क्षोभजेषु सर्वेषु वेदितव्यम्। अचेतनानामपि पादादीनां पित्तादिसंयोगो न विरुध्यते। तदर्थं दुःखमात्मन्येव समवैति। अथोच्येत। यथा प्रतिबिम्बभाव एकस्यैवं मणिकृपाणदर्पणाद्युपाधिवशेन व्यवस्थितानि श्यामत्वादीनि तथैकस्याप्यात्मनो नानाशरीरोपाधिवशेन सुखादयो व्यवतिष्ठन्त इति। तदयुक्तं। श्यामत्वादीनामौपाधिकानामुपपत्तिमत्त्वाद्बिम्बसंबन्धाभावात्। तेनैषा संभवति व्यवस्था। सुखादयस्तु नौपाधिकाः। किं त्वात्मसमवायिन एवेत्येकात्मवर्तित्वे व्यवस्थानुपपत्तिः। किंच सिद्धे व्यक्तमेकत्वे स्यादप्येषा कल्पना।

नानाविवादसंभूततमःसंघातभेदिनाम्।
एष शालिकनाथेन तत्त्वालोकः प्रवर्तितः॥

इति महामहोपाध्यायमिश्रशालिकनाथकृतौ प्रकरणपञ्चिकायां तत्त्वालोको नामाष्टमः परिच्छेदः॥ ८॥

## ॥ अथ कादम्बरीकथासारः॥

अथ प्रविश्य नगरीमुपास्य पितरौ चिरं।
शुकनासं च सोऽध्यास्त कुमारभवनं ततः॥ १॥
तत्र कादम्बरीध्याननिरतैकाग्रचेतसः।
बभूव रतये * किंचिन्नास्य स्थाष्णु चरिष्णु च॥ २॥
नाकरोत् प्रियमाहारं नाबोधि मधुरं रसं †।
नचाद्रियत वासांसि न पस्पर्श विलेपनं॥ ३॥
सार्थच्युत इवाध्वन्यो यूथभ्रष्ट इव द्विपः।
वागुरापाशसंबद्ध इव सारङ्गशावकः॥ ४॥
दिवा विभावरीं ध्यायन् निशि वाञ्छन् दिवागमम्।
उदीचीमेव साम्राचो वीक्षमाणोऽनिशं दिशं॥ ५॥
केयूरकोदितं ‡ मां च ज्ञात्वा किं चिन्तयेदसौ।
किं वदेत् पत्रलेखां वा सा किमुच्येत वानया॥ ६॥
इति नक्तं दिवं ध्यायन्नलब्धधृतिबन्धनः।
कालं कथं * तमप्येव चन्द्रापीडोऽत्यवाहयत्॥ ७॥
आकारसंवृतिस्तादृगस्य † गूढात्मनोऽभवत्।
यथा तां शून्यतामस्य पितरौ नाधिजग्मतुः॥ ८॥
दिनेष्वथ व्यतीतेषु पत्रलेखा तदन्तिकं।
प्रापद्बलाहकाख्वीयनिवृत्तपथिसौष्ठवा॥ ९॥
चन्द्रापीडोऽथ तां दृष्ट्वा समुल्लासितमानसः।
कादम्बरीमिवामंस्त पस्पर्श च मुहुर्मुहुः॥ १०॥
ततो विस्रब्धमप्राक्षीद्वद कादम्बरीकथां।
कियन्मम स्मरत्येषा हृषिता गमनात् कियत्॥ ११॥
साभ्यसूयमिवालोक्य चन्द्रापीडमुवाच सा।
किं तया चिन्तया ‡ देव गुरूनाराधय स्थिरम्॥ १२॥
असौ किं सुप्रसन्नेन स्वयं मकरकेतुना।
त्वय्यर्पितानुरूपेति श्रीपतौ श्रीरिवाब्धिना॥ १३॥
तां चाभिनवभावार्द्रां बालां तनुलतामिव।
तीव्रे विरहदावाग्नौ क्षिप्रवानसि किंकृते॥ १४॥
केयूरकमुखाद्बुद्ध्वा गमनं देव तावकं।
वज्रसंनिहता सालवल्लरीव व्यकम्पत॥ १५॥
लब्धस्थैर्यावदन्मां च पत्रलेखे किमीदृशं।
युक्तमेतस्य यन्मन्ये रक्षांस्यपि न कुर्वते॥ १६॥
ततःप्रभृति निःश्वासैर्वर्धमानैर्दिनैरिव।
क्रान्ता ग्रीष्मनिशेवासावक्षीयत शनैः शनैः॥ १७॥
अलब्धकुसुमामोदाः प्रागभ्यासक्रमागताः।
दूरात् परिहरन्त्यस्याः कबरीमद्य षट्पदाः॥ १८॥
रोदनाद्दूषितापाङ्गे चिरविस्मृतकज्जले।
नेत्रे विसृष्टमाधुर्ये § गते तस्याः कषायतां॥ १९॥
चित्रपत्रलतालेख्यं विहाय क्रियते नवं।
मण्डनं गण्डयोरश्रुकणमुक्तावली तया॥ २०॥
मृदुः स्वभावरक्तश्च प्रवृद्धैरसमोष्मभिः।
म्लानिमानीयते तस्या निश्वासैरधरः खलैः॥ २१॥

* हृदये इति पाठान्तरम्।
† स्वरम् इति पाठान्तरम्।
‡—कादृतं पाठान्तरमेतत्।

* कियन्त— इति पाठान्तरम्।
†—स्त्वीदृग— इति पाठान्तरम्।
‡. किं ते तच्चिन्तया इति पाठान्तरम्।
§. विसृज्य माधुर्यं पाठान्तरमेतत्।

स्तनौ तु विरहेऽप्यस्याः शोकान्नहि बहिष्कृतौ ।
दाहप्रतिक्रियान्यस्तैर्हारकर्पूरचन्दनैः* ॥ २२ ॥
विरहज्वलनस्तस्या लावण्यजलनिर्भरैः ।
वाडवश्चाब्धिना नैति शममित्यद्भुतं द्वयं ॥ २३ ॥
मुहुः सरसि हंसीव मृगीवोपवने मुहुः ।
पुलिने चक्रवाकीव मुहुर्लुठति विह्वला ॥ २४ ॥
मुहुर्भवन्तमालिङ्ग्य संकल्पविहितं पुरः ।
शून्ये भुजलते वीक्ष्य विलक्षा पतति क्षितौ ॥ २५ ॥
मागादयमुपालब्धः संकल्पादपि दूरतः ।
इत्युपालभते न त्वां भीतेव मनसापि सा ॥ २६ ॥
त्वदाकारमयं चित्तं त्वन्नामस्मरणा गिरः ।
त्वन्मार्गकलिता दृष्टिस्तस्याः सम्प्रति वर्तते ॥२७॥
कियद्वा वर्ण्यते तस्याः परेण विरहव्यथा ।
स्वयंवेदनगम्या हि सा त्वयैवानुभूयते ॥ २८ ॥
किमप्याख्यातुकामा सा बहुशः स्फुरिताधरा ।
हृदयस्थेन केनापि गुरुणेव निषिध्यते ॥ २९ ॥
भूमौ विचेष्टमानाङ्गी भुजंगीवैकदा पुनः ।
दिशो वीक्ष्य मदुत्सङ्गे निधाय मुखमब्रवीत् ॥ ३० ॥
उत्तिष्ठ यदि जीवन्तीं मामिच्छसि तमानय ।
अहं नेतुमशक्या हि सुदूरमिदमन्तरं ॥ ३१ ॥
स्थितायां त्वयि जीवामि त्वत्स्पर्शेन यथा तथा ।
गतायां तु चिरं कालं क्षमन्ते मम नासवः ॥ ३२ ॥
इति श्रुत्वा च तद्दृष्ट्वा समायातास्म्यतः परम् ।
देवः प्रमाणमित्युक्त्वा रुदती विरराम सा ॥ ३३ ॥
चन्द्रापीडस्तदाकर्ण्य जातस्मृतिरिवाभवत् ।
लब्धस्थितिश्चिरं दध्यौ गमने हेतुमात्मनः ॥ ३४ ॥
दिनेष्वन्येषु जातेषु वक्तुं कादम्बरीदशाम् ।
आगात् केयूरकोऽप्याशु दीर्घाध्वश्रान्तवाहनः ॥३५॥
स चोज्जयिन्या विभवं प्रविशन् वीक्ष्य सस्मितः ।
स्थाने ननु मनो लग्नं स्वामिन्या इत्यमन्यत ॥ ३६ ॥
प्रविश्य ददृशे तेन चन्द्रापीडो यथाक्रमं ।
चक्रवाक इवैकाकी प्रियाविरहविह्वलः ॥ ३७ ॥
दधत्या पार्श्ववर्तिन्या चामरं पत्त्रलेखया ।
संवीज्यमानः पर्यङ्के निषण्णः क्षामविग्रहः ॥ ३८ ॥

*— स्तैः कर्पूरहरिचन्दनैः इति पाठान्तरम् ।

प्रणिपत्योपविष्टोऽसौ गाढं शिरसि पस्पृशे ।
कुर्वता कुशलप्रश्नं चन्द्रापीडेन सादरम् ॥ ३९ ॥
ततः कादम्बरीवार्तां पृष्टः केयूरकोऽमुना ।
पत्त्रलेखामुखं वीक्ष्य संक्षिप्तमिदमब्रवीत् ॥ ४० ॥
उक्तोऽसि नानया किंचिदुक्तश्चेत् किमिह स्थितः ।
उक्तश्चेह स्थितश्चासि कृतमागमनेन मे ॥ ४१ ॥
तथापि वद संदेशमिति तेन तु नोदितः ।
पुनः केयूरकोऽप्याह* न हि विज्ञाप्यसे मृषा ॥ ४२ ॥
कथं जीवत्सु युष्मासु विरहो हन्ति मामिति ।
तस्याः साकूतया दृष्ट्या विसृष्टोऽस्मि न तद्गिरा ॥४३॥
किमत्र बहुनोक्तेन तथाऽस्या विरहव्यथा ।
अद्यापि जीवतीत्येवं† यथा दोलायते मनः ॥ ४४ ॥
तत्कथाभिस्तथा स्थित्वा तस्मिन्नथ दिने चिरं ।
चन्द्रापीडः सुखावासं केयूरकमकारयत् ॥ ४५ ॥
न राक्षसो न मातङ्गो न किरातश्च यद्यहम् ।
अच्छोदसरसस्तीरं प्राप्तं मां वेत्थ सर्वथा ॥ ४६ ॥
अन्येद्युरिति संदिश्य सहितं पत्त्रलेखया ।
केयूरकमसावग्रे‡ प्राहिणोत् कृतमण्डनम् ॥ ४७ ॥
तयोस्तु गतयोरास्त सुतरां खिन्नमानसः ।
तांस्तानभिलषन् बुद्ध्या हेतून् गमनसाधकान् ॥४८॥
शुश्रावाथ नियुक्तेभ्यः स्कन्धावारमुपागतं ।
योजनद्वयमात्रेण पुरःकृतनिवेशनं ॥ ४९ ॥
वैशम्पायनतो लप्स्ये किंचित् कारणमित्यसौ ।
प्रत्युद्गन्तुमगादेनं कटकं पितुराज्ञया ॥ ५० ॥
तत्र राजकमालोक्य वलाहकनिवेदितं ।
क्व वैशम्पायनावास इति सेनान्यमभ्यधात् ॥ ५१ ॥
वलाहकस्त्वधोदृष्टिरुल्लिखन् मेदिनीं मुहुः ।
न वैशम्पायनोऽत्रेति सन्नकण्ठमभाषत ॥ ५२ ॥
ततोऽवतीर्य तुरगादुपविश्य तरोरधः ।
हा वयस्येति विलपन् प्रावर्तत स रोदितुम् ॥ ५३ ॥
वलाहको निपत्याथ चन्द्रापीडस्य पादयोः ।

*— कः प्राह इति पाठान्तरम् ।

†— त्यत्र इति पाठान्तरम् ।

‡— सौ रत्नैः इति पाठान्तरम् ।

देव मैवं तथा शोच्यं * जीवन्नस्तीत्यवोचत ॥ ५४ ॥
चन्द्रापीडस्तु तं प्राह नेदं श्रद्धीयते मया ।
स वैशम्पायनो जीवं त्यक्त्वालम्बत मामिति † ॥ ५५ ॥
इत्युपप्लुतचित्तं तं पुनराह बलाहकः ।
श्रूयतां देव यद्वृत्तं तत्र प्रचलिते त्वयि ॥ ५६ ॥
अस्मानेवं समादिश्य प्रस्थितं त्वामनुव्रजन् ।
ततः प्रतिनिवृत्तोऽसावास्त तत्र यथास्थिति ॥ ५७ ॥
अपरेद्युरथोत्थाय विधाय प्रकृताः क्रियाः ।
विनोदयितुमात्मानं व्यचरत् स वनस्थलीम् ॥ ५८ ॥
तत्र सप्रत्यभिज्ञः सन् स स्थानान्यनुरूपयन् ‡ ।
किंचिन्नष्टमिवान्वेष्टुमैच्छद्विचस्तलोचनः ॥ ५९ ॥
ततोऽस्ताभिमुखे भानावस्माभिः सोऽभ्यधीयत ।
स्थीयतामवशिष्टास्तु श्वो द्रक्ष्यमो वनस्थलीः ॥ ६० ॥
तदाऽसौ नाग्रहीद्वाक्यं विचरन्नेव सोऽब्रवीत् ।
यात यूयं न गन्तव्यं यावज्जीवमितो मया ॥ ६१ ॥
स बहूनि दिनान्यास्त तथैव विचरन् वने ।
न सोऽस्त्युपायो येनासौ शक्यश्चालयितुं ततः ॥ ६२ ॥
कृतप्रायोपवेशेन पादयोः पतताऽनिशम् ।
इयता राजचक्रेण नाबुद्ध प्रार्थितोऽपि सः ॥ ६३ ॥
ततस्तत्र चिरं स्थित्वा कार्यशेषमपश्यता ।
आयातमिह सैन्येन त्वं प्रमाणं ततः परम् ॥ ६४ ॥
इति श्रुत्वा निपतितः शोकविस्मयसंकटे ।
चन्द्रापीडस्तथैवास्त तरुमूले कृतासनः ॥ ६५ ॥
अथ वार्तां विदित्वैनां तमेवोद्देशमागमत् ।
अनपेक्षितविस्तारः सामात्यान्तःपुरो नृपः ॥ ६६ ॥
तत्र क्षणमिव स्थित्वा स्वयं पृष्ट्वा बलाहकम् ।
अधिक्षिपन्निव प्राह चन्द्रापीडं क्षितीश्वरः ॥ ६७ ॥
नूनमुत्पादितो मन्युस्त्वया कोऽप्यस्य तादृशः ।
येनान्तः स्फुरता सोऽद्य त्वां विहाय वनं गतः ॥ ६८ ॥
वियुक्तौ न पुरा दृष्टौ युवां क्षणमपि क्वचित् ।
किं जातमधुना येन त्वं गृहे स तपोवने ॥ ६९ ॥
विना नहि निमित्तेन शक्या सोढुं गरीयसी ।
मातापितृसुहृद्बन्धुदेशवित्तवियोगिता ॥ ७० ॥

* क्षुधाः शोकं पाठान्तरमेतत् ।
† जीवन् नास्ति मां न विमुञ्चति इति पाठान्तरम् ।
‡ –ज्ञः स स्थानं स्थानं निरू– इति पाठान्तरम् ।

इत्युक्तवति भूपाले शुकनासस्त्वनन्तरं ।
अन्तःस्फुरितशोकोऽपि गृहीतक्षोभमभ्यधात् ॥ ७१ ॥
किमेतदविचार्यैव वस्तुतत्त्वं वितर्कयन् ।
शङ्कानुमानमात्रेण हृतधीरिव भाषसे ॥ ७२ ॥
अलातवृष्टिरिन्दोर्वा क्षीराद्वा कण्टकोद्गमः ।
तस्य मन्युः कुमाराद्वा तव * संभावनास्पदं ॥ ७३ ॥
पापः स एव दुर्जातः सुचिरं पाठितः शुकः ।
यथा तरुः सुधासिक्तः फलितः कालकूटवत् ॥ ७४ ॥
स त्वं कुमार सर्वस्याः पृथिव्या एव जीवितं ।
दुरात्मनो न तस्यार्थे शोकमुद्वोढुमर्हसि ॥ ७५ ॥
तस्मिन् विरतवाक्ये तु पतितः पादयोः पितुः ।
साश्रुकण्ठमथोवाच चन्द्रापीडः कृताञ्जलिः ॥ ७६ ॥
दोषप्रायश्चित्तमिदं मम † साधनमेव तत् ।
गत्वा तमानयामीति तदनुज्ञातुमर्हसि ॥ ७७ ॥
तमागतमिहालोक्य पृष्ट्वा शिरसि चुम्बितं ।
ततो गुणं वा दोषं वा मम तातोऽवभोत्स्यते ॥ ७८ ॥
तत्रस्थं च तमानीय व्युपेत्य स्वं गृहं ‡ पुनः ।
संप्रवेष्टव्यमित्येष गृह्यतामिति § निश्चयः ॥ ७९ ॥
तथोक्तवति तस्मिंश्च राजा बाष्पाकुलेक्षणः ।
सोऽपश्यन्मन्त्रिणो वक्त्रं स च तत्र बहूक्तवान् ॥ ८० ॥
सर्वोपायप्रयोगेण पित्रा तेन च मन्त्रिणा ।
चन्द्रापीडो निरुद्धोऽपि नाचलन्निश्चयात् ततः ॥ ८१ ॥
सिञ्चन्ती बाष्पधाराभिर्मौलिमस्य मनोरमा ।
करुणं विलपन्तीव चिरमेनमबोधयत् ‖ ॥ ८२ ॥
त्वयि स्थिते निजोत्सङ्गे स्थितिं पश्यामि पुत्रक ।
नूनमन्धीभवाम्येव वत्स त्वयि गते पुनः ॥ ८३ ॥
इत्थं विलासवत्या च तया च करुणोक्तिभिः ।
चिरमार्द्रीकृतोऽप्येष न जहाति स्म निश्चयं ॥ ८४ ॥
ततोऽश्रुभरसंरुद्धदुर्ग्रहाक्षरया गिरा ।
यथा जानासि पुत्रेति कथमप्यब्रवीन्नृपः ॥ ८५ ॥

* कस्य इति पाठान्तरम् ।
† तात शङ्कितदोषस्य प्रायश्चित्तमिदं मम इति पाठान्तरम् ।
‡ तमनानीय मयैतत् स्वगृ– इति पाठान्तरम् ।
§ न प्रवेष्टव्यमित्येष गृह्यतां मम इति पाठान्तरम् ।
‖ वाचमेनमवोचत इति पाठान्तरम् ।

दत्तानुज्ञस्तथा पित्रा प्रणम्य सकलान् गुरून् ।
श्रुत्वा प्रयत्नसंरुद्धबाष्पधारास्तदाशिषः ॥ ८६ ॥
चन्द्रापीडः परिश्रान्तान् संस्थाप्य च यथातथं* ।
पार्थिवान् परिवारेण प्रातिष्ठत लघीयसा ॥ ८७ ॥
किं तन्मया व्यधायीति† दूयमानमनाः शुचा ।
शुष्यन् कृच्छ्रेण राजा तु विवेश नगरीं पुनः ॥ ८८ ॥
बलाहकस्तु सेनानीर्वार्यमाणोऽपि यत्नतः ।
स्वगृहानप्रविश्यैव स चन्द्रापीडमन्वगात् ॥ ८९ ॥
चन्द्रापीडस्ततो गच्छन् दयितालोकनोत्सुकः ।
अमन्यतोल्लङ्घितवन्मध्यं‡ कैलासविन्ध्ययोः ॥९०॥
नाजीगणद्द्रुमानद्रीन् न नदीर्न वनस्थलीः ।
न रात्रिं न दिनं वापि धावन्निन्द्रायुधेन सः ॥ ९१ ॥
ततः प्रावर्तत प्रावृट् पीनोन्नतपयोधरा ।
कान्ता नवरसार्द्रेव प्रत्युगन्तुमिवागता ॥ ९२ ॥
तामप्यगणयित्वासौ वहन् कतिपयैर्दिनैः ।
अच्छोदसरसस्तीरमापतद्दूषिताम्भसः ॥ ९३ ॥
अपनीतसमायोगः परिवर्त्य च वाससी ।
महाश्वेतामथ द्रष्टुं स जगाम तदाश्रमं ॥ ९४ ॥
तत्रापश्यन्महाश्वेतां तदालोकनलज्जितां ।
रुदन्तीं निजदौरात्म्यात् प्रलापकरुणस्वनं ॥ ९५ ॥
तत्कारणापरिज्ञानमोहनिस्पन्दपक्ष्मणा ।
निरीक्ष्य चक्षुषा पृष्टा चन्द्रापीडेन साब्रवीत् ॥ ९६ ॥
केयूरकमुखाद्बुद्ध्वा गतं त्वां पितुराज्ञया ।
दिनानि कतिचित् स्थित्वा कादम्बर्यनुरोधतः ॥९७॥
तत एत्य यथान्याय§मासीनास्मि तपोवने ।
विप्रं युवानमद्राक्षं विचिन्वन्तं वनस्थलीः ॥ ९८ ॥
सप्रत्यभिज्ञमालोक्य मामसौ मन्मथोन्मुखः ।
तीव्रमुद्वेजयामास नर्मवक्रोक्तिचापलैः ॥ ९९ ॥
ततो निर्भर्त्स्यमानोऽपि वार्यमाणोऽपि यत्नतः ।
स बहून् दिवसानास्त तथा मामुपपीडयन् ॥१००॥
एकदा तु शयानां मामागत्य निशि निस्त्रपः ।

* प्रस्थाप्य च यथा तथा इति पाठान्तरम् ।
†—भ्यधायीति इति पाठान्तरम् ।
‡—त तृणायैव मध्यं पाठान्तरमेतत् ।
§—भ्यास— इति पाठान्तरम् ।

कृताञ्जलिरनङ्गार्तो ययाचे रतिदक्षिणां ॥ १ ॥
ततो धिगिति सक्रोधमभिधाय कमण्डलोः ।
जलमुद्धृत्य शप्तोऽसौ मयानुध्याय देवताः ॥ २ ॥
शुकवन्मुखरागेण वक्तुमेवासि शिक्षितः ।
गच्छ दूरं दुराचार शुक एव भविष्यसि ॥ ३ ॥
शापेन तेन महता मदनाग्निना वा
जन्मान्तरोपचितदुष्कृतकर्मणा वा ।
चित्रेण वा भगवतश्चरितेन धातुः
प्राणानसावुदसृजन्निपपात चोर्व्याम् ॥ ४ ॥
आक्रन्दतः परिजनादथ सोऽपरेद्यु-
र्ज्ञातो मयायं शुकनाससुतः सखा ते
तत् पश्य मां प्रियवयस्यवियोगहेतु-
मस्तत्रपामकरुणां प्रखलामभव्याम् ॥ ५ ॥
इति श्रुत्वा भिन्नः प्रसभमिव शूलाग्रशिखया
कदा त्वां पश्येयं कमलमुखि कादम्बरि पुनः ।
क्वणन्नेवं शोकस्फुटितहृदयस्तत्क्षणमसून्
जहच्चन्द्रापीडस्तरुरिव पपात क्षितितले ॥ ६ ॥
ततो भुग्नग्रीवं मुकुलितसितापाङ्गनयनं
प्रभां तन्वीं दीनामिव निदधतं दिक्षु शनकैः ।
क्षितौ विस्रस्ताङ्गं पतितममुमालोक्य विवशा
महाश्वेता सद्यः कथमपि न याति स्म दलशः ॥७॥
द्रष्टुं दीनामिव वसुमतीमक्षमस्तेन शून्यां
कुर्वन्नुद्यद्विरहकरुणाक्रन्दिनश्चक्रवाकान् ।
अब्रह्मण्यध्वनिमिव करैरूर्ध्वशाखैर्विमुञ्च-
न्नस्तं तिग्मद्युतिरपि ततः क्षामधामा जगाम ॥१०८॥
॥ इति कादम्बरीकथासारे षष्ठः सर्गः ॥ ६ ॥

॥ श्रीः ॥

जयत्युष्णरश्मिः स्वयं द्योतमानो
दिवि ज्योतिषाधारभूतश्च यस्य ।
प्रसादाद्यथाबुद्धि सिद्धान्ततत्त्व-
विवेकस्य सम्यक् परीक्षां करोमि ॥

॥ अथ सिद्धान्ततत्त्वविवेकपरीक्षा ॥

तत्र श्रीमता सांवत्सराचार्येण कमलाकरेण प्रथमं तावत्
केचित् प्रत्यक्षसूर्याच्च भिन्नोऽयमिति यद्बलात् ।
वदन्ति मूढवादस्याप्रामाण्यात् तदसद्ध्रुवम् ॥

इत्यनेन भगवतः सूर्यस्यैव सूर्यसिद्धान्तकर्तृत्वं प्रदर्शितम्। तन्न समीचीनम् ।

> इष्टेऽह्नि मध्ये प्राक् पश्चाद्धृते बाहुत्रयान्तरे ।
> मत्स्यद्वयान्तरयुतेस्त्रिस्पृक्सूत्रेण भाभ्रमः ॥

इत्यनेन तदीयश्लोकेन वृत्तरेखायां शङ्कुच्छायाभ्रमणं

> योजनानि शतान्यष्टौ भूकर्णो द्विगुणानि तु ।
> तद्वर्गतो दशगुणात् पदं भूपरिधिर्भवेत् ॥

इत्यनेन तदीयश्लोकेन व्यासात् परिध्यानयनं चेत्यादीनामनेकेषामसतां प्रकाराणां कथनस्य सर्वज्ञे भगवत्यसंभवित्वात् ।

एषामसत्त्वमग्रे विस्तरेण प्रतिपादयिष्ये । अतः सूर्यसिद्धान्तस्य भगवत्कर्तृकत्वकल्पनं गणितगोलविदां सूक्ष्मधियामग्रे श्रीसूर्यस्यासर्वज्ञत्वद्योतकं कमलाकरज्योतिर्विदोऽनुचितमिति।

एवं

> रवेश्चक्रैकभोगोऽत्र रविवर्षं तदेव हि ।
> देवानामसुराणां च द्युरात्रं तु विपर्ययात् ॥
> दिनरात्र्योरिति ।

अनेन रवौ रेवत्यन्तात् पूर्वतो गच्छन् यावतानेहसा पुनः रेवत्यन्तमायाति स निरयणसौरवर्षात्मकः काल एव देवानामहोरात्रमिति प्रदर्शितम् । तन्न सम्यक्

रविर्विषुवत्क्रान्तिवृत्तसंपातरूपान्मेषादितश्चलन् यावता कालेन पुनस्तं संपातमियात् तावतः सायनवर्षात्मकस्य कालस्यैव मेरुवासिनाममराणामहोरात्रत्वान्निरयणवर्षस्य चैतत्कालतोऽधिकत्वात् ।

यच्च सूर्यसिद्धान्ते

> ऐन्दवस्तिथिभिस्तद्वत् संक्रान्त्या सौर उच्यते ।
> मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते ॥

इत्यनेन निरयणवर्षसमानमेव देवदिनमुक्तं तत्तु सूर्यसिद्धान्तनिर्मितिसमये प्रायोऽयनांशानामनुपलब्धेस्तदकथनान्निरयणवर्षतुल्यमेव सायनवर्षं बुद्ध्वैव ।

नच तत्र

> त्रिंशत्कृत्यो युगे भानां चक्रं प्राक् परिलम्बते ।
> तद्गुणाद्भूदिनैर्भक्ताद् द्युगणाद्यदवाप्यते ॥
> तद्दोस्त्रिघ्ना दशाप्तांशा विज्ञेया अयनाभिधाः ।
> तत्संस्कृताद्ग्रहात् क्रान्तिच्छायाचरदलादिकम् ॥
> स्फुटं दृक्तुल्यतां गच्छेदयने विषुवद्द्वये ।
> प्राक् चक्रं चलितं हीने छायार्कात् करणागते ॥
> अन्तरांशैरथावृत्य पश्चाच्छेषैस्तथाधिके ।

इत्यनेनायनचलनस्य स्पष्टमुक्तत्वान्निरयणसायनवर्षयोः समानत्वबोधोऽसंभवीति वाच्यम् ।

उक्तश्लोकेभ्यः पूर्वस्य

> शङ्कुच्छायाकृतियुतेर्मूलं कर्णोऽस्य वर्गतः ।
> प्रोह्य शङ्कुकृतिं मूलं छाया शङ्कुर्विपर्ययात् ॥

इत्यस्य श्लोकस्य तेभ्यः परेण

> एवं विषुवती छाया स्वदेशे या दिनार्धजा ।
> दक्षिणोत्तररेखायां सा तत्र विषुवत्प्रभा ॥

इत्यनेन श्लोकेन संगतेः स्फुटं प्रतीयमानतयोक्तश्लोकानां चानेन कथमपि संगतेरभावादुक्तश्लोकातिरिक्तस्थले क्वाप्ययनचलनस्यानभिहितत्वाच्चोक्तसार्धत्रयश्लोकानां प्रक्षिप्तत्वस्य स्फुटं प्रतीयमानत्वात् ।

> देवासुरा विषुवति क्षितिजस्थं दिवाकरम् ।
> पश्यन्त्यन्योन्यमेतेषां वामसव्ये दिनक्षपे ॥
> मेषादावुदितः सूर्यस्त्रीन् राशीनुदगुत्तरम् ।
> संचरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम् ॥
> कर्कादीन् संचरंस्तद्वदह्नः पश्चार्धमेव सः ।
> तुलादींस्त्रीन् मृगादींश्च तद्वदेव सुरद्विषाम् ॥
> अतो दिनक्षपे तेषामन्योन्यं हि विपर्ययात् ।
> अहोरात्रप्रमाणं च भानोर्भगणपूरणात् ॥

इत्येभिः सूर्यसिद्धान्तोत्तरखण्डस्थश्लोकैस्तन्निर्मितिसमयेऽयनांशानामनुपलब्धेरतिस्पष्टत्वात् । तस्मात् तदानींतनानां रविचक्रभोगस्य देवाहोरात्रत्वकथनं युक्तम् । कमलाकरदैवज्ञस्य तु तत्समयेऽयनांशानां प्रत्यक्षेणोपलब्धेर्देवाहोरात्रस्य निरयणवर्षतुल्यत्वकथनमसम्यगेव ।

एवं

> यच्छिरोमणिकृता निजतन्त्रे
> ब्रह्मणो दिनमुखं ग्रहसृष्टेः ।
> वक्रमुक्तमिदमार्षविरोधात्
> तत्तु तुच्छतरमूह्यमतिज्ञैः ॥

इत्यादिभिरनेकैः श्लोकैश्चतुर्मुखदिनादौ सर्वे ग्रहाः सोच्चपाता मेषादावश्विनीमुखे नासन् किंतु ततोऽनन्तरं खाभ्रखाब्धिरसखाद्रिशशाङ्क १७०६४००० मितैः सौरवर्षैस्ते तत्रागमन्नित्यागममभ्युपगत्य विधिदिनादावेव सर्वेषां ग्रहोच्चपातानां मेषादौ स्थितिं कल्पयतां जिष्णुजभास्कराद्याचार्याणां मुधा तिरस्करणाय बहुलं प्रलपितं तदयुक्तम् । सिद्धान्ते यैर्भगणैः साधिता ग्रहाः संप्रति तत्तत्स्थानेषूपलभ्येरंस्तेषां कथनस्यैवात्रौचित्यात् सृष्टिकाले विधिदिनादिरासीन्नवेत्येतद्विचारस्याकिंचित्करत्वात् ।

एवं

अहर्गणो मध्यमसावनेन
कृतश्चलत्वात् स्फुटसावनस्य ।
तदुत्थखेटा उदयान्तराख्य-
कर्मोद्भवेनोनयुताः फलेन ॥

लङ्कोदये स्युर्न कृतास्तथार्क-
योर्ऽन्तरं तच्चलमल्पकं च ।
मध्यार्कभुक्ता असवो निरक्षे
ये ये च मध्यार्ककलासमानाः ॥

तदन्तरं यत् स्फुटमध्ययोस्तद्-
द्युपिण्डयोः स्याद्विवरं गतिघ्नम् ।
हृतं द्युरात्रासुभिराप्तलिप्रा-
हीना ग्रहाश्चेदसवोऽल्पकाः स्युः ॥

तदन्यथाख्यास्तु निजोदयैश्चे-
द्भुक्तासुपूर्वं विहितं तदानीम् ।
कृतं तथा स्याच्चरकर्ममिश्रं
कर्म ग्रहाणामुदयान्तराख्यम् ॥

इत्थं शिरोमणौ प्रौढ्या यदुक्तमुदयान्तरम् ।
तद्वासनां निराकर्तुमुद्यतोऽस्मि विदां वर ॥

सृष्ट्यादौ क्रान्तिनाडीवृत्तसंपातरूपस्थिरमेषादिः स्थिराश्विनीनक्षत्रादिर्मध्यार्कयुक्तश्चास्ति । अनन्तरं तस्य प्रवहपश्चिमभ्रमणेन विषुवाख्यस्वाहोरात्रवृत्तैकभ्रमाद्भ्रमः स्यात् । तदैव सर्वक्रान्तिवृत्तप्रदेशानां भसंज्ञकानामपि स्वस्वाहोरात्रवृत्तैकभ्रमात् स एवैको भभ्रमः स्वस्वाहोरात्रवृत्तचक्रकलारूपतुल्यासुभिरस्ति ।

अथ यदैको भस्य भ्रमस्तदा मध्यमार्कचिह्नं चलक्रान्तिवृत्ते स्वमेषादेः प्राक् चलितं किंचिदूनमध्यार्कगतिकलाभिर्निरक्षक्षितिजे न तल्लग्नं तदधः किंचिदूनगतिकलोत्पन्नकालेनान्तरितमस्ति । यदा तु तच्चिह्नं संपूर्णगतिकलाभिश्चलितं तदा तदुत्पन्नकालेन तन्निरक्षोदयमानेनोर्ध्वं स्थिरमेषादिः स्वाहोरात्रवृत्ते गच्छति तन्मध्यार्कचिह्नं च निरक्षक्षितिजस्थं स्यादेव । उदयाद्गतिकलावलनेनैव पुनस्तदुदयकालस्य सावनदिवसत्वेनाङ्गीकारात् ।

व्यक्षोदयाख्यैरसुभिर्भवृत्ते-
ऽर्को मध्यगत्या चलितस्तदैव ।
तैरेव नूनं प्रवहानिलेन
स नीयते व्यक्षकुजे क्षहान्तः ॥

तेन तच्चिह्नस्योदयादुदयपर्यन्तमेकः सावनो दिवसस्तन्मध्ये वास्तवं नाक्षत्रमिदम् । मध्यार्कगतिकलोत्पन्नासवो भभ्रमश्चैक इति । अत्रेदमप्यवधेयम् । यदा मध्यार्कचिह्नं च लक्रान्तिवृत्ते चलितं तदा चलक्रान्तिवृत्तमप्ययनांशगत्या चलितमिति तच्चिह्नमेकदिनजायनांशगत्यूनयुक्तगतिकलातुल्यं संपातश्चलितमिति । अत्यल्पामनिर्वाच्यां तामयनांशगतिं त्यक्त्वा केवलगत्युत्पन्नासुयुक्ताश्चक्रकलातुल्यासवः सावनस्वाहोरात्रासवोऽत एव भगवता श्रीसूर्येणोक्ताः स्वसिद्धान्ते * ।

कुदिनाद्यन्तसंपातार्कतो विषुवलिप्तिकाः ।
तदन्तरं यदल्पं ते रविगत्यसवो मताः ॥

अतो यदनुपातादेकसावनान्तर्गतं नाक्षत्रं तत्तु केवलगतिकलाधिकचक्रकलातुल्यासुरूपमवास्तवम् ।एवं प्रतिसावनमेको भभ्रमः संपातार्कागतगत्युत्पन्नः कालश्चेति मध्यार्कचिह्नं यदा प्रतिदिनजगतिचलनेन संपाते स्यात् तदैकः संपातभगणस्तत्रात्र चक्राल एकभभ्रम एवेति स्वेष्टकाले यावन्तः सावना मध्यगतिचलनादुत्पन्नास्तावन्तो भभ्रमास्तत्संपातागतभगणसंख्याकभभ्रमाश्च । अथ तत्र संपातागतो मध्यार्कोऽपि यदीष्टकाले स्यात् तर्हि तदुत्पन्नकालश्चेति त्रयाणां योगे वास्तवं नाक्षत्रं सावनाहर्गणे । अवास्तवं तु अहर्गणतुल्या भभ्रमाः केवलमध्यार्कभगणसंख्याकभभ्रमाः केवलमध्यार्ककलातुल्यासवश्चेति त्रयाणां योगरूपम् । यो हि सावनो मध्यमाहर्गणो वास्तवनाक्षत्रैर्विलक्षणैः सिद्धः स तु निरक्षमध्यार्कोदयकालिको वास्तव इत्युच्यते । अवास्तवैरेकरूपैर्नाक्षत्रैर्मध्यमसावनमानाख्यैः सिद्धः सतु तदुदयकाले नेत्यवास्तव इत्युच्यते । अथात्रानुपातस्य नियतैकविषयत्वात् प्रकृतेऽनुपातसिद्धाहर्गणो मध्यमसावनमानैः सिद्ध इत्यवास्तव एव ज्ञेयः । वास्तवार्थं तूदयान्तरदानमार्षविरोधेऽप्यावश्यकमिति चेत्

अत्रोच्यते । त्वदभिमतावास्तववास्तवान्तररूपोदयान्तरदानेन तद्विनेन वा नहि कथंचिदपि वास्तवत्वसिद्धिः। तथाहि पूर्वोक्तं वास्तवं नाक्षत्रं खण्डत्रयात्मकम्। अहर्गणः १ संपातार्कभगणाः १ संपातमध्यार्ककलोत्पन्नासवः १ । अवास्तवं तु अहर्गणः १ केवलार्कभगणाः १ केवलमध्यार्ककलाः १ । अत्र वास्तवस्यावास्तवेन साकमन्तरे सप्तविंशत्ययनांशकाले तिथ्यादिषु घटीचतुष्टयं किंचिदूनमधिकं वान्तरं स्यात्। मुञ्जालमतानुयायिनां मते त्वनिर्वाच्यमन्तरं स्यादिति महद्वैषम्यम्। निरयणवर्षादौ केवलगत्यधिकचक्रकलासुरूपस्वोक्तमध्यममानेनैव सावनाहर्गणसंख्या भभ्रमतो निरेकेति स्पष्टं वदद्भिः सायनार्ककलातुल्यासुवशात् स्वोक्तिदुष्टमुदयान्तरमुक्तं तदप्यसत्। वास्तवावास्तवयोर्वास्तवभिन्नं यत्किंचिदुदयान्तरं कल्प्यते न तद्वशेन कथंचिदपि वास्तवाहर्गणसिद्धिः स्वार्थविरुद्धपत्ते ।

* सूर्यसिद्धान्ते
ग्रहोदयप्राणहता खखाष्टैकोद्धृता गतिः ।
चक्रासवो लब्धयुताः स्वाहोरात्रासवः स्मृताः ॥

वस्तुतस्तु ये सौरा ये चान्द्रा ये च सावनास्ते तु चन्द्रार्कयोः क्रान्तिवृत्ते स्वस्वगत्या चलनादेवोपपन्नाः। यथांशभोगात् सौरम्। गतिकलाभोगात् सावनम्। चान्द्रं तयोर्द्वादशभागान्तरेणेति परस्परं तेषामनुपातेनानयनं वास्तवमेवेष्टकाले ज्ञेयम्। परं न तथा नाक्षत्रम्। तस्याहोरात्रवृत्तगत्या चलनादिष्टकाले तदनुपातानर्हत्वान्न तद्वास्तवम्। गोलवास्तवरीत्या तदसिद्धेश्च। सौरादधिमासद्वारा तिथ्यन्ते चान्द्रास्ततोऽवमद्वारा सावनास्तिथ्यन्ते ततोऽवमशेषसंबन्धाच्च निरक्षक्षितिजे मध्यार्कोदयकालिकाः सावनाः कृतास्ते तु वास्तवा एव स्थूलत्वाप्रसक्तेः। तत्काले तदनुपातागतं नाक्षत्रं त्ववास्तवमप्यनुपातेन सौरचान्द्रसावनसंख्यानयनार्थं तूपयुक्तम्। परं नहि स्वान्तर्गताशुद्धनाक्षत्रसंबन्धादयमप्यवास्तवः सावनाहर्गणः। अन्यथैककालिकयोः सदसन्नाक्षत्रयोर्भेदेऽपि तत्संबन्धभ्यां तदेकस्य विरुद्धसदसद्भेदकथनानौचित्यप्रसङ्गः। तथा चान्द्राः सौरा अपि। अत्रेदमप्यवधेयम्। मध्यममानासुतुल्या यत्र वास्तवासवस्तत्र तदनुपातेन सावनाद्यमवास्तवमुदयासन्नकाले। अतो यः सृष्टिसौरचान्द्रैरधिमासावमैश्च निरक्षमध्यार्कोदयकालिकः साधितोऽहर्गणः सतु तद्गतिजनिरक्षकालोपलक्षितनिरक्षमध्यार्कोदयकालसंबन्धेनापि सिद्धो वास्तव एव। नहि सोऽस्त्यवास्तवमध्यममानेन। अत्र यः साधितोऽहर्गणः स तूदयकाले निरवयवो दृश्यते। कथं तस्यावास्तवत्वम्। मध्यार्कभुक्ता असव इत्यादितदन्तरभित्यन्तयन्यानीतोदयान्तरदानादयं स्फुटाहर्गणस्तद्रीत्या सावयवः सिध्यति। कथं तस्य वास्तवत्वम्। अहो निरवयवो हि तदहर्गणः स कथं मूढैरुदयासन्नकाले स्वीक्रियते। यस्तैर्मध्यम उच्यते स तूदयासन्नस्तन्मते तद्दशादुदये कथं वारगणनया वारप्रवृत्तिः स्यात्। किंच सौरवर्षादौ रविः शून्यं नोदयान्तरदानादयं संगच्छते। किंच कक्षायां मध्यगतिजमध्यमात् फलान्तरे स्पष्टः फलवासनयास्ति संस्कृतात् ततः। सतु कथंचिदपि न तन्मते। प्रतिमण्डलस्थनियतचलितबिम्बात् कर्णसूत्रसंबन्धिस्फुटयुक्तेरनिवारितत्वात्। अथ यो ह्यवास्तवैकमानादुच्यते न तत्प्रमाणतस्तदुदयान्तरमपि।

सत्यासत्यासुमानाभ्यामुद्गमासन्नकालजौ।
भिन्नप्रमाणसिद्धा तौ विजातीयौ गणौ तव॥

अस्वन्तरं तु तत्रस्थं नहि मूढ गणान्तरम्।
विजातीयग्रहान्तर्नोऽप्येवमस्वन्तरोद्भवम्॥

किंच। अद्यतनश्वस्तनयोर्मध्यमार्कयोरसंस्कृतयोरन्तरं गतिकलाः संस्कृतयोर्नेति महान् विरोधस्तदुदयान्तरदानात्।

मान्दं तु नीचोच्चकवृत्तकेन्द्रं
मध्यो रविस्तच्चलनाद्भवृत्ते।
भागो दिनं वर्षमिनस्य भांशै-
र्मध्यैकगत्या कुदिनं वदन्ति॥

यावत्यो गतयः कल्पे तावन्तः सूर्यसावनाः।
उक्तयुक्त्यैव तद्योगे भगणा भभ्रमा अपि॥

यैर्वास्तवैककुदिनान्तरगः स्वसृष्टे-
र्भैकभ्रमः सवितृमध्यगतेस्तु कालः।
बुद्धोऽस्ति सद्गणितवासनयाथ तैस्तु
ज्ञातो हि मध्यमरविः स्वगतेः समानः॥

कालो गतेर्गतिसमं चलनं विना नो
गत्यैव मेषवदनाच्चलनादहान्तः।
मध्यार्ककेवलगतेश्चलनं सदैक-
सद्भूदिनेऽस्ति हि रवेरुदयान्तराच्च॥

अस्वात्मकं यत्त्वसदस्त्यहो त-
द्वशादयं सिद्ध इति प्रकल्प्य।
मिथ्यैव खेटेऽन्तरमामनन्ति
प्रायोऽत्र गोलं न विदन्ति तेऽज्ञाः॥

अतः कृताहर्गणो मध्यमसावनाचेत्युदयान्तरसंस्करणमयुक्तमिति प्रतिभाति। आर्षानुक्तेश्च। अत्रेदं गोलतत्त्वार्थज्ञैर्मध्यस्थबुद्ध्या निपुणं विभावनीयम्।

एतेन वस्तुस्थितेरनवबोधादहर्गणेऽवास्तवस्वभ्रान्त्या स्वज्ञानोत्कर्षकुगर्वप्रौढौ मन्दप्रतारणद्वारान्यथा कर्तुं प्रवृत्तैर्भास्कराचार्यैरेव बलात् सर्वदेवर्षिमतविरुद्धः सद्गोलवासनाविचारबहिर्भूतः स्वकल्पितोऽसदुदयान्तरवासनाविचारः प्रवर्तितस्ततस्तद्विश्वासतोऽन्यैर्नाममात्राभिमानिभिर्बहुभिः स्वीकृतोऽप्ययं शिष्टैरिदानींतनैः शुद्धमार्गप्रवृत्तैः कथंचिदपि नादरणीय इति कृतं जगद्विरोधेन।

इत्येतत् कमलाकरेण श्रीमद्भास्कराचार्योक्तोदयान्तरकर्मणः खण्डनार्थमभिहितं तदपार्थकम्। उदयान्तरस्य गोलयुक्तिसिद्धत्वात्। तथाहि।

यदा किल विषुवत्क्रान्तिवृत्तसंपातरूपमेषाद्यौ स्थितं मध्यार्कचिह्नं लङ्काक्षितिजे स्यात् तस्मात् कालादनन्तरमेकेन मध्यमसावनदिनेन तच्चिह्नं क्रान्तिवृत्ते मध्यगतितुल्याः कलाः पूर्वतो गच्छेदेव। यतो यावता कालेन मध्यार्कचिह्नं क्रान्तिवृत्ते स्वगतितुल्याः कला अतिक्रामति स एव मध्यगतितुल्यासुयुताभिः षष्ट्या मध्यमनाक्षत्रघटिकाभिः परिमितमेकं मध्यमसावनदिनम्। परमेतावता कालेन तच्चिह्नं पुनस्तत्क्षितिजस्थमेव भवति नवेति विचार्यमाणे यदि तच्चिह्नं स्वगत्या विषुवद्वृत्ते चलेत् तर्हि तद्वृत्तस्य तुल्यावयवानां तुल्यकालैरेवोद्गमनादेकेन मध्यमसावनेन तच्चिह्नं पुनस्तत्क्षितिजस्थमेव स्यात्।

परं तच्चिह्नस्य क्रान्तिवृत्ते चलनात् तद्वृत्तस्य तिरश्चीनतया समानावयवानां समानकालैरुद्गमनाभावात् तावता कालेन तच्चिह्नं तत्क्षितिजे नैव भवेत् किंतु तदूर्ध्वमेवेत्यतिरोहितमल्पज्ञस्यापि । तथा यावद्रविः प्रथमपदे वर्तते तावत् प्रतिमध्यमसावनान्तं तच्चिह्नं तत्क्षितिजादूर्ध्वमेव भवेत् । यावद् द्वितीयपदे तावदधरेव । तृतीये पुनरूर्ध्वमेव । चतुर्थे चाधरेवेति ।

तथा च कल्पादावेकं मध्यार्कचिह्नं विषुवत्क्रान्तिमण्डलसंपातरूपमेषादितः क्रान्तिवृत्ते गन्तुं प्रवृत्तमन्यच्च विषुवद्वलय इति कल्पिते प्रतिमध्यमसावनान्ते विषुवद्वृत्तगमध्यार्कचिह्नमेव लङ्काक्षितिजे स्यात् क्रान्तिवृत्तगं तु नैवेति रविमध्यमसावनाहर्गणान्ते सिद्धो मध्यमग्रहो विषुवद्वृत्तगस्य मध्यरवेरुदये भवति न क्रान्तिवृत्तगस्यातस्तयोर्मध्यमरव्योरुदयान्तरकालेन चालितोऽहर्गणोत्थः खेटः क्रान्तिवृत्तगमध्यरव्युदयकालिकः स्यादित्यवश्यमेवायमुदयान्तराभिधः संस्कारः सर्वग्रहेषु विधातव्यः । तत्र प्रतिमध्यमसायनवर्षान्तं विषुवत्क्रान्तिवृत्तगयोर्मध्यमतरण्योरेकत्र वर्तमानत्वादिष्टदिने या अहर्गणोत्पन्नसूर्यस्य सायनस्य कला याश्च तस्य विषुवकलास्तासामन्तरकलासुमित एव तयोस्तरण्योर्लङ्कोदयान्तरे काल इति तेन कालेन चालिताः खेटाः सम्यग्लङ्कायां मध्यार्कोदयकालिकाः स्युरतः श्रीमता भास्कराचार्येण अहर्गणो मध्यमसावनेनेत्यादि कर्मग्रहाणामुदयान्तराख्यमित्यन्तं सुष्ठूक्तम् ।

इदमुदयान्तरसंस्करणं प्रत्यक्षमिव कयापि युक्त्या निराकर्तुमशक्यमपि को नाम धीमत्तात् कमलाकरादन्योऽवमन्येत ।

एवं गोलयुक्तिसिद्धस्याप्येतत्संस्कारस्य निराकरणाय यत् स व्यलिखत् तदिदानीं विचार्यते ।

सृष्ट्यादावित्यादितुल्यासुभिरस्तीत्यन्तेन निरक्षे विषुवदहोरात्रवृत्तानां यावता कालेनैको भ्रमस्तावतैव सर्वेषां क्रान्तिवृत्तप्रदेशानामप्येक एव भ्रमो भवतीत्युक्तं तन्न सत् । भचक्रस्यायनांशगत्या प्राक् चलनादुक्तकालेन सकलक्रान्तिवृत्तप्रदेशानामुदयासंभवात् ।

एवं यदैको भस्येत्यादिदिवसत्वेनाङ्गीकारादित्यन्तेन मध्यार्कचिह्नं निरक्षक्षितिजं त्यक्त्वा यावता कालेन स्वमध्यगतितुल्याः कलाः क्रान्तिवृत्तेऽतिक्रामति तावतैव तत् पुनस्तत्क्षितिजं प्राप्नोतीत्युक्तं तदप्यसत् । क्रान्तिवृत्तस्य तिरश्चीनतया तस्य समानदेशानां समानकालैरुदयाभावादुक्तकालेन पुना रवेर्निरक्षक्षितिजस्थत्वासंभवात् ।

यच्च रवेरुदयात् पुनस्तदुदयपर्यन्तं कालो मध्यमसावनदिवसत्वेन व्यवह्रियते स मध्यगत्या विषुवद्वृत्ते गच्छतो रवेरेव । क्रान्तिवृत्ते गच्छतस्तु स्फुटसावन इति गोलतत्त्वविदः स्फुटमेव । अतो व्यतीतोदयाद्यैरित्यादितदुक्तपद्ये क्वाहान्तरित्यत्र क्वाहशब्देन स्पष्टसावनदिवसोऽवसेयः । एवं तेन तच्चिह्नस्येत्यादि भभ्रमश्चैक इतीत्यन्तग्रन्थे प्रोक्तः सावनदिवसोऽपि स्फुट एव ।

एवं यदा मध्यार्केत्यादिरविगत्यसवो मता इत्यन्तेन सावनदिवसाद्यन्तकालिकयोः सायनसूर्ययोर्विषुवकलानामन्तरं सूक्ष्मा रविगत्यसवो भवन्तीति प्रदर्शितं तदसत् । एकस्मिन् दिनेऽपि संपातस्य किंचित् पश्चाच्चलनादुक्तविषुवकलान्तरस्यैकदिनजायनगत्युत्पन्नविषुकालेनोनस्यैव सूक्ष्मरविगत्यसुत्वात् ।

अत एवैकस्मिन् दिवसे तदाद्यन्तकालिकसूर्यविषुवकलाविश्लेषमितैरसुभिः सहितो भभ्रमो यद्येकदिनजायनगत्युत्पन्नविषुवकालेनोनितः क्रियते तदा शेषं स्फुटं नाक्षत्रमानं भवति । यदि चैकदिनजायनगतितुल्यासुभिरूनीक्रियते तदावशेषं मध्यमं नाक्षत्रमानं भवेत् । अनयैव युक्त्या कल्पादित इष्टकालपर्यन्तं ये सावनदिवसा व्यतीतास्तत्संख्याका भभ्रमा इष्टकालिकसायनरवेर्भगणतुल्यैर्भभ्रमैस्तदुक्तासुभिश्चाधिका इष्टकालिकक्रान्तिपातस्य गतपर्ययसमानैर्भभ्रमैस्तत्कलामितैरसुभिश्चोनीकृता वास्तवं मध्यमनाक्षत्रमानं भवतीष्टकाले । तथा चाभीष्टाहर्गणे वास्तवं मध्यमनाक्षत्रमिदम् । अहर्गणतुल्या भभ्रमाः १ सायनरविभगणसंख्याकभभ्रमाः १ सायनार्कभुक्ता असवः १ क्रान्तिपातस्य गतभगणसंख्याका भभ्रमा ऋणम् १ तत्कलामिता असवश्चर्णम् १ । तथा कल्पकुदिनानि कल्पसायनार्कभगणा ऋणगतकल्पक्रान्तिपातभगणाश्चेति कल्पभभ्रमाणां खण्डत्रयं प्रकल्प्याहर्गणादनुपातेनानीतं मध्यमनाक्षत्रमानमिदम् । अहर्गणः १ सायनरविभगणाः १ सायनार्ककलामिता असवः १ क्रान्तिपातस्य गतभगणा ऋणम् १ तत्कलामिता असवश्चर्णम् १ । एतच्चाक्षत्रमानं विषुवद्वृत्तगस्य मध्यमसूर्यस्योदयं यावद्भवति न क्रान्तिवृत्तगस्येत्येतदवास्तवमित्युच्यते । अस्य पूर्वसाधितेन वास्तवमानेन सहान्तरे कृते सायनार्कस्य भुक्तासूनां तत्कलामितासूनां चान्तरमुत्पद्यते । तदिदमन्तरमस्मिन् जगति प्रथमं श्रीभास्कराचार्येणावसाय तत् स्फुटमध्यमाहर्गणयोरन्तरत्वेन व्यवहृत्य चैतत्तुल्यफलसंस्कारः सर्वग्रहेषु विधेय इत्युक्तम् । युक्ततरं तत् । तत्र कमलाकरेणेष्टकालेऽहर्गणतुल्या भभ्रमाः संपातार्कभगणसंख्याकभभ्रमाः संपातमध्यार्ककलातुल्याश्चासवश्चेति त्रयाणां योगे वास्तवं नाक्षत्रमित्यसदेव मानं वास्तवं मत्वा महद्वैषम्यं प्रदर्शितम् । तत्तु वास्तवनाक्षत्रनिर्णयाक्षमस्य तस्यैव शोभते ।

तदेतेन वास्तवावास्तवनाक्षत्राध्यवसायेनालो यदनुपातादित्यादि स्वार्षविरुद्धपक्ष इत्यन्तं तदुक्तं नितरां निरस्तम् ।

तस्मात् सौराहर्गणादधिमासद्वारा निष्पन्ने ये चान्द्राः स्युस्तेभ्योऽवमद्वारा साधिता निरवयवाः सावना निरक्षक्षि-

न भुजंगभुजो* बुभुजे भुजगान् ।
निकटेऽपि गतागतकेलिकरान्
मकरानपि नैव बकप्रकर: ॥ ९ ॥
तुङ्गपीनकुचकुम्भशोभिता-
द्रुवसश्चलितचेलपल्लवा: ।
वेणुनादहृतचित्तवृत्तय-
श्चित्रवच्चलदृशोऽवतस्थिरे ॥ १० ॥
गोदोहनादिगृहकृत्यकृतादराणाम्
नन्दव्रजाम्बुजसहोदरलोचनानाम् ।
वेणुस्वनो यदुपते: स्मृतमात्र एव
वृन्दावनाभिगमनोत्सुकतां व्यतानीत् ॥ ११ ॥
संभाव्य सौभाग्यमदं मन:स्थ-
मन्तर्गत: सर्वचराचरस्य ।
अनङ्गरूप: क्षणमङ्गनाना-
मगोचरो गोकुलपालकोऽभूत् ॥ १२ ॥
प्रेम नात्मतनयस्य न त्रपा
भ्रातृभर्तृपितृजापि न त्रपा ।
भीतिरप्यहह मार्गभोगिनाम्
नैव तद्गमनविघ्नमातनोत् ॥ १३ ॥
भगवति सहसैवान्तर्हिते संज्वरार्ता
च्युतमतिरति[1]रस्यान्वेषणार्थं समन्तात् ।
शिव शिव वनमध्ये गोक्षुरक्षेत्रचार-
क्षतचरणतला स्त्रीमण्डली हिण्डते स्म ॥ १४ ॥
पप्रच्छ काचन वधूरिति कृष्णसारं
कृष्ण: सरोजनयनो भवता न दृष्ट: ।
तस्या विलोचनविलासपराजितोऽसौ
दु:खीव किंचिदपि नोत्तरयांचकार ॥ १५ ॥
भो भो भूरुह ते दिशो दश गता: शाखा: शिरश्चाम्बरम्
गोप: कोऽपि तमालकोमलरुचि: कच्चिन्न दृष्टस्त्वया ।
एवं ताभिरुदाहृतो बत मुहुर्वक्तुं वचोऽनीश्वरो
मूर्ध्ना वायुचलेन चन्दनतरु: प्रत्युत्तरं दत्तवान् ॥ १६ ॥
अयि तुलसि नमस्ते मुञ्च मौनं कृपात:

* इगुपधलक्षण: क: ।

१ अथ हृदि विदधाना विस्मयस्यावतारं गत-मतिधृति— इति पाठान्तरम् ।

कथय कथय कृष्ण: क्वाधुना वर्वृतीति[1] ।
भवति परमदु:खं तद्वियोगाग्निना मे
करुणमिति मुहुस्तां गोपिका काप्यवादीत् ॥ १७ ॥
बर्हं ग्रहीतुमवतंसकृतेऽन्तिके ते
प्राप्तो भवेद्विभुरसौ विदितस्त्वयैव ।
तत् कथ्यतां सुभग केन पथा प्रयात:
काचिन्मयूरमिति गोपगृहिण्यपृच्छत् ॥ १८ ॥
तटभुवि तरलाक्ष्यो लक्ष्यते य: समन्ता-
दिह वसति स धूर्त: शीघ्रमायात यूयम् ।
असकृदिति वदन्ती कामिनी कापि बालम्
बत कमपि तमालं गाढमालिङ्गते स्म ॥ १९ ॥
यो वासो यमुनातटे विरचितो यच्च[2] द्विजास्तोषिता-
श्छायापल्लवसंश्रयैर्हिममरुद्वर्षादि सोढं च यत् ।
अत्रैवास्य फलं बभूव सकलं किंचित्कुचानम्रया
तन्वङ्ग्या यदये स्वयं दृढतरं दोर्भ्यां समालिङ्गित: ॥ २० ॥
अनवेक्ष्य तमीश्वरं समन्ता-
द्वचनागोचरदुर्दशा: स्त्रियस्ता: ।
यमुनापुलिनं प्रति प्रयाता
मधुमत्ता इव मौग्ध्यमावहन्त्य:[3] ॥ २१ ॥
अथ ता मदनानलेन दग्धा
दिनदीनेन्दुमुखीर्दयासमुद्र: ।
समजीवयदच्युत: समस्ता:
सुदती: स्वीय[4]समागमामृतेन ॥ २२ ॥
ताभिर्युक्त: पद्मपत्रेक्षणाभी
राकारात्रिस्वामिरम्याननाभि: ।
तत्र प्रीत्या पुष्पधन्वेव साक्षा-
द्रासारम्भं चक्रपाणिश्चकार ॥ २३ ॥
तद्रासमण्डलविलोकनकौतुकेन
देव्यो ययुस्त्रिदशवर्त्म सुवर्णवर्णा: ।
उद्वीक्ष्य ता दृढमिदं निरटङ्कि लोकै-
रभ्रं विनापि तडित: क्वचिदुल्लसन्ति ॥ २४ ॥
सकलरागविचित्रविचारवित्

१ वावसीति, इति पाठान्तरम् ।

२ ये च, इति पाठान्तरम् ।

३ भूतले निपेतु:, इति पाठान्तरम् ।

४ सौख्य—, इति पाठान्तरम् ।

सहजगाननिबद्धमृगीगणा: ।
नटवदुत्सवकृद्व्रजवल्लभा-
व्रजगतो जगतो विभुराबभौ ॥ २५ ॥

निरयस्य निदानमुक्तमाद्यै:
कुलटात्वं मनसापि सुन्दरीणाम् ।
अमृताय बभूव तत् तु साक्षाद्
व्रजसारङ्गदृशां१ विचित्रमेतत् ॥ २६ ॥

रूपविभ्रमगुणोदयेन का
मेनकामपि न गोपिकाजयत् ।
केवला तदपि जीविताधिका
राधिका भगवतो हरेरभूत् ॥ २७ ॥

अपि परयुवतीप्सु: पापसंस्पर्शशून्यो
दधदपि मनुजत्वं सर्वदेवैकनाथ: ।
अपि तनुतरमूर्तिर्व्याप्तलोकत्रयोऽसौ
नवजलधरधामा नन्दधामाजगाम ॥ २८ ॥

नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
त्रैलोक्यकौतुककरं क्रियते स्म काव्यम्
लोलिम्बराजकविना कविनायकेन ॥ २९ ॥

इति श्रीमत्सूर्यपण्डितकुलालंकारश्रीहरिहरमहाराजाधिराजोद्द्योतितलोलिम्बराजकृते हरिविलासे महाकाव्ये रासक्रीडावर्णनं नाम द्वितीय: सर्ग: ॥ २ ॥ :: ॥

इत्थं विधायातिरसेन रास-
क्रीडां स वृन्दावनमध्यदेशे ।
इच्छाविहारी सह गोपगोभि-
र्गोवर्धनं गोधनमारुरोह ॥ १ ॥

तदवेक्षणलोललोचनम्
जगदानन्दकरं जगद्गुरुम् ।
तमुवाच विचारचञ्चुर-
श्चतुरं वाक्यमिदं हलायुध: ॥ २ ॥

विरचयन्ति विहारमिहान्वहम्
प्रणयिनीजनरञ्जितमानसा: ।
रुचिरचित्रविहंगमवारिजा-

१—सत्पद्मदृशां, इति पाठान्तरम् •

वृतवनेषु वनेषु वनेचरा: ॥ ३ ॥

अनुभवति वियोगं नात्र कोक: कदाचित्
कलयति सह सख्यं चम्पकैश्चञ्चरीक: ।
न विरमति विकासो नीरजानां रजन्याम्
जनयति जनचित्रं चन्दन: पुष्पयोगात् ॥ ४ ॥

तुङ्गत्वं नितरां निरीक्ष्य सहजं सौभाग्यमप्यद्भुतम्
रम्यांश्चापि मणींस्तथा प्रतिभटान् दिग्दन्तिनां दन्तिन: ।
अस्यानन्यसमस्य हन्त गिरयो लज्जाभराद्दुस्तरा-
न्मैनाकप्रमुखा निपेतुरुदधौ ये निस्त्रपास्ते स्थिता: ॥ ५ ॥

मुञ्चन्मदं निर्झरकैतवेन
जेजीयतेऽसौ करिराजरूप: ।
हेमाद्रिमुख्या गिरय: समस्ता:
ग्रावत्वमेतस्य विडम्बयन्ति ॥ ६ ॥

इह प्रतिवनं मदान्मुदिरकालकालं विना
नटप्रतिभट: सदा शिखियुवा नरीनृत्यते • ।
द्विपाधिपविदारणारुणनखास्रसंचासकृ-
न्मृगाधिपभयंकरी न न दरी दरीदृश्यते ॥ ७ ॥

इतस्तत इहार्थिनां प्रियपरंपरापूरणा१
जयन्ति जगतीरुह: सुरतरुद्रुहस्तत्क्षणात् ।
हरन्ति च शुका: स्फुरत्प्रथमपल्लवालीरुच:
सुधामधुरबन्धुरध्वनिमुच: शुच: सुह्रवत् ॥ ८ ॥

समग्रऋतुसंपदा सततसंवृते सर्वत:
सुरै: सह सुराङ्गनावलिरिहैव संतिष्ठते ।
नच स्मरति तन्महामणिगणप्रभाभास्वरम्
प्रसन्नतरकन्दरप्रकरमन्दिरं मन्दरम्२ ॥ ९ ॥

ये ये नृपा: प्रतिनृपालमहाभयेन
नानासमृद्धिसुभगानि पुराण्यमुञ्चन् ।
ते ते तपस्विन इवात्र निषेव्यमूल-
कन्दोदकानि समयं गमयन्ति तावत् ॥ १० ॥

क्रीडागृहन्ति लवलीलतिकानिकुञ्जा-
स्तल्पन्ति बालमृदुलारुणपल्लवानि ।

१—पूरणाञ्— इति पाठान्तरम् ।
२ स्मरत्यपि न सर्वथा सुभगकन्दरं मन्दरं
हरेरपि नवास्फुरत्कनकमन्दिरं मन्दिरम्
इति पाठान्तरम् ।

भोगाः प्रसुप्तफणिनामुपबर्हयन्ति
मज्जन्ति चात्र दृषदः कुलटाङ्गनानाम् ॥ ११ ॥
तपतपनमहोभिस्तापिते कुम्भयुग्मे
युवतिकुचयुगश्रीधारिणि प्रेरयन्ति ।
इह कति न करीन्द्राः १ पुष्करालंकृतायां
सरिति किमपि पीत्वा पुष्करैः पुष्कराणि ॥ १२ ॥
अस्मिन् कदम्बकलिकाकलितावतंसा
गुञ्जावलीवलितपीनपयोधराग्रा ।
दृष्ट्यैव २ कस्य वशिनो विषयानुषक्तम्
चित्तं चिरं वनचरी न चरीकरीति ॥ १३ ॥
इत्थं शृण्वन्स्तस्य वाणीविलासान्
पश्यन् रत्नश्रेणिशोभाविशेषान् ।
प्रीतिं प्राप्तो गोदुहां चक्रवर्ती
मन्दं मन्दं शैलमध्यारुरोह ॥ १४ ॥
स ततो विचरन्नितस्ततो
बलभद्रेण समं शनैः शनैः ।
करकङ्कणवद्वसुंधरा-
तलमालोकयति स्म माधवः ॥ १५ ॥
अलंकृते पुण्यपयःप्रवाहै-
र्विश्रान्तिदानोद्यतवृक्षवर्गे ।
सिद्धाश्रिते श्रीपतिचित्तवृत्ति-
स्तत्र प्रसादोदयमाससाद ॥ १६ ॥
गिरिराजममुं मनोरमं
मधुमुख्या ऋतवः समाययुः ।
अथ तस्य विधातुमर्चनम्
रुचिराभिः सुमनःसमृद्धिभिः ॥ १७ ॥
पुष्पाणि प्रथमं ततः प्रकटिताः स्वान्तोत्सवाः पल्लवाः
पश्चादुन्मदकोकिलालिललनाकोलाहलः कोमलः ।
इत्थं प्रादुरभूदुपेत्य ३ परितः प्राज्यप्रमोदप्रदः
प्रोद्दामद्रुमराजिराजितवनक्षोणीमृतुक्ष्मापतिः ॥ १८ ॥
प्रसूनकलिकाकुलैः किसलयैः करस्पर्धिभिः

१ इह मदवदिभेन्द्राः' इति पाठान्तरम् ।
२ दृष्ट्वैव' इति पाठान्तरम् ।
३ —त् प्रविश्य, इति पाठान्तरम् ।

स्फुरन्मधुमदभ्रमद्भ्रमरकोकिलाकूजितैः ।
इति क्रमसमुद्गतैरुपवनावलीमण्डली-
ममण्डयदिव प्रियामृतुवसुंधरावल्लभः ॥ १६ ॥
आरूढो मलयानिलद्विपवरं युक्तो विलासानुगैः
पीतः पुष्पविलोचनैर्नवलतापौराङ्गनानां गणैः ।
अभ्राम्यद्वनपत्तने मधुमहीपालस्ततः कोकिला-
लीलालापमिलद्भ्रमद्भ्रमरिकाभाङ्कारभेरीरवैः ॥ २० ॥
सुहृदस्तरुणीनखक्षतानाम्
प्रतिपक्षाः पथिकाङ्गनाजनानाम् ।
दहनद्युतिदस्यवः समन्ताद्
विपिने किंशुककुड्मला विरेजुः ॥ २१ ॥
किंशुकक्षितिरुहां विलसन्तः
कुड्मलाः कुटिलतां कलयन्तः ।
पान्थवारणविदारणताम्राः
कामकेसरिनखा इव रेजुः ॥ २२ ॥
वारस्त्रीव वनस्थली नवनवां शोभां बभारान्वहम्
पान्थान् पीडयति स्म तस्कर इव क्रूरैः शरैर्मन्मथः ।
शृङ्गारः सगुणः क्षमापतिरिव प्राप्तः प्रतिष्ठां पराम्
रात्रिः स्वीकुरुते स्म मुग्धललनालज्जेव कार्श्यं क्रमात् ॥ २३ ॥
उपवनतरुनृत्याध्यापने लब्धवर्णो
विरचितजलकेलिः पद्मिनीकामिनीभिः ।
प्रियसुहृदसमेषोरायये योगियोग-
स्थितिविदलनदक्षो दक्षिणो गन्धवाहः ॥ २४ ॥
प्राप्तः प्राज्यमिव श्रमं जलजिनीसौरभ्यभारं वहन्
उद्दामस्तवकानमन्नवलतालक्ष्मीमिवालोकयन् ।
स्वीकुर्वन्मदमन्थरानिव गतेर्वामभ्रुवां विभ्रमान्
मन्दं मन्दमुपाजगाम पवनः पाटीरवाटीतटात् ॥ २५ ॥
अतिमन्दचन्दनमहीधरवातम्
स्तवकाभिरामलतिकातरुजातम् ।
अपि तापसानुपवनं मदनार्तान्
मदमञ्जुगुञ्जदलिपुञ्जमकार्षीत् ॥ २६ ॥
कुपितापि मनःपतिना * सह का
सहकारविलोकनजातरसा ।

* अतिप्रियेणेत्यर्थः ।

तरसा रमते स्म न हा रमणी
रमणीयतनुः सुतनुः सुरभौ ॥ २७ ॥
प्रस्फुरत्प्रचुरबालपल्लवा
वीरुधश्च तरवश्चकाशिरे ।
क्रीडिता इव कुसुम्भवारिभिः
काममित्रसमये समागते ॥ २८ ॥
रूपसौरभसमृद्धिसमेतम्
चम्पकं प्रति ययुर्न मिलिन्दाः ।
कामिनस्तु जगृहुस्तदशेषा
ग्राहका हि गुणिनां कति न स्युः ॥ २९ ॥
कति कति न वसन्ते वल्लयः शाखिनो वा ,
किसलयसुमनोभिः शोभमाना बभूवुः ।
तदपि युवजनानां प्रीतये केवलोऽभू-
दभिनवकलिकालीभारशाली रसालः ॥ ३० ॥
समवलोक्य विलासवनस्थलीम्
न पथिकैः पथि कैः पतितं भुवि ।
मलयजद्रुमसौरभमेदुरो-
दरसमीरसमीरितवल्लरीम् ॥ ३१ ॥
बकुलकुलमिलन्मिलिन्दमाला-
मदकलकोकिलकूजितोदयेन ।
अहह नियमिनोऽपि तत्त्वचिन्ता-
च्युतमतयो मतयोषितो बभूवुः ॥ ३२ ॥
विकसति सहकारे स्फारसौरभ्यसारे
वहति धुतपटीरे मन्दमन्दं समीरे ।
कलयति कलवाचं कोकिलोके च रुष्टः१
क्षणमपि न मृगाक्ष्या वल्लभो दुर्लभोऽभूत् ॥ ३३ ॥
कूजितानि कलयन् वनप्रियो
न प्रियो विरहिणामजायत ।
मन्मथाग्निरपि भस्मसा,दरम्
सादरं मुनिमनोऽम्बुजं व्यधात् ॥ ३४ ॥
विलासिभिरिवोन्मदै रचितरम्यगुञ्जारवैः
प्रसूनसुरभीकृतैर्विगलितत्रपास्तापसाः ।
अशोकशिखरस्थितैः सुनयनान्वितैः षट्पदै-

१ कोकिले साभिमानः, इति पाठान्तरम् ।

र्निरन्तरनिषेविताभितमधौ मधौ रेमिरे ॥ ३५ ॥
दत्ते जनोऽसौ खलु विद्यमान-
मविद्यमानं तु न कोऽपि तावत् ।
वियोगिनां पुष्पनमन्नशोकः
शोकप्रदोऽभूदतिचित्रमेतत् ॥ ३६ ॥
जगौ विवाहावसरे वनस्थली-
वसन्तयोः कामहुताशसाक्षिणि ।
पिकद्विजः प्रीतमना मनोरमम्
मुहुर्मुहुर्मङ्गलमन्त्रमादरात् १ ॥ ३७ ॥
आस्वादितं स्वादुमरन्दबिन्दु
स्वच्छन्दमिन्दीवरसुन्दरीभिः ।
माकन्दपुष्पं प्रमदाजनस्य
प्रमोदमामोदभरैरकार्षीत् ॥ ३८ ॥
पान्थानां प्रमदा इव प्रतिदिनं दैन्यं ह्रदिन्यो ययु-
र्दृश्यन्ते स्म दिगम्बरा इव वने पत्रोज्झिताः पादपाः ।
निःश्वासा इव दुःसहा विरहिणां वाता ववुः सर्वतः
पायं पायमिव प्रियाधररसं पाथः पपुः प्राणिनः ॥३९॥
रेजे पुष्पैर्ग्रीष्ममासाद्य मल्ली
मल्लीं सद्यः संश्रयन्ते स्म भृङ्गाः ।
भृङ्गैस्तत्रारम्भि हर्षेण गानं
गाने लौल्यं लेभिरे योगिनोऽपि ॥ ४० ॥
अथ नभसि निरीक्ष्य व्याप्तदिक्चक्रवालम्
सजलजलदजालं प्राप्तहर्षप्रकर्षः ।
विहितविपुलबर्हाडम्बरो नीलकण्ठो
मदमृदुकल२कण्ठो नाट्यमङ्गीचकार ॥ ४१ ॥
महीमण्डलीमण्डपीभूतपाथो-
धरारब्धहर्षासु वर्षासु सद्यः ।
कदम्बे प्रसूनं प्रसूने मरन्दो
मरन्दे मिलिन्दो मिलिन्दे मदोऽभूत् ॥ ४२ ॥
दृष्ट्वाडम्बरमम्बरे घनकृतं सौदामिनीनर्तकी-
नृत्यारम्भमृदङ्गमङ्गलरवं श्रुत्वा च तद्गर्जितम् ।
पुष्यत्पुष्पभरानताङ्घ्रिपतरुस्कन्धावसद्वायस-

१–मुहुः, कूजितमन्त्रमादरात्, इति पाठान्तरम् ।
२ मदनमृदुल– इति पाठान्तरम् ।

क्वाणाकर्णनसोत्सवप्रियतमं पान्था ययुर्मन्दिरम् ॥४३॥

अभिनवयवसश्रीशालिनि क्ष्मातलेऽस्मि-
न्नतिशयपरभागं भेजिरे जिष्णुगोपाः ।
कुवलयशयनीये मुग्धमुग्धेक्षणाया
मणय इव विमुक्ताः कामकेलिप्रसङ्गात् ॥ ४४ ॥

शष्यन्त्यवश्यमधुना हृदयाधिनाथा
मुग्धा मुधा कुरुत मा विविधं विलापम् ।
इत्थं शशंसुरिव गर्जितकैतवेन
पाथोधराः पथिकपङ्कजलोचनाभ्यः ॥ ४५ ॥

आकर्णितानि रसितानि यया प्रसर्प-
त्प्रद्युम्नराजरथनिस्वनसोदराणि ।
उच्चै रणच्चरणनूपुरया पुरन्ध्या
क्षिप्रं प्रियं कुपितयापि तयाभि सस्रे ॥ ४६ ॥

अम्भोवाहमुरद्विषो निवसनं ध्वान्ताद्रिदिव्यौषधी
कन्दर्पस्य विलासचम्पकधनुर्वर्षालतामञ्जरी ।
लेखा व्योमकषोपले विरचिता चामीकरस्य स्फुर-
द्दाम्नः पान्थविलासिनीजनमनःकम्पाय शम्पाभवत् ॥४७॥

प्रणतिभिरपि पत्युः प्रार्थनाभिश्च सख्याः
क्षणमपि न मनस्तो मानिनी मानमौज्झत् ।
तमसमशरशस्त्रीभूतगानप्रकारः
फणिनमिव शिखण्डी किं न खण्डीचकार ॥ ४८ ॥

घनसमयमहीभृत्पत्तनस्याम्बरस्य
त्रिभुवनपतिचापं गोपुरत्वं प्रपेदे ।
अपि विरसवचोभिः प्राप्तपङ्काभिषेकाः
कुकवय इव भेकाः खेदयन्ति स्म लोकान् ॥ ४९ ॥

सद्मन्येव निरन्तरं निवसतिर्मित्राद्यनालोकनम्
पन्थाः पङ्कसमाकुलः कलुषता वारां सदा दुर्दिनम् ।
एवं यद्यपि दूषणानि तदपि स्वर्भूजनोल्लासकृत्[१]
शस्योत्पत्तिनिमित्ततैकगुणतः प्रावृट् प्रपेदे यशः ॥५०॥

वृद्धाङ्गनेव विजहौ सरिदुद्धतत्वम्
वेदान्तिनामिव मतं शुचि नीरमासीत् ।
चन्द्रे प्रभा युवतिवक्त्र इवाद्भुताभू-
द्विद्वत्कवित्वमिव केकिरुतं न रेजे ॥ ५१ ॥

मधुमधुरिमभङ्गीं भेजिरे हंसनादा-
स्तुहिनपटललीलां लेभिरे वारिवाहाः ।
क्षितिरभवदपङ्का किंच रोलम्बबाला-
वलिललितनलिन्यः शैवलिन्यस्तदासन् ॥ ५२ ॥

स्फुटं स्फुटपलाशवत् सुभगभासि चञ्चूपुटे
विपाककपिशीकृताः कमलमञ्जरीर्बिभ्रती ।
बभौ दिवि शुकावलिः कुवलयच्छविर्जङ्गमा
स्वभावहृदयंगमा विबुधचापलक्ष्मीरिव ॥ ५३ ॥

चक्रे चण्डरुचा समं रणमसौ हेमन्तपृथ्वीपति-
र्ये ये तत्र जिता दिवाकरकरास्ते तेऽमुना तत्क्षणात् ।
कान्तानां कुचभूधरे निदधिरे मन्येऽहमेवं तदा
नो चेन्मन्दकरः कथं दिनकरस्तप्तश्च तन्वीस्तनः ॥५४॥

तपनस्तपति स्म मन्दमन्दम्
ज्वलनोऽपि ज्वलति स्म किंचिदेव ।
शरणं शिशिरेऽथ किंच यूनाम्
युवतीनां स्तनयुग्ममाचमासीत् ॥ ५५ ॥

अथ सुखमनुभूय भूधरेऽस्मिन्
ऋतुनिकरेण विराजिते समन्तात् ।
निकटमुपगते सहस्ररश्मौ
चरमगिरेर्व्रजमच्युतः प्रतस्थे ॥ ५६ ॥

गोधनानि पुरतः समाययु-
र्गोदुहस्तदनु बर्हभूषणाः ।
रेजतुर्मुरलिकामनोहरौ
तौ तदन्तरगतौ नटाविव ॥ ५७ ॥

प्रापदस्तमयमुष्णदीधितिः
कामिनीभिरसकृन्निरीक्षितः ।
धूलिधूसरतनुश्च साग्रजः
प्राविशद्व्रजमसौ जगद्गुरुः ॥ ५८ ॥

नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
त्रैलोक्यकौतुककरं क्रियते स्म काव्यम्
लोलिम्बराजकविना कविनायकेन ॥ ५९ ॥

इति श्रीमत्सूर्यपण्डितकुलालंकारश्रीहरिहरमहाराजा-
धिराजोद्द्योतितलोलिम्बराजकृते हरिविलासे महाकाव्ये
ऋतुवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥ :: ॥ :: ॥

---

१—जनाह्लादकृत्, इति पाठान्तरम् ।

## RÁMA AND SITÁ.

### IX.

### Mount Chitrakúta.

"Though reft of power and kingly sway,
Though friends and home are far away,
I cannot mourn my altered lot,
Enraptured with this lovely spot.
Look, darling, on this noble hill,
Which sweet birds with their music fill:
Tinged with a thousand metal dyes,
His lofty summits kiss the skies.
Here gleams a line of silvery sheen,
There, a broad streak of emerald green,
And, next, a belt of gold is spread,
Made glorious by a fringe of red,
While, higher as the peaks ascend,
Sun-light and flowers and crystal blend.
See, dear, the trees that clothe his side,
All lovely in their summer pride,
In richest wealth of leaves arrayed,
With flower and fruit and light and shade.
Look where the young rose-apple glows.
What loaded boughs the mango shows!
See, waving in the western wind,
The light leaves of the tamarind,
And mark that giant peepul through
Those feathery clumps of tall bamboo.
That depth of shade, that open lawn,
Allure the wood-nymph and the faun;
And, where those grassy glades extend,
The spirits of the air descend
To wile the summer night away
With dalliance and mirth and play.
Look, from the mountain's woody head
Hangs many a stream like silver thread,
Till, gathering strength, each rapid rill
Leaps, lightly laughing, down the hill,
Then, bounding o'er the rocky wall,
Flashes the foamy water-fall.
O, lives there one too cold to feel
Delicious languor o'er him steal
As the young morning breeze, that springs
From the cool cave on balmy wings,
Breathes round him, loaded with the scent
Of bud and blossom, dew-besprent!
See, round the hill, at random thrown,
Those masses of primeval stone,
Of every shape and many a hue,
Yellow and black and red and blue.
But all is fairer still by night.
Each rock reflects a softer light,
When the whole mount, from foot to crest,
In robes of lambent flame is dressed;
When, from a million herbs, a blaze
Of their own luminous glory plays,
And, clothed in fire, each deep ravine,
Each pinnacle and crag is seen.
Dear Sítá, Chitrakúta's height
Transports me with such pure delight,
With thee and Lakshman here to dwell
For many a year would please me well."



### The Ganges.

"Home of the heron and the swan
    See, lovely Gangá glides,
With verdant isles to gem her breast,
    And flowers to deck her sides.
With every tree of sweetest fruit
    And fairest bloom that springs;
And glorious as the lucid stream
    Where bathes the King of kings.
How lovely are those shelving banks,
    Now dotted o'er with deer,
That sully, as they quench their thirst,
    The waves that were so clear.
Look, darling, to that point below,
    Those holy hermits mark,
I know them by their matted hair,
    And by their coats of bark.
See, on the river bank they stand,
    Their early bathing done;
Lifting their aged hands in prayer
    They reverence the Sun.
O look, the merry wind is up,
    And scatters leaves around:
The very mountain seems to dance,
    With bending forests crowned.
See Ganga's wavelets white with foam
    As round the isles they whirl;
Here troubled by the bathing Saints,
    And there like orient pearl
Look, scattered by the morning breeze,
    What beds of blossoms lie,
And chaplets, cast upon the wave,
    Are dancing swiftly by.
Hark to the wild-duck's merry call,
    Amid the reeds at play:
Hark to the joyous mallard's note
    Responsive far away.
My life in fair Ayodhya's town
    Was not so sweet to me
As gazing on this lovely flood,
    That glorious hill, and thee.
Come, bathe in Ganga's wave, to her,
    With friendly love, repair,
And pluck her lilies in thy play,
    And twine them in thy hair
This mount, with all its savage life,
    Ayodhya's city deem,
And on this beauteous river look

As our own SARJU's stream.
O SÍTÁ, I am wild with joy,
So rare a lot is mine,
Cheered by a duteous brothers's care,
And loved with love like thine.
With hermit's food, and bathing here
At dawn and noon and eve,
I ne'er will mourn AYODHYA's towers,
Nor for my kingdom grieve."



TRUTH.

"Urge me no more: thy words are fair,
But virtue's garb they falsely wear.
With pleasing art thy tongue misleads,
And lures me to ignoble deeds.
For what is might or ancient race,
The pomp of wealth, the pride of place?
'Tis virtue marks the line between
The great and good, the low and mean
And he from virtue's path who strays,
To wander in forbidden ways,
Whate'er his birth, must hope in vain
The praises of the good to gain
Shall I the righteous path forsake.
The laws of duty foully break,
Be scorned by all the good and just,
And lay mine honour in the dust?
Shall RÁMA stain his soul with sin,
And lose the heaven he lives to win?
Nor would the crime with RÁMA end:
For countless lives on him depend.
The people in their prince behold
Their best example, guide, and mould,
And, by his vice or virtue led,
The path he walks they strive to tread.
That truth and mercy still must be
Beloved of kings, is Heaven's decree:
Upheld by truth the monarch reigns,
Nay, truth the very world sustains
Truth evermore has been the love
Of Saints below and Gods above;
And endless bliss by truth is won
In BRAHMÁ's world beyond the sun.
For holy truth is root and spring
Of virtue and each lovely thing:
A mighty Lord, supreme on earth,
Peerless for beauty, power, and worth
A crown of glory, still more fair
Than sacrifice and praise and prayer.
Shall I this heavenly gem despise,
Attracted by an earthly prize?
Shall I, misled by lust of sway,
My father's order disobey;
And, folly's dupe or passion's slave,
Force him to break the oath he gave?
Shall I, to gain my royal right,
The clear command of duty slight:
With lying lips my glory stain,
And basely sin for paltry gain?
For not alone by hand and thought
The soul of man with crime is fraught:
Sin's meanest tool I count the third,
The tongue that speaks the lying word.
No, brother, urge this plea no more,
I still will keep the oath I swore:
Within the forest calmly dwell,
Contented with my hermit's cell,
Nor fail to give the Gods a share
Of offerings from my humble fare."

*Rámáyana Book II. XCIV, XCV, CIX*

---

TO THE EDITOR OF THE PANDIT.

Queen's College,
*Benares.*

SIR,

A Hindu gentleman has recently delivered a lecture at the Benares Institute, consisting of remarks on Mr. Lingam Lakshmaji Pantlu Garu's lecture on the "Social Status of the Hindus," in which he has attempted to vindicate *idolatry* and the Hindu doctrine of *necessity*. The lecture is published, but the circulation is very limited. It is in fact a sealed pamphlet to the public, and hence its resemblance to that of the Freemasons. So, I think, it may not be improper to ask you to bestow a little space in your valuable journal entitled काशीविद्यासुधानिधि:* (one of the objects of which is "to offer a field for the discussion of controverted points in old Indian Philosophy, Philology, History and Literature") for a slight review of this sealed pamphlet, and consequently of the great questions of *idolatry* and the Hindu Doctrine of *necessity*.

The lecturer in the first place offers a criticism on Mr Garu's notion of idolatry, who says that the very name of it is sufficient to "trumpet forth the grossness of our system of worship," and in another place "we regard every idol we worship as the Self-existent, Eternal, Supreme Being, who is the cause of everything and into whom everything is finally absorbed." To this latter sentence of Mr. Garu, the lecturer with great ingenuity attaches three distinct meanings which are as follows:—(1) "That all our notions of Godhead are limited to our idols; it is our idols that are our divinities, and beyond our idols we have no divinity."—(2) "That we do believe in a Supreme Being, Infinite and Eternal, who is distinct from the idols, yet at the same time we believe him to be mere idols, or masses of matter inert, unthinking and

---

*काशीविद्यासुधानिधिः कथंभूतः "प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वित:"

perishable."—(3) "That we believe that what is Real in the idols is the Supreme Being, that the stone or wood is a mere illusion, seeming to exist because of the sustaining presence of the Divine Spirit." Then, "if by idolatry," exclaims the lecturer, "is meant a system of worship which confines our ideas of the Divinity to a mere image of clay or stone, which prevents our hearts from being expanded and elevated with lofty notions of the attributes of God, we disclaim idolatry, we abhor idolatry and deplore the ignorance or uncharitableness of those that charge us with this grovelling system of worship" Whether idolatry, by confining our ideas of the Divinity to a mere image, prevents us from having lofty notions of the attributes of God or not may be best known by appealing to the consciousness of any true Hindu idolater. If this be actually the case with the generality of the Hindu idolaters, the lecturer's disclaiming and abhorring idolatry and deploring the "ignorance or uncharitableness of those that charge us with this grovelling system of worship," is of no avail. His abhorrence of the system must give way before facts. If millions of Hindu men and women be really found unable to raise their minds to God, is not Mr. Garu quite justified in remarking that the very name of idolatry is "sufficient to trumpet forth the grossness of our system of worship"? Be that as it may, the first meaning which the lecturer attaches to the sentence of Mr. Garu has no sense in it; for the Sanskrit word प्रतिमूर्त्ति. or प्रतिमा means a *likeness* or an *image*, and it is clear that there must be another thing besides the likeness or image, viz, the thing of which it is a likeness or an image. There must be at least two things for a *likeness*, or an *image*, and what is the second thing here must be a God. Thus the lecturer's fondness for shewing ingenuity by attaching different meanings to the sentence of Mr. Garu has made him blind as regards the Sanskrit word for an idol and led him to the utterance of nonsense.

Neither the second nor the third meaning attached to the sentence of Mr. Garu is the true one, although the lecturer expresses full assurance that Mr Garu must have meant it in the second sense. Mr. Garu is a representative of the people and consequently cannot invent three distinct meanings out of his own mind as the lecturer has done; neither has he so much power of invention.

Moreover as regards the second meaning it should be observed that no man can form two different conceptions of the same thing at one and the same time. In order to form two distinct ideas of a thing we require two distinct portions of time. A little consideration would have shewn the lecturer that the second meaning attached to the sentence of Mr. Garu is also nonsense. For to believe a thing at one and the same time to be a "Supreme Being, Infinite and Eternal," distinct from the idol, and also a mere idol, or mass of "matter, inert unthinking and perishable," is impossible.

The fallacy of the lecturer is in supposing that there can be three and only three distinct meanings of the sentence of Mr Garu, and he argued that as Mr Garu cannot mean the first and the third which are respectively too foolish and too deep, he being an ordinary man must have meant the second Little did the lecturer dream of the fact that a fourth and a true meaning can be attached to the sentence of Mr. Garu, which is as follows:—That we believe in a Self-existent, Eternal Supreme Being as distinct from the idol and that He is called into the idol at the time of worshipping by means of mantras It should be borne in mind that Mr Garu, here assuming the philosophic belief of the Hindus that the thirty-three crores of gods are all one and the same Being, shews the grossness of the system This, I think, is the true sense of the sentence and that which Mr. Garu should, at least, be supposed to have meant, for we should, as justice requires, put the best construction upon it we can. Accordingly it has been said अभिरूप्यां च बिम्बानां देवः सांनिध्यमृच्छति when an idol is beautifully made there comes the god (*i e* the particular god whom the worshipper invokes) Such being the case प्रतिमायां शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् any man who thinks of the image of a god as a piece of stone goes to hell If this be acknowledged to be the true sense of the sentence of Mr Garu the third meaning of the lecturer, though plausible, must be confessed to be a forced one. Neither can the lecturer claim any originality for it, for the same defence is generally heard in the mouth of idolatrous cavillers.

As regards this third meaning it should be observed that the lecturer, without a shadow of proof, takes for granted the Vedántic conclusion, (ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः the only truth is Brahma, the universe is a delusion, even the animals are not distinct from Brahma) as true.

Is the lecturer not aware of the fact that there is a rival system of the Sánkhya propounded by the great sage Kapila* who says ईश्वरासिद्धेः (aph 93 book I.) "For there is no proof that there is a god"? The lecturer in order to establish his point should have at least refuted the Sánkhya Philosophy, for it does not at all inculcate the doctrine of the unreality of the external world (जगत्-

* Kapila is regarded by the Hindus as an incarnation of Vishṇu and represented to have obtained by birth the knowledge of the twenty-five principles "पञ्चविंशतितत्त्वेषु जन्मना ज्ञानमाप्तवान्" ॥ तथाच भागवते

"पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतं ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयं" ॥

सत्यमदुष्टकारणजन्यत्वाद्बाधकाभावात् aph. 52 book VI "The world is real for it is the effect of an unobjectionable cause and because there is no one to refute this") I fear the lecturer has not understood the Vedántic tenet because he identifies it with Bishop Berkeley's idealism and Mr. Mill's 'Permanent Possibilities of Sensation' True it is that Mr. Mill defines *matter* as a 'permanent possibility of sensation,' but the Vedánta goes further and positively affirms that the sensation itself is a delusion. As for Bishop Berkeley, he has never denied the existence of matter which we see and feel around us, but simply the noumenon or substance or substratum of it. "When Berkeley denied the existence of matter," says Mr Lewes in his Biographical History of Philosophy, "he simply denied the existence of that unknown substratum the existence of which Locke had declared to be a necessary inference from our knowledge of qualities," But why resort to authorities when we have Berkeley's own words?—"I do not argue," says the Bishop, "against the existence of any one thing that we can apprehend either by sensation or reflection. That the things I see with my eyes and touch with my hand do exist, I make not the least question. The only thing whose existence I deny is that which philosophers call matter, corporeal substance;" so that the doctrine of the Vedánta can never be identified with the tenets of a Berkeley or a Mill. For the lecturer's consideration I give here the true view of the purport of the Vedánta in Sanskrit and in my own words.—यद्यपि हिन्दुजातयः सांख्यादिसर्वदर्शनानि ऋषिनिर्मितानि मन्यन्ते तथापीदानीं प्रायः सर्वे वेदान्तदर्शनसिद्धान्तान् विशेषरूपेणाद्रियन्ते अतः कारणात् तद्दर्शनसिद्धान्तान् संक्षेपेण यथाबुद्धि निरूपयिष्यामः॥ वेदस्यान्तो वेदान्तो ब्रह्मजिज्ञासेति वेदान्तदर्शनस्योद्देश्यः। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ज्ञातुमिच्छा जिज्ञासा। इत्याशयेन भगवान् बादरायणः शारीरकसूत्रग्रन्थे प्रथमं सूत्रयामास॥ ते वेदान्तिनो ब्रह्मवादिनो न सांख्यवत् प्रकृतिमेव जगतो मूलकारणं मन्यन्त इत्यर्थः परंत्विमानि सर्वाणि दृश्यवस्तून्यकल्पितानि रज्जौ सर्पत्वभ्रमवच्छुक्त्यां रजतत्वभ्रमवच्च। एवं प्रकारेण रज्जोर्वा शुक्त्याः स्थाने जगत्प्रपञ्चं स्थापयित्वा जगत्त्वस्याध्यासो बोद्धव्यः॥ ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापर इति वेदान्तदर्शनसिद्धान्तज्ञाने पुरुषः परमपुरुषार्थं प्राप्नोतीति शम्॥ काशीस्थसभायाः संपादकः श्रीशशिशेखरसान्यालः॥

Now it should be remarked that the lecturer's forced assertion: "it is not the image that we worship as the Supreme Being, but the Omnipresent Spirit that pervades the image as he pervades the whole universe," and its anticipated objection—"why do not you worship the Omnipresent Deity in any other material object than an image or symbol consecrated?" and its answer: "simply because no association has been established in our minds between it and the presence of God," is an example of logical nicety. What is the use of forming *fictitious* associations with the presence of God at all, as if the existence of God depended upon the lecturer's forming arbitrary association? A whimsical theory indeed! A true association must be inherent in human nature and therefore must be suggested by its own law. Hence Dr. Brown calls *association* the law of *suggestion.* Let the lecturer associate God with his own body, if he likes, and compassionately call others atheists "being incapable of thinking for themselves."

Another ridiculous argument which has been brought forward by the lecturer is that because we cannot conceive God and His Infinite attributes in the abstract therefore in order to avoid "practical" atheism, we should practise idolatry It is not a fact that we cannot form abstract notions On the other hand, I think it is *abstraction* alone that puts a perfect distance between men and brutes To the effect that we can form abstract notions, I quote the following from Mr. Locke:—"The use of words then being to stand as outward marks of our internal ideas, and those ideas being taken from particular things, if every particular idea that we take in should have a distinct name, names must be endless To prevent this the mind takes the particular ideas, received from particular objects, to become general; which is done by considering them as they are in the mind, such appearances separate from all other existences, and the circumstances of real existence, as time, place, or any other concomitant ideas This is called 'abstraction,' whereby ideas taken from particular beings, become general representatives of all the same kind; and their names, general names, applicable to whatever exists conformable to such abstract ideas." Besides the lecturer, in attestation of his assertion that we cannot conceive God in the abstract, quotes Sir. W. Hamilton who says: "True therefore are the declarations of a pious philosophy, 'A God understood would be no God at all; to think that God is as we can think him to be is blasphemy." It seems to me that even Sir W. Hamilton, whom the lecturer acknowledges to be an acute and deep thinker, has fallen here into an egregious blunder. A little consideration would have shewn him that we cannot conceive the nature of God more than our faculties allow us to conceive. Our faculties are given and limited by Him. Consequently there can be no blasphemy in the conception of God who is revealed in the conciousness, however imperfect it may be.

Now let us see the harmony of the argument of Sir W Hamilton when applied to idolatry. "True therefore are the declarations of a pious philosophy." 'A God *represented by means of an image* would be no God at all; to think that God is as we can *represent Him* by *an image* is blasphemy.' Sir W. Hamilton is correct when he expresses a somewhat similar (but by no means

the same) idea more scientifically. "The Infinite and Absolute are the names of two counter imbecilities of the human mind, transmitted into the nature of things, of two subjective negations transformed into objective affirmations" Further I quote some of the following authorized Hindu texts for the lecturer's consideration, from which it is clear that the learned should not worship idols:—

मच्छिलाधातुदार्वादिमूर्तावीश्वरबुद्धयः ।
क्लिश्यन्ति तपसा मूढाः परां शान्तिं न यान्ति ते ॥

Those fools who think of God in an image of mud, metal, stone or wood only get bodily pain but no salvation.

यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरं ।
हित्वार्च्चाम्भजते मौढ्याद्भस्मन्येवजुहोतिसः ॥

The man who having left me, the *I* who pervades every being, foolishly adores an idol, he offers *ghee* to ashes.

Lastly it should be observed that the idea prevalent among the Hindus is that in India there has been no change of creed. But certainly there is no foundation for such an assertion. How much the Vedic sentiments were changed in ancient times is clear from the following words of the Manduka Upanishad,—"तत्राऽपरा ऋग्वेदोयजुर्वेदः सामवेदोऽथर्ववेदः शिक्षाकल्पोव्याकरणंनिरुक्तं छन्दोज्योतिषमिति । अथपरा यया तदक्षरमधिगम्यते" ॥ There must be some change in the progressive kingdom of God. When there began an enquiry into *one's self* and *God*, most men discredited the rites and ceremonies inculcated in the Karmakáṇda. Then they were dissatisfied with the worship of Indra, Varuṇa &c. There was a time when the Vedas were considered as all truth and nothing but the truth, and consequently oblations and sacrifices were worthy of being practised. But in the time of the Upanishads, literary men had no such faith in the mass of rites as they had before. From these considerations it is clear that the Vedas, not to say the Puráṇas, maintain contradictory doctrines and inculcate hero-worship. Therefore I cannot better conclude the first part of my review (viz., of the doctrine of idolatry) than by quoting the following memorable words of Francis W. Newman, for the lecturer's consideration. —"The glorifying of religious teachers" says the Professor "has hitherto never borne any fruit but canonizations and deifications, 'voluntary humility and worshipping of messengers,' vain competitions and rival sects, stagnation in the letter, quenching of the spirit."

By-the-bye it may be remarked that although the lecturer signs himself a Hindu, still he, not being a Brahman, had the courage in a full meeting of the "Benares Institute" to utter Vedic texts, which is strictly forbidden in the Upanishads themselves, under the penalty of the tongue being cut out of the utterer and molden lead being poured into the ears of the audience.

Another time I hope to discuss the Hindu doctrine of *necessity*

Yours truly,
SHASHISHEKHARA SANYALA,
*Secretary Benares Association, and President of the Club Preparatory to the Benares Association.*

---

## ON THE ONTOLOGY OF THE VEDA'NTA.*

"Nothing seems of more importance, towards erecting a firm system of sound and real knowledge, which may be proof against the assaults of scepticism, than to lay the beginning in a distinct explication of what is meant by *thing, reality, existence* for in vain shall we dispute concerning the real existence of things, or pretend to any knowledge thereof, so long as we have not fixed the meaning of those words."—*Berkeley* —'Of the Principles of Human Knowledge," § 89

AT the end of a paper on "The gist of the Vedánta as a Philosophy" (*Ben. Mag* Vol. IV, p. 325), in which we confined ourselves to disproving the legitimacy of the conclusion practically drawn from the Vedántic theory, we intimated our intention to address ourselves, in a subsequent paper, "more especially to points connected with the question under its second aspect—the Ontology of the Vedánta" As regards this aspect of the question, we remarked,—"If the theory necessarily led to the conclusion practically drawn from it, there would then be an urgent necessity that the theory itself should be first assailed, however arduous might be the nature of the required assault." That the theory did *not* necessitate the conclusion practically drawn from it, we undertook to demonstrate; and a year has now passed without our having met with any attempt to shake the position that we then took up. What we hope *now* to show is this, that the evil is in the inference, and not in the theory,—and that the Indian Missionary will do well to reserve his strength for the combat with the deadly error, instead of wasting it upon a speculation which, whether philosophically just or not, is in no respect whatever incompatible with the reception of Christianity. In our attempt to show this, we claim an unprejudiced and an attentive hearing. We claim this on the ground that we have shown, by our previous papers, that we have at all events not spared pains to qualify ourselves for forming a judgment on the deeply important and generally very ill understood point which we are going to discuss.

To those who do not read Sanskrit, the sources generally available for acquiring a knowledge of the Vedánta are the Essay of Mr. Colebrooke, the criticism of Col. Vans Kennedy on that essay, the intended defence of Mr. Colebrooke by Sir G. C. Haughton, and the tracts of Rammohun Roy. We do not speak of Mr. Ward's work on the Hindoos, because the reader of that work, who imagines that he is therein reading the speculations of the Indian sages, is under a delusion. It appeared advisable, when we undertook to address

* By the late Dr. Ballantyne. reprinted from the Benares Magazine, Vol. VI. 1851.

those whose conception of the Vedánta is derived from the sources just mentioned, that we should first remove whatever of perplexity might result from the seemingly conflicting testimony of the parties, in regard to the question whether the Vedánta were a system of Materialism or of Spiritualism. We therefore, (in a first and Second Dialogue "On the Notions of the Hindús,"—*Ben. Mag.* Vols. v and vi., pp. 422 and 863),—traced out the occasion of Col. Kennedy's misapprehension of Mr. Colebrooke, and showed that Mr. Colebrooke quite agreed with him and with the Hindú expositors in holding the system to be one of pure Spiritualism. We now propose to show, in accordance with this, that the *Ontology* of the Vedánta is the Ontology of Bishop Berkeley;—which being shown, it will follow that it must be something else than *this* against which our efforts require to be directed. It is labour worse than lost to argue against what does not stand in the way of your argument. In attempting to convince a European unbeliever in Christianity who held the doctrine of Berkeley, it would clearly be a waste of labour to argue against the doctrine of Berkeley, because we know, from Berkeley's own case, that the holding of that doctrine is compatible with the highest form of Christian piety. Let us show, then, that the doctrine of Berkeley is the Ontology of the Vedánta—*without the illicit inference deduced by the Vedántists,*—and it will then be seen how we had better waste no longer, in assailing the impregnable or the impalpable, the strength that was given us for labours less Quixotic.

But, methinks, a smile of compassionate surprise has come over the face of the reader; and he ejaculates "Berkeley!" Good reader, if you know Berkeley, you must love him;—if you do not know him, pray listen to what we shall tell you of him. If you have borrowed your conception of his philosophy from Byron's lines—

> "When Bishop Berkeley said there was no matter,
> It surely was no matter what he said,"—

then, pray, revise your conception as you go along with us. If, again, you enrol yourself among those of whom Pope speaks when he says—

> "And coxcombs vanquish Berkeley with a grin,"—

then lay aside our article:—it will profit you as little as you will profit the cause of evangelization in the educated division of Hindú society.

George Berkeley was born in 1684. In 1724, when holding the Deanery of Derry, worth £1,100 per annum, he drew up a Scheme for converting the savage Americans to Christianity, by a college to be erected in the isles of Bermuda. The scheme included his resignation of his rich benefice, and his dedicating the remainder of his life to instructing the youth of America, on the moderate allowance of one hundred pounds yearly. Subscriptions having been raised for promoting "so pious an undertaking," as it is styled in the king's answer to the Address of the Commons relative to a grant of land for the use of the mission, Dean Berkeley sailed for Rhode Island, with his lady, in 1728. It would appear that the minister of the day had never heartily embraced the project for which the dean had made such sacrifices;—obstacles were thrown in the way; and, the scheme on which Berkeley had expended much of his private fortune, and more than seven years of the prime of his life, having been thus rendered abortive, he returned to Europe. Before he left Rhode Island, he distributed what books he had brought with him among the clergy of that province; and immediately after his arrival in London, he returned all the private subscriptions that had been advanced for the support of his undertaking. At this time he preached, before the Society for the Propagation of the Gospel in Foreign Parts, a sermon, which was printed at the desire of the Society. In this sermon occurs the following passage, to which we request the particular attention of the reader:—

> "The metaphysical knowledge of God, considered in his absolute nature and essence, is one thing, and to know him as he stands related to us as Creator, Redeemer, and Sanctifier, is another. The former kind of knowledge (whatever it amounts to) hath been, and may be, in Gentiles as well as Christians, but not the latter, which is life eternal."

*(To be continued.)*



*Communications of a literary nature should be addressed to the* Editor: *all letters on business, to the Proprietors,* Messrs. E. J. Lazarus & Co., *to whom Drafts should be made payable.* Advertisements *will be inserted at four annas per line.*

The PANDIT may be ordered of the Publishers, or through Messrs. Trübner and Co., London.

*Annual subscription, in advance, including postage, Rs.* 12.

PRINTED AND PUBLISHED BY E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥

अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 17. Benares October 1st, 1867. Vol. II.


## ॥ नरेश्वरपरीक्षा ॥

"ननु यद्यत् संवेद्यते तत् तत् संविद्रूपमेव,यथा नीलादिसंवित्तिः, संवेद्यते च नीलादिः, तस्मात् तदपि संविद्रूपमेवेत्यसंविदात्मनो बाह्यार्थस्यासंवेदनादर्थशून्यं सर्वमेव विज्ञानमिति प्रयोगान्तरेण शून्यवादिनः,, यदाहुः,

"संवेदनं हि तादात्म्यात् तद्वद्भासनमेव तत् ।
इदमेव किमुक्तं स्यात् स बाह्योऽर्थोऽनुभूयते,, ॥

इति, अत आह ।

(१०) प्रत्यक्षा बुद्धिरेवेति निर्निबन्धनमुच्यते ।
बोधो बोधान्तरग्राह्यो नेष्यते भवतापि यत् ॥

एतदप्ययुक्तं साधनधर्मासिद्धत्वाद्दृष्टान्तस्य,"नहि तवापि नीलादिसंविदः संवेद्यत्वं सिद्धं,, क्षणिकत्वेन संविदन्तरोत्पत्तिकाले संभवाभावात् । नच दृष्टान्ते स्वसाध्यासिद्धसंबन्धो हेतुः साध्यं साधयितुं शक्तोत्यतिप्रसङ्गात् ॥

अथैतद्दोषभयात् संविदः संविदन्तरजननेन संवेद्यत्वमुच्यते, यदाहुः,

"भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम्,, ॥

इति, अत्राप्याह ।

(११) ग्राह्यत्वेऽपि न विज्ञानं सर्वमेव निरर्थकम् ।

यद्येवमनैकान्तिको हेतुः संविदः स्वतोऽसंविद्रूपाया अपि संवेद्यत्वात्,तद्वदर्थस्यापि संवेद्यत्वं भविष्यति यतः, "अथ संविद्रूपत्वेन संवेद्यत्वादिति हेतुः,,तर्ह्यसिद्धो नीलस्य संविद्रूपत्वेन संवेद्यत्वासिद्धेरिति सर्वमेव विज्ञानमर्थशून्यमिति नैष प्रतिज्ञार्थो भवतः सिध्यतीति ॥

अत्र पराभिप्रायं दर्शयति ।

(१२) अथानुभवरूपत्वाद् बोधः प्रत्यक्ष इष्यते ।

नात्र संविदन्तरसंवेद्यत्वं हेतुरपितु स्वसंवेद्यत्वमेव, ततश्च न साधनधर्मासिद्धिरनैकान्तिकत्वं वा दोष इति ॥

एतदपि निराकरोति ।

(१३) नाभावः संमुखीनेऽर्थे ततोऽनुभवगोचरे ।

यद्येवमसिद्धो हेतुः, "नहि संवित्स्वभावत्वं नीलादेः संवेद्यस्य सिद्धम्,, अपितु संवेद्यतैवेति, ततोऽसिद्धाद्धेतोरर्थे नीलाद्यात्मके संवेद्यतयेदंतानिर्दिश्यमाने प्रत्यक्षसिद्धे धर्मिणि नाभावो न बाह्यत्वनिरासः सिध्यतीति ॥

एतदेव प्रत्यक्षसिद्धमित्याह ।

(१४) अयमेव विधिर्ज्ञेयो भेदे बोधार्थयोः स्फुटं ।
पूर्वस्त्वनुभवाकार उत्तरश्चानुभूयते ॥

स्वपरप्रकाशरूपतया हि बोधात्मानुभवसिद्धः, तत्संवेद्यतयार्थोऽपीति, नातः शून्यवादसिद्धिः । "नन्वेवमात्मनोऽर्थस्य च द्वयोरनुभूयमानत्वे क आत्मेति न विद्मः,, पशवोऽपि हि यावदात्मपरभावं प्रत्यसंमूढाः, सोऽयं पशोरपि पशुः कुदर्शनापस्मारगृहीतः शोध्य एव । कथं वा ज्ञानज्ञेययोः प्रकाशमानत्वे ज्ञानमेव भावानां शुद्धोऽर्थः, नत्वर्थ एवाहमर्थज्ञानयोराकारभेदानुपलम्भात् साधुः समर्थितः सुगतनयो, यदमेध्याकारोऽप्येवं विनेयविनेतृतयाभ्युपगतः, "ननूक्तं,

"प्रभासुरमिदं चित्तं प्रकृत्याऽऽगन्तवो मलाः,, ।

इति, तद्ग्राह्यमेवात्मपरभावः, इति नार्थज्ञानयोराकारभेदानुपलम्भः सिद्धोऽपितु भिन्न एवोपलम्भ इति, एतेन सत्त्वद्रव्यकारकत्वादिभ्योऽचेतनानुमानमात्मनि प्रतिक्षिप्तं प्रत्यक्षनिराकृतत्वात् ।

पुनः प्रयोगान्तरेण शून्यवादिनः ।

(१५) वस्तु विज्ञानतो भिन्नं नैव विज्ञानजन्मनः ।

पूर्वचायाह्यमाणत्वात्,

यस्य येन सहोपलम्भो नियतः, तस्य ततो नार्थान्तरत्वं, यथा द्विचन्द्रज्ञानप्रतिभासमानादेकस्माच्चन्द्रमसो द्वितीयस्य, नीलज्ञानेन सहोपलम्भनियमश्च नीलादेः, तेन विना ततः पूर्वापरयोः संवेदनाभावात्,अतस्तस्यापि ततो नार्थान्तरत्वमिति नीलादेः संविद्रूपसिद्धितोऽर्थाद्ग्राह्यत्वनिरासः सिध्यति, यदाहुः,

"सहोपलम्भनियमान्न भेदो नीलतद्धियोः,, ।

इति ॥

आचार्यस्तु नीलाभावेऽपि नीलप्रकाशकसद्भावस्य प्रतिपादितत्वादसिद्धमेतत् साधनम् । "अथ बोधाध्यवसायापेक्षयोच्यते,, तत्राप्यसत्यर्थे मनोराज्याद्यवस्थासु तस्य भावादसिद्धतैवेति मत्वा प्रमेयभेदेन तद्भेदमभ्युगम्याप्याह ।

(१६) इत्यनेकान्तमुच्यते ।

इत्येवमभ्युपगम्यैतत् साधनमनैकान्तिकमुच्यत इत्यर्थः ॥

कथमित्याह ।

(१७) चक्षुर्व्यापारतः पूर्वं प्रकाशाच्च न गृह्यते ।
रूपं लोकेन तत् ताभ्यामभिन्नं संप्रतीयते ॥

चक्षुःशब्देनात्रोपलम्भप्रस्तावाद् गोलकमेवैतदुच्यते, तस्य व्यापारो विस्फारावस्था, तेनालोकेन च सहोपलम्भनियमो रूपस्य । नच चक्षुर्व्यापाररूपत्वमालोकरूपत्वं वेत्यनैकान्तिकता, बाह्यनिराकरणाय च भवद्भिरेव प्रयोगः समुपरचित १ इति, "न, आलोकादेरपि विज्ञानरूपत्वादनैकान्तिकपरिहारो युक्तः,, तस्यात एव साध्यत्वेनासिद्धत्वात् ॥

"नन्वनालोकस्यापि रूपस्य प्राण्यन्तरैरुलूकादिभिर्ग्रहणादालोकेन सहोपलम्भो नियतो नास्तीति नानैकान्तिकता,, "कथं तर्हि तमसा वृतं पटेनेव तेऽपि रूपं पश्यन्ति,, नचावस्तुत्वं तमसो भूच्छायात्मकत्वेन बाह्यार्थवादिभिरभ्युपगमादस्मदादेरपि ततो दर्शनप्रतीघातसंभवाच्च, वस्तुत्वे च रूपावरणस्वभावं यावत् तदनिवृत्तं तावत् कुतो रूपोपलब्धिः, "तच्चक्षुःशक्त्यैव तेषां रूपं प्रकाशत इति,, चेत्, तर्हि सैवालोको रूपप्रकाशकत्वात्, "अथाप्रकाशात्मिका भविष्यतीति,, चेत्, तर्हि कथं प्रकाशयति, नह्यप्रकाशात्मनः प्रकाशकत्वं तमस

१ संपरिचित इति पाठान्तरम् ।

इवोपपद्यत इति प्रकाशात्मिकैव सा शक्तिरभ्युपगन्तव्या, ततः प्रकाशेन सहोपलम्भो नियतो रूपस्य, नच प्रकाशरूपतेत्यनैकान्तिकतैवास्य हेतोरिति, "ननु चक्षुर्व्यापारमालोकं च विना रूपं योगिभिरुपलभ्यत इत्यत्र सहोपलम्भनियमाभावाचानैकान्तिकविषयता,, न, लोक इत्यत्र विशेषणात्, ततोऽस्म- १ दादिप्रत्यक्षत्वे सत्येषां सहोपलम्भनियमोऽस्त्येव, नचाभेद इत्यनैकान्तिक एव । किंच शून्यवादिनां चिरतरप्ररूढो विहारागमचैत्यादिभेदोऽनुभवसिद्धो नोपपद्यत इत्याह ।

(१८) नीलविज्ञानसंतानः पाण्डुरश्चेत्यनाकृतो ।
आकारवति बोधेऽपि नियमो नाविशेषतः ॥

नीलशुक्लादिसंतानभेदोपलक्षितः सर्वोऽयं सरित्सागरपर्वतादिभेदो भिन्नार्थक्रियासाधनतया निश्चितो नाहेतुको देशकालप्रकृतिनियमायोगात्, यदाहुः,

"नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः,, ॥

इति, नापि विज्ञानहेतुकः, तस्याकारवत्त्वेनाद्ययावज्जगत्यस्मिन्नसिद्धेः, आकारवति तस्मिन्नप्यभ्युपगम्यमाने विज्ञानात्मनः सर्वत्र सर्वदा चाविशेषात् सर्वः सर्वाकारः सर्वत्र सर्वदा च स्यादिति प्रागुक्तस्य जगद्वैचित्र्यनियमस्यासिद्धिप्रसङ्गः ॥

तमेव प्रसङ्गार्थमाह ।

(१९) एकाकारैव विज्ञप्तिः प्राप्ता विज्ञानवादिनः ।

यदाहु,

"तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः,, ।

इति ॥

ततो यद्येनाभिन्नहेतुकं तत् तेनाभिन्नस्वभावं, यथैकस्माद्बहुयाज्ज्ञानवर्णाद् द्वितीयं तद्रूपं, यत्र तु भिन्नरूपत्वं नास्ति तत्राभिन्नहेतुकत्वमपि नास्ति, यथा सुगतनये ज्ञानयोरभिन्नहेतुकं च विज्ञानवादिनां पर्वताकाराद्विज्ञानात् सरित्समुद्रादिविज्ञानं, नचाभिन्नरूपमित्यनेकान्तः,अत्राह ।

(२०) नीलादिभेदो बोधस्य वस्तुभावे तु किंकृतः ।

नानैकान्तो, न हि बाह्यार्थवादिभिस्तेषां विज्ञानमात्रमेव हेतुरिष्यतेऽपितु संस्कारद्वारेण यथायथं बाह्यान्यपि वस्तूनि, भवतस्तु बाह्यानां वस्तूनामभावाद्विज्ञानमात्रस्यैव सर्वत्र हेतुत्वमित्येष प्रसङ्ग उक्तः, नास्माभिरपि, वासनाभ्युपगमात्, तत्कृतोऽयं भेदावभासो न ज्ञानमात्रहेतुक इत्यप्रसङ्गः, तदुक्तम्,

"ज्ञानजो ज्ञानहेतुश्च संस्कारो वासनोच्यते,, ।

इति ॥

अत्राप्याह ।

१ ततश्चास्म-, इति पाठान्तरम् ।

(२१) वासनाकृत इत्येतत् पवनैरितभाषितम् ।
उन्मत्तप्रलपिततुल्यम् ॥

कुत इत्याह ।

(२२) तत्त्वणज्ञानतो नान्या वासना तव युज्यते ।

सापि हि वासना न तावद्विज्ञानादन्या विज्ञानव्यतिरेकेणान्यस्य कस्य चिदिन्द्रियादेरपि भवद्भिरनभ्युपगमात्, अपितु पूर्वस्माद्विज्ञानक्षणाज्जातं ज्ञानान्तरक्षणहेतुभूतं विशिष्टं ज्ञानमेव वासना, तच्चाविशिष्टत्वेनोक्तमेव, अतो न किंचिदेतत्, अस्माकं तु स्थिरत्वाद्बुद्धेर्वासनाधर्मान्तराण्यनेकान्यपि संभवन्तीति शरीरावस्थाविशेषं धातुसाम्यवैषम्यादि वा सुखदुःखफलं कर्म वा यथार्थप्रदर्शकं देवताप्रसादं वा विशिष्टवासनापरिपाकहेतुमन्तरा विशिष्टाकारमुपपद्यत एव । “ननु क्षणिकस्यापि ज्वालादेस्तृणपर्णादिहेतुजनिता पाण्डुत्वलौहित्यादिवासना दृश्यत एव” न, तत्स्वरूपत्वात्, स्वरूपं हि तत् तृणजन्यं विशिष्टमेवास्याः, विशिष्टमेव च पर्णादिजन्यं, न त्वनवस्थितायाः काचिद्वासनेति, “यद्येवं नीलज्ञानक्षणस्यापि प्राक्तनस्य कस्यचित् तत्स्वरूपं विशिष्टमेवास्तु येन विसदृशं पर्वताकारं रसाद्याकारं वा ज्ञानमनन्तरं जनयिष्यतीत्यप्रसङ्गः” न, तस्य सदृशक्षणजनकत्वेन धारावाहिकज्ञानेऽनभ्युपगमात्, “ननु क्षणभेदादन्यदेव तन्नीलज्ञानमिति कार्यभेदः” तर्हि क्षणभेदाविशेषाच्च कश्चित् सदृशं कार्यं जनयेत्, इत्येकसंतानात्मनोऽस्य शरीराद्याकारस्यापि विज्ञानस्याभावप्रसङ्गात् सर्वव्यवहाराभावप्रसङ्गः, संतानमूलत्वाद्भवतां व्यवहारस्य, “ननु नीलादिज्ञानक्षणः सदृशहेतुरपि भविष्यति” न, तर्हि क्षणभेदात् कार्यभेद इति पूर्वः प्रसङ्गः, न, नीलज्ञानक्षणात्मनापि भेदात्, अन्यदेव ज्ञानं सदृशस्य क्षणस्य हेतुरन्यदेव विसदृशस्य । “कीदृशं कस्येति वाच्य” “यादृशाद्यादृशं प्रतीयते तादृशं तस्येति प्रतीतिसमुत्पादवादिनः” तदिमे भृगुपतनस्थानस्थश्वान इवोपस्थितोपस्थितस्य निमित्तं कल्पयन्तः कुतः किं भवतीति हेयोपादेयसाधनेष्वनुत्पन्नबुद्धयः प्रेक्षावद्भिर्दूरतः परिहार्याः, तेषां हिताहितप्राप्तित्यागायैव तत्साधनजिज्ञासायां प्रवृत्तेः, “ननु संतानविषया सा भविष्यति” न, क्षणानां जननासंभवेन तस्यासंभवात्, क्षणप्रवाहात्मकत्वात् तस्येति सर्वानियमपरिहारायानुभूयमानो बाह्योऽर्थः सत्यप्रकाशात्मनो भिन्नः प्रकाश्यस्वभावोऽभ्युपगन्तव्यः, तत्र सहोपलम्भमात्रेणास्यास्मादभेद इति, “बोध्यम्” इत्यपि प्रतिज्ञापदं व्याख्यातमिति ॥

किंच सहोपलम्भनियमादभेदेऽपि नात्माभाव इत्याह ।

(२३) आत्मन्यसत्त्वं नो युक्तमहंप्रत्ययगोचरे ।

अहंप्रत्ययस्य स्थिरग्राहकपरामर्शरूपत्वेनात्मविषयत्वादस्त्येवाध्यवसेयेनात्मना सहोपलम्भनियम इति द्वयोरपि संविद्रूपत्वसिद्धेः सत्यत्वमिति नैरात्म्याभावः, “नन्वात्मनो विकल्पातीतत्वेनोक्तत्वान्मोक्षकारिकास्वाचार्येण बुद्धिबोध्यत्वनिरासाच्चाहंप्रत्ययगोचरत्वं वाद्यसिद्धमेव” सत्यम्, आत्मादिप्रत्ययवत् कथंचिददूरविप्रकर्षेण सोऽपि व्यवहारार्थं तद्विषयोऽभ्युपगम्यत इति नासिद्धिः । “ननु चाध्यवसायस्यावस्तुविषयत्वादस्माकमध्यवसायेन सह भावो न सिद्धः” युक्तमेतत् कदाचिद्बाह्यार्थवादिनो वक्तुम् । भवतस्त्वबोधात्मनोऽसंवेद्यत्वादध्यवसेयस्यापि संवेद्यत्वेन बोधरूपतयाध्यवसायस्येव सत्त्वमिति नासिद्धिस्तेन सहभावस्येति, “तर्हि वाद्यसिद्धोऽयमहंप्रत्ययाभावेऽपि स्वसंवेदनेनात्मोपलम्भाभ्युपगमात्” सत्यम्, अहमिति त्वध्यवसायेन सहभावोऽध्यवसेयतात्र हेतुः, सा च तदानीं नास्तीति तेन सहोपलम्भनियमो नासिद्धः, अन्या ह्यध्यवसायपरामृश्यतान्या च संविद्रूपतेति बुद्धिसंवित्प्रविवेकप्रसङ्गेन प्रदर्शितं स्वायंभुवोद्योत एव, इह त्वनुपयोगान्नोच्यते । भवद्भिरप्युक्तम्,

“अशक्यसमये ह्यात्मा चेतनानामनन्यभाक् ।
तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी” ॥

इति, अत एवाप्रयोगभेदादस्य नात्र गृहीतग्राहित्वमपितु तावन्मात्रेण प्रमाणत्वमिति दर्शयिष्यामः ॥

“ननु गौरोऽहं कृशोऽहमित्यनात्मनि शरीर एवाहंप्रत्ययस्य दृष्टेर्विरुद्धो हेतुरित्यत आह ।

(२४) नचान्यस्मिन्नहंबुद्धिः क्वचिद्दृष्टा तु निर्गुणा ।

न, विशेषितत्वाद्, गौरादिभिः पदार्थान्तरैर्विशेषितो ह्यहंप्रत्ययो माणवकादौ सिंहादिप्रत्ययवद् गुणवृत्त्या शरीरे वर्तते, तैरविशेषितस्तु मुख्यतयात्मन्येव, स एव चात्र हेतुरुक्तो न सविशेषण इत्यविरुद्ध एव ॥

“यद्येवं प्रत्ययव्यतिरेकेणान्यस्य कस्यचिदात्मनः प्रत्ययस्यानुपलब्धेर्वनाद्येकत्वप्रत्ययवदहंप्रत्ययोऽपि निर्विषय एवेत्यसिद्धो हेतुः” । अत्राप्याह ।

(२५) कर्तृकर्मावभासा च स्पष्टा दृष्टा क्वचिन्मतिः ।
अहमेतत् प्रपश्यामीत्यतः सिद्धं स्फुटं द्वयम् ॥

सत्यं, “स्यार्चिर्विषयो यद्यात्मा सर्वार्थप्रकाशकतया स्वतो नावभासेत” स तु स्वसंवेदनेन विकल्पातीत एव सर्वदा भासत इत्युक्तम्, तद्विषयश्चायं प्राक्तनयेनाहंप्रत्ययः क्वचित् “अहमेतत् प्रपश्यामि” इत्यादौ परामर्शविशेषे स्फुटः सुस्फुटानुभव एव दृष्टः, इति न वनाद्येकत्वादिप्रत्ययवन्निर्विषयः, तन्नासिद्धिः प्रागुक्तस्य सहोपलम्भस्येति, “यद्येवं सहोपलम्भनियमादात्माद्वैतसिद्धिरितीष्टविघातः” न, त्वन्मतेऽप्यप्रतिषेध्यमेवात्मसं-

वेदनमित्येवंपरत्वादस्य,परमार्थतस्त्वत इति, "अहमेतत् प्रपश्यामि,, इति परामर्शबुद्धेरप्यस्याः सकाशादात्मा सर्वार्थप्रकाशकत्वेन सर्वदा परामर्शनीयः । अर्थस्तु तत्प्रकाश्यतया क्रमेण प्रतीयत इत्यत्यन्तभिन्नमध्यवसीयमानत्वात् स्फुटमेतद्द्वयं सिद्धमिति न भेदोऽप्ययुक्त इति नेष्टविघातः, तदुक्तम्,

"अयमेव हि विज्ञेयो भेदो बोधार्थयोः स्फुटम् ।
पूर्वस्त्वनुभवाकार उत्तरश्चानुभूयते,, ॥

इति ॥

"नन्वयं घट इत्यादेरद्वयविषयस्यापि विमर्शस्य दर्शनादत्रानैकान्तिकता,, तदयुक्तमित्याह ।

(२६) सर्वमेव हि विज्ञानं कर्तृकर्मावभासकम् ।

"अयं घट इत्याद्यपि विमर्शविज्ञानं न विमृश्यमात्रविषयमेव युक्तं,, स्वात्मनो विमर्शाभावेन परविमृश्यस्येव तद्रूपत्वासिद्धेः, "स्वात्मनाप्यस्य तदानीं संवेदनाच्चासिद्धिरिति चेत्,, न, संवेदनस्याप्यविमृश्यस्य गच्छतां तृणादिविषयस्येव सिद्धेः, यदाहुः,

"संवित्तिरपरामर्शाद्विद्यमानापि वस्तुतः ।
तृणादिवित्तिवद्यातुः सिद्धैवाविद्यमानवत्,, ॥

इति' तस्मादात्मकर्तृक एव तेनासौ विमर्शनीयः, आत्मकर्तृके च विषये विमृष्टे स्वात्मापि तदुपसर्जनीभूतो विमृष्ट एव सामर्थ्याद्भवति, इति सर्वमेव विमर्शज्ञानं कर्तृकर्मद्वयविषयमेवेति नानैकान्तिकता ॥

अनुमानेनाप्येतत् सिद्धमित्याह ।

(२७) अयं संस्मर्यते यस्मात् तदहं दृष्टवानिति ।

अयं घट इत्यादिविमर्शविषया स्मृतिर्भवन्ती कर्तृकर्मकरणविषया दृष्टेति कर्मकरणयोरिव पूर्वं कर्तुरप्यशब्दं विमर्शं गमयत्येवेति सर्वो विमर्शो द्वयविषय एवेति, अत एव नावस्तुविषयो विमर्शः प्रत्यक्षवद्वस्त्वन्वयव्यतिरेकानुविधानात्, अन्यैरप्युक्तम्,

"अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता,, ॥

इति, "नन्वसत्यपि वस्तुनि घटादिविमर्शो मनोराज्यादौ दृष्टः,, सत्यम्, अत एव तयोर्वस्त्ववस्तुविषयत्वात् प्रत्यक्षतदाभासयोरिव भेदः, "ननु वस्तुविषयत्वेनाभिमतस्यापि स एवायं घट इत्येवमादेः पूर्वदृष्टतया विमर्शस्य प्रवृत्तेरधुना च पूर्वदर्शनाभावेन तदसंभवादवस्तुविषयत्वं,, न, प्राग्दर्शनाभावासिद्धेः आत्मप्रकाश एवार्थदर्शनं, तच्च सर्वदास्तीत्युक्तम्, अतः प्राग्दृष्टतापीदानीं तत्र वस्त्वेवेति नावस्तुविषयः, न, घटादौ क्षणिकत्वस्यासिद्धेरिति वक्ष्यामः, "एवं तर्हि संतमसे स्पृशतोऽप्ययं घट इत्यदृष्टानां रूपादीनामवमर्शादवस्तुविषयो मानस एव सान्तो विकल्प इति,, न, तेषामेकसामग्रीप्रतिबद्धत्वेन विशिष्टात् स्पर्शलक्षणाल्लिङ्गादप्रत्यक्षाणामपि तदानीमनुमानात्, यदुक्तं भवद्भिरपि,

"एकसामग्र्यधीनस्य रूपादेरसतो गतिः ।
हेतुधर्मानुमानेन धूमेन्धनविकारवत्,, ॥

इति, "नचानुमानविमर्शोऽप्यवस्तुविषयः,, वस्त्वन्वयव्यतिरेकानुविधानेन प्रमाणत्वात्, प्रत्यक्षतद्विमर्शवत्, तदुक्तं भवद्भिरपि,

"अर्थस्यासंभवे भावात् प्रत्यक्षेऽपि प्रमाणता ।
प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयम्,, ॥

इति, नाप्यस्फुटावभासत्वेनास्यावस्तुविषयत्वं, प्रत्यक्षस्याप्यर्थस्य दूरवर्तिनस्तत्संभवतोऽनैकान्तिकत्वात्, आगमोत्थोऽपि विमर्शस्तदागमप्रमोतृज्ञानद्वारेण वस्तुनि प्रतिबद्धत्वाद्वज्रकपित्थादिवाक्यश्रुतिजनितविमर्शवद्यथार्थ एव, तदुक्तं भवद्भिरपि,

"इष्टोऽयमर्थः शक्येत ज्ञातुं सोऽतिशयो यदि,, ।

इति, प्रत्यक्षानुमानागमबहिष्कृतस्तु विमर्शो मनोराज्यादिविमर्शवद्वस्तुप्रतिबन्धाभावादवस्तुविषयोऽस्तु, "अहमेतत् प्रपश्यामि,, इति तु विमर्शः संविदितात्मार्थविषयत्वाच्चावस्तुविषयः किंतु प्रोक्तनयेन प्रत्यक्षविशेषत्वात् प्रमाणमेवेत्यतोऽप्यात्मसिद्धिः, ततश्च "बोधेन,, इत्येतदपि प्रतिज्ञापदं व्याख्यातमिति ॥

तदेवमात्मनि साधकबाधकप्रमाणसदसत्ताभ्यां सद्व्यवहाराभावे निरस्तेऽपि लौकायतिकाः प्राहुः, "अस्त्वेवं शरीरादिव्यतिरिक्तः सर्वार्थसाक्षितया स्वसंवेद्योऽहंप्रत्ययप्रत्येयत्वेन चाभिरूप एवात्मा, स तु प्रयाणकाले विनश्यत्युत्पत्तिसत्त्वाद् घटादिवदस्थिर एव,नचायमसिद्धो हेतुः शुक्रशोणितादिपरिणामविशेषभावे चैतन्यात्मनस्तस्योत्पत्तिदृष्टेः, तदभावे चादृष्टेर्वह्नाविव धूमस्य कार्यत्वं सिद्धं यतः, तदिदमुक्तम्, "चैतन्यपरिपूर्णो हि कायो जायत इति,, एतत् प्रतिक्षिपति ।

(२८) स्थिरत्वं चापि पुंसोऽत्र स्मरणादेव गम्यते ।

स्थिरत्वं जन्मनः प्रागपि सत्ताशुक्रशोणितादिपरिणामविशेषादुत्पत्त्यभावः पुंसो जन्मसमनन्तरं स्मरणाद्धेतोः प्रतीयते ॥

तत्र तावद्धेतोरस्य व्याप्तिं साधयति ।

(२९) यतोऽन्येनानुभूतेऽर्थे तदन्यस्य न जायते ।

स्मरणं हि विशिष्टैकाधिकरणानुभवपूर्वकं स्वात्मनि

बाल्यावस्थात उत्तरकालं निश्चितमेव यतः, पटीयसोऽनुभवाद् देवदत्तादौ स्मरणं न दृश्यत इति स्मरणस्य विशिष्टैकाधिकरणानुभवपूर्वकत्वेन व्याप्तिसिद्धिः ॥

पक्षधर्मत्वमप्याह ।

(३०) हर्षादि लक्ष्यते येन तज्जाते यौवनस्थवत् ।
अर्थानुभवसंस्कारतद्व्यक्तिस्मृतिपूर्वकम् ॥

जाते लब्धशरीरजन्मनि पुरुषे जन्मनोऽनन्तरं मुखविकासाद्यन्यथानुपपत्त्या येन कारणेन हर्षादि तावल्लक्ष्यते, आदिग्रहणात् स्थानकरणाभिघातादि, यदाहुः,

"आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम् ।
स्थानानामभिघातश्च न विना पूर्वचेतनाम्,, ॥

इति, तच्चोत्पन्न इव न वातादिक्षोभजनितं, तत्र तदनावृत्तेऽपि तदानीं सर्वस्मिन्ननुभवाद्, अपितु यौवनादिस्थे पुरुष इव तदर्थस्यार्थ्यमानस्य सुखादेस्तत्साधनस्य वा यो योऽनुभवः, तेनाहितो यो बुद्धौ संस्कारः, तस्य प्रबोधाद्यत् स्मरणं तत् तत्कारणकं लोके लक्ष्यत इति, यच्च हर्षादि तत्रावश्यं तथाभूतस्मरणमित्यतोऽनुमितानुमानेनास्य पक्षधर्मत्वसिद्धिरित्युक्तं भवति ॥

"ननु सुखाद्यनुभवपूर्वकमपि यौवनाद्यवस्थावति पुरुषे हर्षादि दृश्यते,, इति तत् स्मरणसिद्धावनैकान्तिकमित्याह ।

(३१) नचाप्यनुभवस्तस्य लक्ष्यतेऽनुभवे यतः ।

यस्मादनुभवविषये तस्य पुंसः सुखाद्यनुभवस्तदानीं सुखसाधनक्षीरपानाद्यभावद्वारेण न लक्ष्यते नास्तीति निश्चीयते, ततः सुखाद्यनुभवाभावे सतीति विशेषितं हर्षादिहेतुत्वेन प्रयुज्यमानमव्यभिचारविशिष्टं सुखादिस्मरणं गमयतीति नानैकान्तिम् ॥

ततः किमित्याह ।

(३२) भवान्तरमतिक्रान्तमतः पुंसोऽनुमीयते ।

अतो हर्षादिलिङ्गविशिष्टस्मरणाद्विशिष्टैकाधिकरणानुभवपूर्वकत्वेन सिद्धव्याप्तिकाज्जातस्य पुंसो भवान्तरमतिक्रान्तमनुमीयते, ननु शरीरेण सह जन्मेति, यावपि शुक्रशोणितकार्यत्वेऽस्य तद्भावभावतदभावाभावौ तावपि स्वतः प्रागभावप्रध्वंसाभावासंवेदनात् परचैतन्यस्य च परेण प्रत्यक्षीकर्तुमशक्यत्वाच्च संभवत इति, यथा च स्थानकरणादीनामप्यत्र गमकत्वं तथा दर्शितमाचार्येण रौरववृत्तौ परमोक्षनिरासकारिकाभिः,

"जन्मान्तरानुभूतेऽर्थे स्मृतिर्जातेऽपि दृश्यते ।
अशनाय भवेत् सा च स्तन्यं प्रत्युपमर्पणात् ॥

इति, तत एवावधार्यम् ॥

(३३) एवं चानादिका तस्य योक्तव्या जन्ममालिका ।

एवमनेन क्रमेणानादिजन्मप्रबन्धः पुंसः साध्यः, ततश्चानादिधर्मयोगित्वादविनाश्यादिसंभवः, उत्पत्तिमत्त्वाद्धि घटादिवदनित्यत्वमस्योक्तं भवद्भिः, तच्चानादिमत्त्वाच्च संभवतीत्यविनश्वरोऽप्यात्मेति सिद्धम् ॥

"ननु चानादेरप्यस्य मोक्षे परमात्मलयादेव प्रदीपनिर्वाणवादिनामिव जीवात्मवादिनां विनाशो भवति,, इत्याह ।

(३४) शुद्धे प्रमुक्तविज्ञाने सर्वोपप्लवहानितः ।

नास्माकमात्मनाशो मोक्षोऽपितु सर्वबन्धनिवृत्तिः सर्वज्ञत्वाभिव्यक्तिश्चेति वक्ष्यामः,

तदेवं "प्रवृत्तिफलभोक्ता च,,इति प्रतिज्ञापदमामुत्रिकफलविषयतया व्याख्यातम् ॥

अधुना, ऐहिकफलविषयतया दर्शयितुं क्षणिको ग्राहकात्मेति शाक्यपक्षो न केवलं प्राक्प्रदर्शितबाधकप्रमाणसद्भावादयुक्तो यावत्साधकप्रमाणाभावादपीत्याह ।

(३५) क्षणिकत्वस्य नो मानं भेदादर्शनतोऽस्ति हि ।

तथाहि, अश्रावणः शब्द इतिवदयं पक्षः प्रत्यक्षनिराकृतः, भेदादर्शनात्, स्वसंवेदनप्रत्यक्षेणानारोपितस्य तदभेदस्य प्रोक्तनयेन प्रकाशनादित्यर्थः । किंच न सन्ति प्रमाणानि प्रमेयार्थानीतिवत् स्ववचननिराकृतः प्रमाणाभाव इवैतस्य क्षणिकत्वे प्रतिज्ञावचनस्यानुपपत्तेः, पौर्वापर्यरहितो हि कालः क्षण इति भवतामभ्युपगमः, अनेकवर्णनिर्वर्त्यं चैतद्वचनं कथं क्षणे निर्वर्तयेदिति विरोधः, "सत्यम्, अस्माभिः पक्षप्रयोगो नेष्यते त्रिरूपादेव लिङ्गात् साध्यसिद्धेः,, तदपि तर्ह्यत्र लिङ्गमुच्यताम्, "ननु यत् सत् तत् सर्वं क्षणिकं, क्षणिकत्वाभावे सत्त्वाभावः, संश्च ग्राहकात्मेति सत्त्वाख्यमेव,, यद्येवं विरुद्धोऽयं हेतुः, सत्त्वस्याक्षणिकत्वेन सर्वत्र घटादौ दृष्टान्ते व्याप्तिसिद्धेः, "ननु विद्युज्ज्वालादिरत्र दृष्टान्तः,, न, तस्याप्यस्मदादिगोचरत्वेनानेकक्षणरूपत्वात्, असर्वदृशां क्षणविषयव्यवहारस्य भवद्भिरप्यनभ्युपगमात्, क्षणरूपत्वे वानैकान्तिक एव, "ननु शुद्धं सत्त्वमत्र हेतुः,, यद्येवमसिद्धः, नहि सत्त्वमात्रमक्षणिकत्वरहितं क्वचिद्दुर्मन्त्येऽपि सिद्धम्, "ननु विजातीयवृत्तिद्वारेण प्रतिनियतभागाभिनिवेशित्वाद्विकल्पानां घटादावपि लोहितो मृण्मयः परिवर्तुल इत्यादिविकल्पान्तरविषयलौहित्यादिपरिहारेण सत्त्वविकल्पः प्रवर्तमानः सत्त्वं शुद्धमेव विषयीकरोतीति कथमसिद्धः, यदुक्तम्,

"यावन्तोंऽशसमारोपास्तन्निरासेन निश्चयाः ।
तावन्त एव शब्दाश्च तेन ते भिन्नगोचराः,, ॥

इति, युक्तमेतद्धर्मान्तरविषयम्, नत्वक्षणिकविषयं, तेन विना विकल्पत्वानुपपत्तेः, सर्वो हि विकल्पः प्राग्दृष्टतया स एवायमिति प्रवर्तमानो विकल्पतामासादयति, योजना कल्पनेत्ययोजकत्वेन निर्विकल्पत्वप्रसङ्गात्, योजनैव चार्थे इवात्मन्यप्यक्षणिकतानिश्चयः, नह्यात्मन्यपि क्षणिकत्वे सति विशिष्टशब्दवाच्यतयायं घट इत्यपि योजनोपपद्यते, यदुक्तम्,

“तद्दृष्टावेव दृष्टेषु संवित् सामर्थ्यभाविनः ।
स्मरणादभिलाषेण व्यवहारः प्रवर्तते” ॥

इति, तद्योजनात्मकत्वाद्योजितव्यार्थवदात्मापि योजकत्वेन तदुपसर्जनीभूतोऽक्षणिकतया निश्चित एव सर्वेण विकल्पेन भवति, इति न धर्मान्तरं लौहित्यादिकमिव सत्त्वविकल्पेनाक्षणिकत्वमपि परिहर्तुं शक्यमिति, शुद्धः सत्त्वाख्यो हेतुरसिद्ध एवेति, यदि शुद्धोऽयं हेतुः,ततो नित्यानित्ययोरेकेनान्वितत्वाद्वस्तुधर्मत्वेनोभयबहिर्भावायोगाच्च शब्दानित्यत्वादौ श्रावणत्वादिवदसाधारणानैकान्तिकः, यथादृष्टान्वितस्तु न शुद्धोऽतश्च विरुद्धः, इत्युक्तम्, सर्वस्य च सतः क्षणिकत्वेन व्याप्तिप्रदर्शनतोऽक्षणिकस्य परमार्थसतो वैधर्म्यदृष्टान्तस्यानुपपत्तिः, विपक्षव्यावृत्त्यसंभवेन केवलान्वय्ययं हेतुः स्यादगमकः, त्रिरूपस्य गमकत्वेन हेतोरुक्तत्वात्, न विपक्षाद्वा वृत्तिर्हेतोस्तृतीयं रूपं, येनैष दोषः स्यात्, अपितु साध्याभावे साधनाभावात्मव्यतिरेकः, अत एव ततोऽन्यस्तद्विरुद्धस्तदभावो विपक्षोऽस्माभिरुक्तः, स चास्यास्तीति न केवलान्वयित्वम्, तदुक्तं,

“तस्माद्वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः ।
तदभावेऽपि तन्नेति वचनादपि तद्गतेः” ॥

इति, यद्यप्येवं संदिग्धव्यतिरेकोऽयं हेतुः, वचनगम्यस्यार्थस्य संदिग्धरूपत्वात्, निधिमानयं भूभाग इतिवन्निश्चितरूपत्वे हि प्रतिज्ञामात्रादेव साध्यसिद्धेः किमनेनासिद्धेरुपन्यासायासेन, “ननु वैधर्म्यदृष्टान्ताभावेऽप्यस्य विपक्षे बाधकप्रमाणबलाद् व्यतिरेकनिश्चयोऽस्तीति न संदिग्धव्यतिरेकता,” यद्येवं तदेव बाधकं प्रमाणं प्रथममुपन्यसनीयं, तेन विना हेत्वभिधानस्यास्यानभिधानसमानत्वात् । “नन्वक्षणिकस्य सतो विनाशहेत्वयोगादिति,” न, अस्य विरुद्धत्वात्, विनाशहेत्वयोगो ह्यविनाशं साधयति नतु क्षणिकत्वम्, “एवं तर्हि दृष्टत्वेन विशेष्यते, घटादीनां ह्यविनश्वरस्वभावत्वेन दृष्टस्य कृतकत्वादिनानुमितस्य वा विनाशस्य हेतुरसमर्थ एव, विनश्वरस्वभावत्वे वा व्यर्थः, स्वभावादेव विनाशसिद्धेः, स्वभावस्य चाविशेषात् प्रतिक्षणं सतो विनाशः सिध्यतीति,” “यद्येवमसिद्धः, याहकात्मनो विनाशहेत्वदर्शनस्य प्रतिपादितत्वात्,” दृष्टविनाशादेव च विपक्षादनेनास्य हेतोर्व्यतिरेकः सिध्यतीति नादृष्टविनाशात् परमाण्वादेः संभाव्यमानादिति पुनरपि संदिग्धविपक्षव्यावृत्तिरयमनैकान्तिक एव, नच विनाशहेतोरत्र सामर्थ्यमेव वैयर्थ्यं वेति वक्ष्यामः, “तर्हि नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधादित्येतद्विपक्षे सर्वत्रास्तु बाधकं प्रमाणं,” न, आश्रयासिद्धत्वादिदमप्यप्रमाणमेव, नहि नित्यः कश्चिदर्थो भवद्भिरभ्युपगम्यते, यत्रायं हेतुः सिद्धः स्यात् “प्रतिवादिनः सिद्धत्वाद्धेतुरेवेति,” चेत्, कथं तस्य सिद्धिः, “धर्मिणः सिद्धत्वादिति,” चेत्, स कुतोऽस्य सिद्धः, “प्रमाणेन यदि,” वादिनोऽपि सिद्ध एव, वस्त्वधिष्ठानात् प्रमाणस्येति, कथं नित्यप्रतिक्षेपः, “अथाप्रमाणादभ्युपगममात्रात् तस्य सिद्ध इत्युच्यते,” यद्येवमसदेवासौ कथं वस्तु साधयेत्, वस्तुनो हि वस्तुसिद्धिरित्युक्तं, “ननु यत्र क्रमयौगपद्याभ्यामर्थक्रियाभाव इति धर्मयोर्व्याप्तिमात्रप्रदर्शनेन धर्मिणः कस्य चिदनाश्रयाच्चाश्रयासिद्धताच्च दोषः, यदाहालंकारकारः,

“प्रसङ्गसाधनमिदं नाश्रयासिद्धता ततः ।
यद्येवं स्यादिदमपि नचोभयमितीष्टता” ॥

इति, यद्येवमपक्षधर्मत्वेन न्यूनत्वादयमहेतुरेव, “कथमस्य विपक्षव्यावृत्तिं साधयेत्,” नह्यन्वयव्यतिरेकावेव हेतोर्लक्षणं, त्रिरूपस्यैव हेतुत्वेनोक्तत्वात्, प्राग्वच्च व्याप्तिरप्यत्रासिद्धेति दर्शयिष्यामः,

धर्मोत्तरास्त्वाहुः, “सत्त्वं क्रमयौगपद्याभ्यां व्याप्तमतः क्रमयौगपद्याभावेन सत्त्वाभावोऽत्र व्यापकानुपलब्ध्या साध्यः, तन्नाश्रयासिद्धत्वम्, अभावस्यासत्यपि शशविषाणादाविव नित्ये धर्मिणि सिद्धत्वात्, भावात्मनो हि हेतोस्तत्रैष दोष एव प्रसङ्गविपर्ययनिष्ठः प्रसङ्गहेतुरिति,”

एतदप्ययुक्तं, भवद्भिरपि स्वसाध्यप्रतिबद्ध एव हेतुरुच्यते, यदुक्तम्,

“कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमः”,

इति, नचाभावहेतोरत्यन्तावस्तुनः क्वचित् प्रतिबन्धः संभवतीत्यहेतुता, यदाहालंकारकारोऽपि,

“अभावमात्रके हेतौ क्व किं केन प्रसाध्यताम्” ।

इति, प्रतिबन्धे हि नाभावरूपतेत्यसिद्धत्वमुक्तं, शशविषाणादीनां तु विकल्पकल्पितत्वेनाभावव्यवहारादिमात्रविषयत्वं काल्पनिकमेव सिद्धं, नतु कस्यचित् साधनतयेत्यविरोधः, अत एवानुपलब्धेः प्रतिपत्त्यध्यवसायवशादभावसाधनत्वम्, परमार्थतस्तु वस्तुनो विशिष्टाद्विशिष्टस्य वस्तुनः सिद्धेः स्वभावहेतुतैवेत्युक्तं भवद्भिरेव,

“प्रयोगः केवलं भिन्नः सर्वत्रार्थो न भिद्यते” ।

इति, न किंचिदेतत् ।

अन्ये पुनराहुः, “यदेव सपक्षत्वेन घटादिनिष्ठं तदेव साव-

द्विपक्षत्वेनापि, तन्निष्ठं च बाधकं प्रमाणमिति कुतोऽस्याश्रयासिद्धता,, "यद्येवं पुरुषेच्छाकृतास्य सपक्षविपक्षव्यवस्था, न वस्तुत इति पक्षसपक्षान्यतरत्वादेरिवानुमानाभासता,, नच सपक्ष एव विपक्षः संभवति साध्यभावाभावयोरत्यन्तविरोधात्, न वस्तुतोऽस्य सपक्षत्वाद्, विपक्षत्वं तु घटादेरारोप्य बाधकेन प्रमाणेन निषिध्यते, यदि घटादेरक्षणिकत्वं स्यात्, ततोऽक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधः स्यात्, करोति चार्थक्रियाम्, अतः क्षणिक इति, यथा यद्यत्र वह्निर्न भवेद्धूमोऽपि न भवेत्, अस्ति च धूमः, तस्मादत्राग्निः, इत्यविरोधाच्चाश्रयासिद्धता,

तदप्ययुक्तं, विरोधासिद्धेः, अक्षणिकस्यैव घटादेः क्षीरघृतधारणाद्यर्थक्रिया क्रमेण प्रदीपादेश्च वर्तिदाहतैलक्षपणादिका युगपद् दृश्यत इति कुतस्तद्विरोधसिद्धिः। तस्यैव स्वभावत्वात् क्रमेणार्थक्रियाया अनुपपत्तेः सर्वाः कालान्तरिका अपि युगपत् कुर्यात्, नच ता युगपद् दृश्यन्ते, एवं च क्रमेणैवानेकार्थक्रियाजननैकस्वभावः सिद्धः, न युगपदित्यविरोधः, "अथ किमर्थं क्रमेण करोति,, तथास्वभावत्वाद्युगपद्वेति वक्ष्यामः, तदेवं विपक्षे बाधकस्य प्रमाणस्यासंभवादनैकान्तिकमेतच्च क्षणिकत्वस्य साधकं प्रमाणमिति।

अभिनवशाक्यास्त्वाहुः, "नास्य विपक्षे बाधकप्रमाणवशादसत्तानिश्चयोऽपितु वस्तुप्रतिबन्धाधिष्ठानाद्विचारादेव, सत्त्वं हि विचार्यमाणं तेजोरूपं दाहकत्व इव स्वभावप्रतिबन्धादेवाक्षणिकान्निवर्त्यमानं क्षणिकत्वे विश्राम्यति, इति वस्तुस्वरूपपर्यालोचनासिद्धमेतत्, अतो नाश्रयासिद्धतादिपूर्वोक्तदोषप्रसङ्ग इति,,।

यद्येवमर्थापत्त्यात्मकोऽयं विचारः प्रातिभात्मको वा, यथाहुर्वैयाकरणवृद्धाः, "नापूर्वं किंचिदिति,, प्रमाणान्तरत्वादस्य प्रत्यक्षमनुमानं च प्रमाणमेवेत्यभ्युपगमविरोधः, अप्रमाणत्वे तु कथं ततो विपक्षाभावनिश्चयः, सदसन्निश्चयहेतोरेव प्रमाणत्वात्, "ननु वस्तुरूपपर्यालोचनयापि नयविदामसंनिहितार्थविषय ऊहात्मको निश्चयो दृश्यत एव,, सत्यं, योग्यतानुमानादेवासौ नान्यतः, यदुक्तं भवद्भिरपि,

"हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते।
अर्थान्तरानपेक्षत्वात् स स्वभावोऽनुवर्णितः,, ॥

इति। अपिच प्रतिबन्धविचार इति कोऽर्थः, किं विचारात् प्रतिबन्धसिद्धिः, आहो स्वित् सिद्धे प्रतिबन्धे विचार इति, पूर्वस्मिन् कल्पेऽत्यन्तासंबद्धयोर्घटपटयोरपि विचारात् प्रतिबन्धः स्यादित्यनवस्था। अथ द्वितीयः पक्षः, तर्हि प्रत्यक्षसिद्धत्वात् प्रतिबन्धस्य तेजोदाहकत्वयोरिवोत्तरकालभाव्ययं विचारः स्मृतिपूर्वव्यवहार एवोक्तः स्यादिति न ततोऽपूर्वार्थप्रतिपत्तिः, यदुक्तं,

"तद्दृष्टावेव दृष्टेषु संवित् सामर्थ्यभाविनः।
स्मरणादभिलापेण व्यवहारः प्रवर्तते,, ॥

इति, नच सत्त्वक्षणिकत्वयोः कथंचिदपि प्रतिबन्धः सिद्ध इति तद्विषयस्य विचारस्यानुपपत्तेः कथं ततोऽस्य हेतोर्विपक्षाद् व्यावृत्तिः, येन क्षणिकत्वसिद्धौ मानता स्यादिति॥

अभ्युपगम्यापि क्षणिकपक्षमनिर्मोक्षप्रसङ्ग इत्याह।

(३६) पुनर्भवप्रसङ्गः स्यान्निर्निमित्ते ह्युपप्लवे।

ते हि दुःखात्मनोऽस्य संसारस्य समुदये निमित्तमविद्यातृष्णे गीयेते, यदुक्तं,

'दुःखे विपर्यासमतिस्तृष्णाशाबन्धकारणं[1]।
जन्मिनो यस्य ते न स्तो न स जन्माधिगच्छति,, ॥

नच तयोर्निमित्तत्वमुपपद्यते, प्रतिक्षणं पूर्वस्यैव नीलपीतादिज्ञानक्षणात्मनः समनन्तरप्रत्ययस्यात्र निमित्तताभ्युपगमतोऽन्यस्यासंभवात्, तदुक्तं,

"यस्मिन् सति भवत्येव यत् ततोऽन्यस्य कल्पने।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः,, ॥

इति, ततो निमित्तान्तराभावेनैतावन्मात्रनिमित्तत्वादस्य संसारात्मनो विप्लवस्य प्राग्वत् पुनः प्रसङ्गान्मोक्षलक्षणस्य निरोधस्य तदुपायस्य च समुदयनिरोधमार्गाणां चतुर्णामप्यार्यसत्यानामसत्यतैवेति॥

अस्तु वा पारंपर्येणाप्येतद्रागाविप्लवोऽस्यैव निमित्तं, नतु ग्राह्यग्राहकात्मन इत्याह।

(३७) निमित्तं साधु वक्तव्यं मेयमानव्यवस्थितेः।

नहि यत्र ग्राह्यग्राहकव्यवस्था तत्राविद्यातृष्णे भवतामपि सिद्धे वीतरागपुरुषाणां सर्वज्ञानां च तयोरसंभवात्, असाध्ययुक्तमत्र तयोर्निमित्तत्वं॥

"ननु ग्राह्यग्राहकव्यवस्थानिमित्तत्वमेतयोः स्वप्ने सिद्धम्,, इत्याह।

(३८) स्वप्नादिप्रत्यया येऽन्ये दृष्टान्तत्वेन ते मताः।
वासनादिकृतास्तेऽपि सुस्थिराणोर्भवन्ति हि॥

नहि तत्रापि तयोर्निमित्तत्वं केनापि प्रमाणेन सिद्धम्, अपितु कर्मोपसंस्कृताया अनुभववासनाया एव, यथानुभवं रूपाद्यालोकनेन दुःखादिवेदनाज्जात्यन्धानां स्वप्ने रूपाद्यनवभासाच्च, वासनाश्च स्थिरात्मवादिनामेवोपपद्यन्ते न क्षणिकपक्षे इत्युक्तं प्राक्। "कथं तर्हि भ्रान्तिप्रतिभासा विषया द्विचन्द्राद्याकाराः,, तस्या विकारात्, किंत्वध्यवसायवासनोपस्कृतबुद्ध्याकारविषया एवेत्युक्तम्, अन्यत्रावभासाच्चासत्यविषयाः, अमतो भासनायोगाच्च विपरीतार्थाः, तेन तेन रूपेण तस्यास-

१ विपर्यासमतितृष्णाद्ये बन्धकारणम्, इति पाठान्तरम्

त्यत्वतः, प्रोक्तदोषावात्माकाराः, अन्तःकरणतत्त्वस्य भागा बहिरिव स्थिता इति तेषामपि विप्लवनिमित्तता ॥

एतदेव दर्शयति ।

(३९) समस्तमेयमानादिगीतं धीवादिनापि हि ।
अन्तर्भावग्रहात्मत्वान्मिथ्यात्वमपि तस्य न ॥

नहि ग्राह्यग्राहकग्रहणात्मनो भेदस्यास्य विज्ञानवादिभिरभावोऽभिधातुं शक्योऽनुभवसिद्धत्वात्, अपितु विज्ञानस्वभावत्वमेव, ततो भावग्रहात्, विज्ञानरूपत्वेनाप्यस्य सत्त्वान्मिथ्यात्वमुपप्लवरूपत्वं नोपपद्यते,अपितु बोधरूपतैवेत्यनिवर्त्यत्वाददृयासिद्धेरनिर्मोक्ष एवेति ॥

"ननु ग्राह्यग्राहकप्रकाशस्य प्रमाणबाधितत्वादनात्मन्यात्मबुद्धेरिवोपप्लवरूपत्वमेव, न विज्ञानस्वभावता,, तथाहि प्रत्यक्षं सर्वमिदं घटादिग्राह्यं ग्राहकाच्च भिद्यते ग्राह्यत्वात्, भेदे हि देवदत्तयज्ञदत्तज्ञानयोरिव परस्परमग्राह्यता स्यात्, अस्ति च सा, ततो द्वयाभाव एवेति, यदाहुः,

"परमार्थेन न ग्राह्यं ग्राहकं वा न किंचन ।
अविद्यानिर्मितः सर्गो विप्लवोऽयं जनस्य तु,, ॥

इति, अत आह ।

(४०) प्रत्यक्षं ज्ञानमेवेति मिथ्यावाक्यं तदेव हि ।
सर्वं प्रतीयते यस्मान्नच बाधः कथंचन ॥

एतदपि परस्पराविरुद्धत्वान्न बाधकं, बाधकस्याप्यस्य ज्ञानस्य बाध्यमानार्थविषयत्वात्, तदविषयत्वे तन्निषेधानुपपत्तेर्बाधकत्वायोगः, इति ग्राह्यस्य सर्वस्याबाध्यत्वेन प्रतीयमानत्वाच्चानात्मन्यात्मबुद्धेरिवोपप्लवरूपतेति, अत एव "प्रत्यक्षा बुद्धिरेव,, इत्यादिनाचापीनरुक्त्यं,साध्यभेदात् ॥

किंच धर्मिस्वरूपविपरीतसाधनोऽयं हेतुर्भवतामित्याह ।

(४१) ग्राह्यत्वादर्थवद्बुद्धेरनवस्था प्रसज्यते ।

ग्राह्यत्वाद्धीसंवेद्यत्वेऽर्थस्य ज्ञानस्यापि ज्ञानान्तरग्राह्यत्वेनैव संवेद्यत्वादस्वसंवेद्यताप्रसङ्गः, तस्यापि चासंवेद्यत्वे तदग्राह्यत्वानुपपत्तेस्तस्य तस्यापीत्यनवस्था ॥

नन्वज्ञातमपि ज्ञानमिन्द्रियमर्थवज्ज्ञानान्तरं ग्रहीष्यति, ततो नानवस्थेति पूर्वानुवादेनाह ।

(४२) बुद्ध्यन्तरगृहीता धीर्यद्यर्थे संप्रवर्तते ।
स्यादसंस्था तयोर्यावन्नैवं दृष्टं कथंचन ॥

युक्तमेतच्चक्षुरादीनामर्थसाक्षात्कारं प्रति कारकत्वात्, ज्ञापकानां लिङ्गशब्दादीनां स्वप्रकाशं विना ग्राह्यप्रकाशकत्वं न कदाचिद्दृष्टमिति ज्ञानस्यापि ज्ञापकत्वात् स्वप्रकाशं विना ज्ञानान्तरग्राहकत्वव्यवस्था नोपपद्यत इति सर्वाप्रत्यक्षत्वप्रसङ्गः, तदुक्तम्,

"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति,, ।

इति ॥

किंच बाह्यसिद्ध्योऽयं हेतुरित्याह ।

(४३) स्वांशं प्रत्यवसानं च विज्ञानं तेन कल्प्यते ।

विज्ञानवादिनाप्येकस्य विज्ञानस्य घटाद्यात्मनोऽनेकत्वं परिकल्प्य, यदुक्तम्,

"एकं चेच्चित्रविज्ञानमिदं चित्रतरं ततः,, ।

इति, विज्ञानांशपरमाणुपर्यन्तभेदः कल्पनीय इति घटादेरर्थाभिमतस्य प्रत्यक्षत्वासिद्धेरित्यनुभवविरोधश्च ॥

अपिच विज्ञानसंतानान्तरमपि न शक्यमेव कल्पयितुमिति किमर्थं शास्त्रप्रणयनं दानादिसर्वव्यवहारप्रलोपोऽस्येत्याह ।

(४४) नचाप्यालम्बनं भिन्नं संतानान्तरमस्ति हि ।
स्वाकारं चेत्यमित्यस्मात् सर्वाभावः प्रसज्यते ॥

कायवाग्व्यवहारो हि स्वशरीरे विशिष्टविज्ञानपूर्वको दृष्ट इति परशरीरेऽपि तद्दर्शनाद्विज्ञानमनुमीयते सर्वैरेव, विज्ञानवादिनां तु स्वाकारस्यैव सर्वस्य चेत्यत्वात्, स्वप्नवत् परशरीरासिद्धेर्मिथ्यैव प्रतिभास इति कुतस्ततो ज्ञानसंतानान्तरसिद्धिः, सिद्धावपि न भिन्नमालम्बनं सिध्यत्यर्थवत्, तस्यापि भिन्नस्य साकारेण निराकारेण वा ज्ञानेन विषयीकर्तुमशक्यत्वात्, इति तदपि स्वाकारात्मकमेव वेद्यं सिध्यतीति, यदुक्तं,

"बुद्धिपूर्वां क्रियां दृष्ट्वा स्वदेहेऽन्यत्र तद्ग्रहात् ।
ज्ञायते यदि धीश्चित्तमात्रेऽप्येष नयः समः,, ॥

इति, तदप्ययुक्तमित्यतः कः कस्य किं कुर्यादिति सर्वव्यवहाराभावप्रसङ्गः, ततः सत्यभूत एव ग्राह्यग्राहकभेदोऽभ्युपगन्तव्य इत्यनिवर्त्यत्वाद्द्वयासिद्धेरनिर्मोक्ष एव भवताम् ।

अधुना यैर्बाह्यमभ्युपगम्य साकारमेव तस्य ग्राहकमिष्यते, अर्थज्ञानयोराकारभेदं नोपलभामह इति वदद्भिः, तान् प्रत्युच्यते ।

(४५) संगुप्तकारणस्येह योगिनो बुद्धिपद्धतिः ।
अपास्तविषयाकारा दृष्टा तस्मात् प्रतीयते ॥
शब्दादिविषयो योऽपि बोधः सोऽप्यतदाकृतिः ।
तत्परिच्छेदरूपोऽसौ तदाकार इति भ्रमः ॥

भवेदेतत्, यद्यर्थज्ञानयोराकारभेदो नोपलब्धो भवेत्, स तूपलभ्यत एव, तथाहि समुपहृतसमस्तकरणवृत्तेरत एव विनिवृत्ताखिलविषयाकारवेदनस्य संविन्मात्रयोगिनः शुद्धमेव विज्ञानात्मरूपं प्रबन्धेन प्रकाशत इति भवदागमेऽपि दृष्टम्, अद्वयस्यार्थानाक्षिप्तस्यान्यथा प्राप्त्यसंभवात्, प्रोक्तं चाध्यात्म-

कुशलैरपि, "तदा द्रष्टुः स्वरूपेऽवस्थानम्,, इत्यर्थाकाराद्भिन्न एव ग्राहकः सिद्धः, ततो भेदादेव शब्दादिपरिच्छेदकाले तत्परिच्छेदकत्वमेव ग्राहकात्मनोऽनुभवसिद्धत्वात् प्रत्येतुं शक्यं, नतु शब्दाद्याकाररूपता,अनुभवविरोधात्, इति साकारपक्षोऽपि भ्रम एव ॥

एतदेव सूचयन्नाह ।

(४६) अर्थ एव हि साकारो यतस्तद्वान् स गृह्यते ।

अर्थो ह्यनेकनीलपीताद्याकारभेदभिन्नो ग्राहकात्मनः प्रत्यग्रूपेणाध्यात्ममनुभूयमानात पुरो रूपत्वेन बहिर्देशसंबद्धः साकार एव वेद्यत इति, ततोऽनाकाराज्ज्ञानाद्भिन्न एव युक्तः ॥

## ॥ हरिविलासकाव्यम् ॥

आकारणार्थं वसुदेवसून्वो-
रक्रूरमक्रूरमुखं स्वभावात् ।
तत्रान्तरे प्रेषयति स्म कंसो
वीरावतंसो यमसद्म यास्यन्[1] ॥ १ ॥
भावितद्रुदनचन्द्रदर्शन-
प्रेमपूरपरिपूरितोदरः ।
रामकृष्णपदपांशुपावनम्
प्राप गोकुलमसौ कुलोज्ज्वलः ॥ २ ॥
असंख्यगोसंख्यविराजमाने
दीपक्रियासादरसुन्दरीके ।
संवीक्ष्य नन्दस्य गृहे रमन्तौ[2]
मनोरमौ तौ रथमुत्ससर्ज ॥ ३ ॥
निगदितनिजनामा वैष्णवाग्रेसरस्तौ
रभसरभसयुक्तो विश्ववन्द्यौ ववन्दे ।
प्रसृतभुजयुगाभ्यां गाढमालिङ्गितः सन्
शुक इव भवदुःखं नैव किंचिद्विवेद ॥ ४ ॥
आलिङ्गितोऽसौ परमेश्वरेण
रामेण विश्वैकमनोरमेण[3] ।
हर्षाश्रुसंयुक्तविलोचनोऽसौ
धन्यं वपुर्मानयति स्म सर्वम् ॥ ५ ॥
नन्देन पश्चात् परिपूजितोऽसौ
दिव्यासनस्थो गलिताध्वखेदः ।
गोपाङ्गनाक्लेशकरं चिराय
वक्ता स वाक्यं वदति स्म किंचित् ॥ ६ ॥
नन्द ते तनुजदर्शनोत्सुकः
कंसभूमिपतिरस्ति संततम् ।
तत् प्रगृह्य तनयावुभाविमौ
सद्य एव मथुरा विलोक्यताम् ॥ ७ ॥
तन्निशम्य वचनं तदीरितम्
तापमाप परमं व्रजाधिपः ।
माधवस्तु मुदमापदुद्धताम्[1]
दैत्यनिर्दलनसाधनोद्यतः ॥ ८ ॥
उषसि यास्यति यादवनन्दनो
मधुपुरीं प्रति कंसकृतादरः ।
इति निशम्य वचो विषदुःसहम्
निजगदुस्तमरातिमिव स्त्रियः ॥ ९ ॥
अक्रूर ते नामनि निश्चयेन
बली बहुव्रीहिसमास एव ।
अस्माकमात्मानममुं यतस्त्वम्
कृतान्तवन्नेतुमुपागतोऽसि ॥ १० ॥
ततः प्रभाते समुपस्थितेऽसौ
नन्दादिगोपैः सह शोभमानः ।
आरुह्य तत्स्यन्दनमादिदेवो
व्रजाद्बहिः किंचिदुपाजगाम ॥ ११ ॥
आगम्यतां कमललोचन शीघ्रमेव
स्नेहं न मुञ्च नच विस्मर दीनबन्धो ।
कृष्ण त्वदेकशरणा वयमद्य सर्वा
नार्यः सनीरनयना हरिमित्थमूचुः ॥ १२ ॥
अत्रागमिष्याम्यहमाशु तावत्
प्रयात यूयं गृहमिन्दुमुख्यः ।
इत्थं समादिश्य वधूरुदस्रू-
रुदग्रवीर्यो हरिरुच्चचाल ॥ १३ ॥
आगताः कथमपि व्रजं प्रति

१ धृतदुर्विचारः, इति पाठान्तरम् ।
२ वसन्तौ, इति पाठान्तरम् ।
३ पश्चात् परमादरेण, इति पाठान्तरम् ।

१—दुत्कटम्, इति पाठान्तरम् ।
वसन्तौ, इति पाठान्तरम् ।

प्राणनाथविरहाकुलीकृताः ।
हन्त ता निजगृहेषु संस्थिताः
संस्थिता इव सरोजलोचनाः ॥ १४ ॥
नापाठयन्मृदुगिरः शुकसारिकास्ता
नालालयंश्च नकुलान् पृथुकानिव स्वान् ।
किंचाम्बुदध्वनिमुचो मुरजस्य नादै-
र्नानर्तयन् किमपि केलिकलापियूनः ॥ १५ ॥
एषा सा यमुना तटे च तदिदं वृन्दावनं पावनम्
क्रीडाकुञ्जगृहास्त एव सुमनःस्तोमाभिरामश्रियः ।
तेनैकेन विना परंतु परमानन्देन गोष्ठौकसाम्
गाढोद्वेगगतौजसां किमपि हा प्रीतेः पदं नाभवत् ॥ १६ ॥
विरहहुतवहाकुलीकृतानाम्
प्रतिदिवसं व्रजवामलोचनानाम् ।
दिवसगणनयाङ्गुलीदलानाम्
ननु तनु हन्त समग्रमग्रमासीत् ॥ १७ ॥
अपि रजनिषु निद्रादैन्यदूना दृगासी-
दहह दुरतिवाहो १ वर्षवद्वासरोऽभूत् ।
यदुतिलकवियोगव्याकुलानां वधूनाम्
परभृतकृतजल्पः कालकल्पश्च जज्ञे ॥ १८ ॥
हर हर विरहाग्नौ प्रौढिमानं प्रयाते
मलयजहरहाराहारसंसर्गसारात् ।
व्रजजनतरुणीनां ताम्रधाम्नां ललाम्नाम्
स्रगपि कुचतटस्याङ्गारतां गाहते स्म ॥ १९ ॥
रतिनायकसायकप्रतप्त-
व्रजनारीनयनाम्बुसिन्धुदम्भात् ।
प्रतिसद्म जगाम भानुकन्या
किमु कृष्णस्य विलोकनोत्सुकत्वात् ॥ २० ॥
अमृतं गरलं वदन्ति य-
द्विषजस्तन्मतमुत्तमं सखि ।
वितनोत्यमृतद्युतिर्यतः
परितापानिति काचिदब्रवीत् ॥ २१ ॥
न शैवलं शैवलिनीषु किंचि-
न्न पुष्करं पुष्करिणीषु तद्वत् ।

१ दुरतिवाह्यो, इति पाठान्तरम् ।

न वा मृणालानि मृणालिनीषु
स्मरप्रतप्तप्रमदोपचारात् ॥ २२ ॥
प्रथमाक्षरवर्जितानि तासाम्
भवनानि व्रजसुभ्रुवामभूवन् ।
विषयप्रकरो यकारशून्यो
न कदाचिन्न रतिर्विना विनाऽभूत् ॥ २३ ॥
चक्षुश्च्युतप्रचुरपुष्करबिन्दुवृन्दै-
रार्द्रीभवत्पृथुपयोधरभूधरायाः ।
मुक्ताफलैर्विदधिरे त्रिपुरारिपूजाम्
प्राप्तुं पुनः प्रियमिव व्रजवारिजाक्ष्यः ॥ २४ ॥
पुण्यान्यपुण्यान्यपि पुष्कलानि
व्रजप्रियाणामिति तर्कयामः ।
सर्वेश्वरस्याद्भुतहर्षहेतो-
र्योगो वियोगोऽपि बभूव यस्मात् ॥ २५ ॥
आलिङ्गति स्तनयुगं हरिरादरेण
बिम्बाधरं पिबति वस्त्रमपाकरोति ।
वंशीरवैर्नवनवैश्च मुदं ददाति
स्वप्ने कया न ददृशे सुदृशेति शश्वत् ॥ २६ ॥
वृन्दावनं पुष्पभराभिरामं १
गोवर्धनः कुञ्जकदम्बमाली । ।
कलिन्दकन्यापुलिनं २ च दृष्टं
नवं नवं तद्विरहं चकार ॥ २७ ॥
इति तद्विरहानलाकुला ३
ललनाः क्लेशशतानि लेभिरे ।
भगवान् विविधद्विजद्रुमान् ४
पथि पश्यन् स शनैः शनैरगात् ॥ २८ ॥
अनिमिषमसकृत् तद्वीक्ष्यमाणेन दूरा- ५
द्रथचरणतुरंगोद्धूतधूलीभरेण ।

१ गोपकदम्बशालि, इति पाठान्तरम् ।
२ पतङ्गपुत्रीपुलिनं, इति पाठान्तरम् ।
३—कुलाकुला, इति पाठान्तरम् ।
४ भगवानपि वृक्षपक्षिणः, इति पाठान्तरम् ।
५ वियतिविहृतिभाजा वायुवेगेन विष्वग—, इति पाठान्तरम् ।

गगनमभिगतेना१ लिङ्गितायां समन्तात्
सुरसरिति पयोजैः पङ्कजत्वं प्रपेदे ॥ २९ ॥
वीचिचञ्चलविहंगमावृताम्
पद्मपङ्क्तिसुरभीकृतोदकाम् ।
प्राप तां भगवतीं विवस्वतो
नन्दिनीं स किल नन्दनन्दनः ॥ ३० ॥
वल्लवैः सह दिगीन्द्रवन्दितौ
तौ स्थितौ पुलिन एव निर्मले ।
स्नातुमम्भसि ततः श्रमक्लम २-
ध्वंसकारिणि ममज्ज वैष्णवः ॥ ३१ ॥
तमेव साक्षात् पुरुषं पुराणम्
पुरारिमुख्यामरसेव्यमानम् ।
स तत्र दृष्ट्वा बहिरन्तरस्थम्
प्रेम्णा स्तवं तस्य ततान सम्यक् ॥ ३२ ॥
अजामिल इलातले मलिनमूर्तिरासीन्महान्
न तेन सदृशः श्रुतो नच विलोकितः कुत्रचित् ।
अहो अपि तवाभिधास्मरणतः स मुक्तोऽभवत्
तदाप्रभृति माधव ३ त्वयि सुखं खलः खेलति ॥ ३३ ॥
अपहाय भवत्पदारविन्दम्
परमानन्दमरन्दशोभमानम् ।
अधमाः कतिचित् कृपापयोधे
विषकल्पान् विषयान् भजन्ति शश्वत् ॥ ३४ ॥
मम सूनुरसौ मम प्रियासौ
धनमेतन्मम मन्दिरं ममैतत् ।
इति केशव केऽपि संगिरन्ते
न पुनर्नाम तवाभिराममेतत् ॥ ३५ ॥
अनित्यसुखलब्धये क्रतुषु कर्मठाः केचन
श्रुतेर्वचनमात्रतः पशुवधं सुखं कुर्वते ।
परंतु परमार्थतस्तव पदारविन्दद्वयम्
कृतान्तकमहाभयं हृदि न चिन्तयन्ति प्रभो१ ॥ ३६ ॥
निरन्तरनिरादराः सुतसुहृत्सुदृक्सद्मसु
प्रसन्नमृदुमानसा गिरिगुहागृहावासिनः ।
प्रतिक्षणभवत्कथाकलितकौतुकाः सार्थकम्
नयन्ति मनुजा जनुर्जनपदे गतं २ केचन ॥ ३७ ॥
जलजन्तुधृतो महागजेन्द्रः
पशुरप्येष भवत्स्मृतिं चकार ।
सदसद्विदुरैरतस्त्वमेव
स्मरणीयोऽसि विपत्सु विश्वबन्धो ॥ ३८ ॥
गृहं सुरसमृद्धिमत् प्रियतमा रमास्पर्धिनी
मतिर्गुरुगुरुत्वहृद्वपुरहो सुखस्यास्पदम् ३ ।
यशः शशिवदुज्ज्वलं ज्वलनवत् प्रतापः प्रभो
समग्रमिदमाप्यते तव पदप्रसादोदयात् ॥ ३९ ॥
भवज्वरनिवृत्तये पतितपावन त्वत्पद-
प्रवालमिदमौषधं हृदि सकृत् सुधीर्धारयेत् ।
अपथ्यमिह वर्जयेद्विषयवासनालक्षणम् ४
वसेच्च विजने वने फलदलाम्बु संशीलयेत् ॥ ४० ॥
पदाम्भोरुहाम्भो दधाति त्वदीयम्
महेशोऽपि साक्षात् सदा मस्तकेन ।
विधिस्तावदासीद्भवन्नाभिपद्मा-
दतः कः समस्ते समस्तेश्वरः स्यात् ॥ ४१ ॥
यज्ञादिकर्मैककृतादराणाम्
गतागतप्राप्तिरवश्यमेव ।
त्वन्नाम नारायण ये स्मरन्ति
तरन्ति ते संसृतिसागरं द्राक् ॥ ४२ ॥
अक्रूर इत्थं स्तुतिमीश्वरस्य
श्लोकैरतिश्लोककरैरकार्षीत् ।

१ अपिहितमिहिरेणा—, इति पाठान्तरम् ।
२ तदध्वज,— इति पाठान्तरम् ।
३ स तु त्वदभिधाग्रहात् त्रिदशमुख्यमुक्तः स तान् निरस्य [illegible]ऽखिलान इति पाठान्तरम् ।

१ परंतु न शुक्रादिवत् समसमस्तभूताः प्रभो भवन्ति भवहेतवे भवति भक्तिमातन्वते, इति पाठान्तरम् ।
२ श्लाघ्यतां, नयन्ति मतिमज्जना जनपते जनुः, इति पाठान्तरम् ।
३—नूपुरनङ्गभङ्गप्रदम्, इति पाठान्तरम् ।
४ अपि प्रियतमाजनाननिरीक्षणं वर्जयेत्, इति पाठान्तरम् ।

ततः प्रणामं शिरसाभिरामम्
पुनः पुनः प्रेमसमुद्रमग्नः १ ॥ ४३ ॥
भवविरक्तमना भगवत्प्रियो
रविसुतासलिलाद्बहिरागतः ।
विहितसर्वविधिर्हृदि विस्मितो
रथमथो विदितजपयोऽभ्यगात् ॥ ४४ ॥
नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
त्रैलोक्यकौतुककरं क्रियते स्म काव्यम्
लोलिम्बराजकविना कविनायकेन ॥ ४५ ॥

इति श्रीमत्सूर्यपण्डितकुलालंकारश्रीहरिहरमहाराजोद्द्योतितलोलिम्बराजकृते हरिविलासे महाकाव्ये भगवद्वर्णनं नाम चतुर्थः सर्गः ॥ ४ ॥ :: ॥ :: ॥ :: ॥

संयुतं वाजिभिर्वायुवत् सत्वरै-२
श्चामरैश्चारुभिः शोभितैः सर्वतः ।
नोदयामास तं रामकृष्णान्वितम् ३
गान्दिनीनन्दनः स्यन्दनं सुन्दरम् ॥ १ ॥
अवलोकनलोलविलोचनयो-
र्यदुनन्दनयोर्नवयौवनयोः ।
पथि कावन काञ्चनचारुरुचिः
प्रमदा प्रमदातिशयं विदधे ॥ २ ॥
तन्मुखोद्गतकथाकदम्बका-
कर्णनाविदितवर्त्मवेदनः ।
माधवोऽथ सहसैव पेशलम् ४
पश्यति स्म मथुरां पुरीं पुरः ॥ ३ ॥
मुग्धाः प्रदीपपटलीं प्रशमं नयन्ति
यस्यां रतेरवसरे वसनाञ्चलेन ।
अङ्गस्थभूषणमणिप्रकराः परंतु
तासां वृथा विदधते बत चेष्टितं तत् ॥ ४ ॥
पश्यन्ति यत्र यमुनामसकृद्गवाक्ष-
मार्गैर्मृगाङ्कवदनाः परिपूर्णतीराम् ।
अम्भोविहारविहितादरवारिजाक्षी-
वक्षोजवीक्षणविनोदिविटावलीभिः ॥ ५ ॥
दिनकरकरजालैर्यत्र संशोषितेषु
प्रलयदहनकल्पैः केलिवापीजलेषु ।
अलिकुलपरिपीता अप्यमन्दा मरन्दा
जलजजठरजाताः पूर्ववत् पूरयन्ति ॥ ६ ॥
आरुह्य सौधशिखराणि नवातपानि
पीनस्तनद्वयपरिश्रमतः कथंचित् ।
प्रक्षालयन्ति वदनं वनिताः प्रभाते
यस्यां सदा सुरसरित्सलिलैः सलीलम् ॥ ७ ॥
अन्यत्र भिक्षुर्लभते सुशीलो
वपुर्वियोगे परमं पदं यत् ।
यस्यां सदा मद्यमदप्रसक्ता
वाराङ्गनास्तत् सुखमाप्नुवन्ति ॥ ८ ॥
सरभसमवगाह्यते कथंचित्
सुतनुजनेन विलासवापिकाम्भः ।
ज्वलदतुहिनभासि मासि यस्याम्
चलमकरं मकरन्दवत् सुजातम् ॥ ९ ॥
अनुपमरचनानां यत्र लीलागृहाणाम्
मरकतखचितानि प्राङ्गणक्ष्मातलानि ।
अविरलरसपानारब्धगानालिकान्ता-
कुलकुसुमसुजातैः पारिजातैर्जयन्ति १ ॥ १० ॥
रहसि विलिखितस्य प्राणनाथस्य चित्रे
दृढतरपरिरम्भारम्भरङ्कैकभूमिः २ ।
चकितचपलचक्षुर्वीक्ष्य वक्त्रं सखीनाम्
स्मितसुभगमुखश्रीर्लज्जते यत्र योषा ॥ ११ ॥
अविरतभगवत्कथैकतानाः
प्रमदजलार्द्रदृशश्च्युतप्रपञ्चाः ।
निमिषमिव दिनं नयन्ति यस्याम्
कति कति भागवतोत्तमा न शश्वत् ॥ १२ ॥
अथ पथि रजकं ददर्श कंचित्

१ ततः प्रणामं स करोति यावत् तावत् त्रिलोकीतिलकस्तिरोऽभूत्, इति पाठान्तरम् ।
२–द्रुत्वरैः, इति पाठान्तरम् ।
३ श्रीपतेराज्ञया नोदयामास तं, इति पाठान्तरम् ।
४ माधवोऽपि सहसैवपेशलाम्, इति पाठान्तरम्

१ मदनकलिकलावित्कामिनीमण्डनत्वं प्रचुरकुसुमजातैः पारिजातैर्नयन्ति, इति पाठान्तरम् ।
२–शङ्कैकभीरुः, इति पाठान्तरम् ।

प्रभुषु वरो वसनानि तं ययाचे ।
न स कुमतिरदात् ततः शिरोऽसा-
वहरदुदग्रकराग्रमण्डलाग्रः ॥ १३ ॥
ततो वसित्वा वसनानि सम्यक्
पीताम्बरोऽसावसिताम्बरश्च ।
शेषाण्यदाद्गोपकदम्बकाय
तेषां तदा काचन कान्तिरासीत् ॥ १४ ॥
धरणिरमणमार्गे कंसदासी विवक्रा
मधुमथनमलिम्पच्चारुणा चन्दनेन ।
स सपदि हृदि हृष्टस्तां मनोज्ञामकार्षी-
न्न भवति महतां हि क्वापि मोघः प्रसादः ॥ १५ ॥
आनन्दकन्द यदुराज यदि प्रसन्न-
स्तन्मां सुखीकुरु विचित्ररतिप्रकारैः ।
इत्थं स्मरज्वरवशाद्बहु भाषमाणां
तां साधु साध्विति हरिः प्रहसन्नुवाच ॥ १६ ॥
पीताम्बरो जलदनीलरुचिः स कृष्णः
श्यामांशुको जलजगौरतनुः स रामः ।
इत्थं यथार्थमयथार्थविदे जनाय
सूचीमुखेन सरलेन शशंस कश्चित् ॥ १७ ॥
निरीक्षितः सौधशिरःस्थिताभि-
स्तां राजधानीं पुरसुन्दरीभिः ।
समग्रगोपावलिमध्यवर्ती
विवेश कृष्णश्च सकृष्णवस्त्रः ॥ १८ ॥
तमागतं भृत्यमुखान्निशम्य
समस्तसैन्यैः सहितः समन्तात् ।
कंसः कृतान्तप्रतिमल्लमल्ले
रङ्गस्थले मञ्चमुरीचकार ॥ १९ ॥
यत्र स्थितः कंसमहीश्वरोऽसौ
भटैर्वृतो हस्तगृहीतशस्त्रैः[1] ।
स्थलं तदेवाभिससार शौरि-
स्त्रासेन हीनः सह तैः सुहृद्भिः[2] ॥ २० ॥
जिघांसया तस्य समागता ये
मल्ला मदान्धा धरणीध्रकल्पाः ।
सर्वेऽपि ते तेन बलोद्धतेन
नीताः पुरं प्रेतपतेः क्षणेन ॥ २१ ॥
अथ परमलघिम्ना मञ्चमारुह्य तुङ्गम्
मृगपतिरिव शृङ्गं भोगिभोगप्रभेण ।
अहह तदसिना द्राक् पातयामास मह्याम्
नलिनमिव मनोज्ञं कंसकं स प्रकोपात् ॥ २२ ॥
प्रकटितधृतसाराः कान्दिशीकत्वभाजाम्
तदनु तदनुगानां शस्त्रवस्त्राणि जह्रुः ।
अपि पशुपतिडिम्भाः सोत्सवा निर्भयत्वा-
न्मदकलकरिकल्पा रङ्गभङ्गं च चक्रुः ॥ २३ ॥
महामहसमुद्भवाद्व्रजसदामधीशोऽभवत्[1]
प्रफुल्लनलिनाननः सह समग्रगोधुग्गणैः ।
हतेषु परिपन्थिषु प्रथितपौरुषेषु क्षणा-
द्विपत्तितिमिरातुरोद्धरणसूनुना सूनुना ॥ २४ ॥
प्रभुमपि पशुपालने यदेनं
व्रजपतिरादिशति स्म तत् प्रमाणम् ।
सदुचितमधमाधमाय तस्मै
व्यतरदहो यदसौ स्वरूपयोगम् ॥ २५ ॥
एष यास्यति बतैककः कथं
नाकनाथनगरीं स्वमातुलः ।
प्राहिणोदिति धियेव सत्वरम्
सीरभृत् तदनु तस्य सैनिकान् ॥ २६ ॥
कुसुमवृष्टिरकारि तदा सुरै-
र्ननृतुरप्सरसश्च पुनः पुनः ।
जगदिदं गतशल्यमभूत् सुखम्
विदधिरे च तपांसि तपस्विनः ॥ २७ ॥
अथ तत्र गतत्रपयेत्य गृहा-
दतिनिर्दयताडितमस्तकहृत् ।
परिगृह्य शिरः करयोः कुपते-
र्विललाप विलासवतीनिकरः ॥ २८ ॥
फुल्लदम्बुरुहरम्यलोचनं
कर्णलम्बिकमनीयकुण्डलम् ।
केन वज्रकठिनात्मना हृतं

१ वीरैर्वृतः शस्त्रसमेतहस्तैः, इति पाठान्तरम् ।
२ सिंहो यथा कुञ्जरकुञ्जकेलि, इति पाठान्तरम् ।
१ महामहसमन्वितः समभवद्यशोदापतिः, इति पाठान्तरम् ।

प्राणनाथ भवतः शिरः क्षणात् ॥ २९ ॥
कोटिशः करटिनस्तवाङ्गणे
लक्षशश्च ललितास्तुरंगमाः ।
पतिरेव सुकुमार हा कथं
त्वं गतोऽसि भुवनान्तरं प्रति ॥ ३० ॥
वीर हीनवसुदेवसूनुना
त्वां निशम्य निहतं महोदयम् ।
अद्य गोत्रजगणो गृहोदरे
नैव मास्यति मुदातिमेदुरः ॥ ३१ ॥
रुचिरं वचनं दृशौ सुदीर्घे
बत निःशेषनिशेशवल्गु वक्त्रम् ।
तनुता च तनौ स्तनौ च पीनौ
प्रिय विश्वं न सुखं विना त्वयैतत् ॥ ३२ ॥
हा प्रफुल्लनवकुन्दसुन्दरा-
स्ते नचाप्रतिम भान्त्यमी रदाः ।
यैर्भवान् व्यरचयद्व्रणावलीः
कोमलेऽधरदले पुनः पुनः ॥ ३३ ॥
अयि सुभग विना त्वया पुरीयं
वयमिव राजति हन्त नैव किंचित् ।
अहह किमनया महासमृद्ध्या
तृणवदसूनपि साम्प्रतं प्रतीमः ॥ ३४ ॥
विश्वं विलोकयति विष्वगिदं समस्तं
किं त्वं सुखं स्वपिषि भूमितले कठोरे ।
उत्तिष्ठ वीरवर पाण्डुरधाम्नि धाम्नि
पुष्पालिशालिशयने शयनं कुरुष्व ॥ ३५ ॥
भोजनप्रसर एष भूपते-
रेति नाद्य बहिरेव किं स्थितः ।
सारिका यदि गृहे गदेत् तदा
त्वं विपन्न इति को नु तां वदेत् ॥ ३६ ॥
अयि चुम्बसि चेन्न वक्त्रबिम्बं
कुचयोश्चेत् परिरम्भणं न दत्से ।
चपयास्य जनस्य वार्यते हा
किमु कोपो वरिवर्ति चक्रवर्तिन् ॥ ३७ ॥
त्वं गमिष्यसि महेन्द्रमन्दिरं
मोक्ष्यसे नवनवाश्च सुन्दरीः ।
हन्त दुःखमधुना क्षणे क्षणे
सुन्दरेक्षण न एव केवलम् ॥ ३८ ॥
युक्तमेव दिवि गामिना त्वया
तद्व्यधायि तदुपेक्षिता वयम् ।
ईदृशीं तव दशां निरीक्ष्य नो
यन्न दग्धहृदयं विदीर्यते ॥ ३९ ॥
रुदितैरुदितैश्च तत्र तन्वी-
र्व्यथयन्तीरिति भूमिपालपत्नीः ।
तमसः प्रशमोचितैर्वचोभि-
र्दृढमाश्वासयति स्म वासुदेवः ॥ ४० ॥
ततो व्यधात् पार्थिवमुग्रसेनम्
बन्धं स्वपित्रोश्च निराचकार ।
तत्त्रासतश्चापगतान् दिगन्तान्
सुहृद्गणानानयति स्म देवः ॥ ४१ ॥
रुचिरकुचतटीनां नाट्यकाले नटीनाम्
प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासीत् ।
धिमिकिति धिमिधिक्तां धिग्धिगित्तां धिगित्ताम्
तगतगतगतत्तत्थ्येयिथेयीति शब्दः ॥ ४२ ॥
अद्य वन्द्यचरणः सुरासुरै
रन्तुमिच्छति मया समं हरिः ।
कंसदूतिरिति जातनिर्वृति-
र्देहगेहसुषमां व्यरीरचत् ॥ ४३ ॥
भूषांशुकाश्वगजराजविराजमानान्
प्रस्थाप्य नाथहरिपालपतीन् समस्तान् ।
कृष्णास्तया सह सहस्रदलायताक्षो
ज्योत्स्नाकृतस्मरजनिं रजनीं निनाय ॥ ४४ ॥
प्राहिणोत् स सदयो व्रजाङ्गना-
सान्त्वनाय मतिमन्तमुद्धवम् ।
सोऽपि तं प्रति ययौ रथस्थितो
विश्वविश्वधृतविष्णुभावनः[1] ॥ ४५ ॥
चरमाचलमौलिमण्डनत्वं
द्युमणौ प्राप्नवति प्रभोर्भुजिष्यः ।
अविशद्व्रजमुद्धवाभिधानो
युतमानो रजसा गवां समन्तात् ॥ ४६ ॥

१—कृतविश्वभावनः, इति पाठान्तरम् ।

अतिरतिपरितापात् पाण्डुगण्डस्थलीभिः
प्रतिगृहकृततल्पं पल्लवैर्वल्लवीभिः ।
विरतसुरतलीलालास्यहास्यप्रसङ्गम्
व्रजपुरमभवत् तन्नोद्धवस्योद्धवाय १ ॥ ४७ ॥
सहसाङ्गणमागतं रमाया
रमणस्यानुचरं स नन्दगोपः ।
तरसा परिरभ्य सप्रहर्षम्
गततर्षं विषयेषु विज्वरोऽभूत् ॥ ४८ ॥
संपूज्य तं विधिवदुद्धवमासनाद्यैः
सम्यक् समयविधिविद् विविधोपचारैः ।
नन्दस्तमित्थमवदद् घननील २ मूर्ति-
रास्ते स तत्र कुशली मुशली च तद्वत् ॥ ४९ ॥
पप्रच्छ यद्यद्व्रजसार्वभौम-
स्तत् तत् स तस्मै कथयांबभूव ।
तस्मिन् क्षणे ताः स्मरदुःखदीना
मन्दाक्षहीना जगदुस्तमित्थम् ३ ॥ ५० ॥
कंसो हतः स्वसुहृदामपकारकारी
प्राप्तं च राज्यममरेन्द्रपदानुसारि ।
दास्यन्ति भूमिपतयः शतशः स्वपुत्री-
रत्रागमो बत भवेदधुनास्य कस्मात् ॥ ५१ ॥
ग्राम्या वयं क्व पशुपालजनैकभोग्याः
सर्वोत्तमः क्व कमलाकरलालिताङ्घ्रिः ।
सङ्गोऽस्य यः समभवत् स घुणाक्षरस्य
न्यायस्तदाप्तिरधुना शशशृङ्गतुल्या ॥ ५२ ॥
अकृत सुकृतपुञ्जैः स्वप्नमध्येऽप्यलभ्याः
परमपुरपुरन्ध्रीः प्रार्थयन्तीर्विहाय ।
विदितरतिविशेषः श्रीपतिः प्राप्तराज्यो
यदनुभवति दासीस्तन्न संजाघटीति ॥ ५३ ॥
आगमिष्यति कदाचिदच्युतः
कौतुकेन कृपयाथवा पुनः ।
उद्धव ध्रुवमनेन हेतुना
जीवति व्रजविलासिनीजनः ॥ ५४ ॥
अपि सुचरितदीनोद्धारकस्य त्रिलोक्याम्
सृजतु विरुदमेतन्मूलभूतं त्रपायाः ।
वयमिह विरहाग्नौ दह्यमाना वियुक्ताः १
सह स हरिणदृष्ट्या तत्र केलिं करोति ॥ ५५ ॥
हन्त किं न वयमुद्धव दीना
दीनबन्धुरपि किं न मुरारिः ।
ह्रीरुदेति हृदि नास्मदुपेक्षां
कुर्वतोऽस्य परमद्भुतमेतत् ॥ ५६ ॥
अनृतमुद्धव मा वद सर्वथा
भगवतः शपथस्तव वर्तते ।
बत वयस्य सभासु कदापि नः
किमपि स स्मरति स्मरसुन्दरः ॥ ५७ ॥
यावदार्य बत जीवितमास्ते
तावदेहि दयया परमात्मन् ।
एवमेव वद तं बत २ गत्वा
ब्रूमहे किमु वयं पुनरन्यत् ॥ ५८ ॥
इतीरयित्वा विरराम रामा-
कदम्बकं दृक्चलिताम्बुधारम् ३ ।
ततः स वाक्यं स्वयमाबभाषे
तन्मानसस्वास्थ्यकरं स्वभावात् ४ ॥ ५९ ॥
उत्कर्षः क्रियते कथं कुमुदिनीबन्धोः प्रतिस्पर्धिनः
कृत्वास्यं मलिनं विलोचनजलैः स्फारीभवत्कज्जलैः ।
आयास्यत्यचिरात् करिष्यति सुखोद्रेकं स वः पूर्ववद्
राकाकैरवबन्धुबन्धुरमुखः कृष्णाभिधानो हरिः ॥ ६० ॥
इति मधुरवचोभिर्घोषसीमन्तिनीनाम्
मनसि मनसिजार्तैं स्वास्थ्यवासं वितन्वन् ।
कतिचिदयमनैषीत् तत्र रात्रीस्त्रिलोकी-

१ व्रजनगरमभूत् तत्रोद्धवस्योत्सवाय' इति-
पाठान्तरम् ।
२ पप्रच्छ गोपपतिरित्थमनङ्ग—, इति पाठान्तरम् ।
३ तस्मिन् क्षणे गोपविलासवत्यो
निरस्तलज्जा जगदुस्तमित्थम्,
इति पाठान्तरम् ।

१ विमुक्ताः, इति पाठान्तरम् ।
२ प्रति इति पाठान्तरम् ।
३ इति ब्रुवाणा विरराम रामा-
गणो गलद्बाष्पविलोचनसरोजः, इति पाठान्तरम् ।
४ दुःखद्रुमोन्मूलनकारि तासाम्, इति पाठान्तरम् ।

पतिगुणगणगानोद्गतहर्षाश्रुबिन्दुः ॥ ६१ ॥
उचितं न करोति कैटभारिः
क्षणमप्येकमिहेति यन्न विद्वान् ।
इति स्म स्वमनस्यमंस्त तत्त-
द्विरहक्लेशकृशत्वदर्शनेन ॥ ६२ ॥
तत्समागमागमकृते बहु लौल्यं
कार्श्यमप्यतिशयेन शरीरे ।
वीक्ष्य सोऽप्यहह दुःखसहस्रा-
दश्रुपूरपरिपूर्णदृगासीत् ॥ ६३ ॥
सुजनवरयशोदानन्दसंदर्शनार्थं
यदुपतिमिह गत्वा प्रेषयैवैकवारम् ।
मुहुरिति मिलिताभिस्ताभिरुक्तो रथस्थः
कथमपि हरिदासो गोकुलान्निर्जगाम ॥ ६४ ॥
यद्यद्बभाषे सुमुखीसमूहो
यद्यत् स तद्धैन्यमवेक्षते स्म ।
तत् सर्वमागत्य गुणाकराय
न्यवेदयद्भागवतावतंसः ॥ ६५ ॥
सरस्वदुदरे क्षणादलघु हेमहर्म्यस्फुर-
च्चकार पुटभेदनं विगतवेदनं स्वर्गवत् ।
इभाभ्रशशभृद्रसेन्दु (१६१०८) मितसुन्दरीभिः समम्
स तत्र सुखमन्वभूद्यदुकुलावतंसो हरिः ॥ ६६ ॥
ज्ञात्वापि गोपललनाः स्वसमागमोत्का
नो गोकुलं प्रति जगाम जगन्निवासः ।
नानानरेन्द्रतनयाहृतचित्तवृत्ति-
र्जीर्णं जलं नवजलैर्ह्रियते हि नद्याः ॥ ६७ ॥
अनन्तः समं तासु कान्तासु लेभे
खनागाभ्रचन्द्रर्तुभू (१६१०८०) संख्यसूनून् ।
गुणज्ञान् गुणानां गणै रञ्जयन्तं
जयन्तं जयन्तं कमाहुर्न तेषाम् ॥ ६८ ॥
जनकृतकृतधर्मे तस्य राज्ये समन्ता-
दगणितभुजशौर्यौदार्यरूढस्य शश्वत् ।
गहनगहनमध्ये दस्युनामापि नासीत्
त्रिदशतरुसमानो याचमानो जनोऽभूत् ॥ ६९ ॥
अपि सवनसहस्रसंयुतोऽसौ
स्वयमकरोद्व्यवहारमेकविद्वान् ।
क्षणमपि खलसंगतिं न चक्रे
सुकविसभासु सभासु नित्यमासीत् ॥ ७० ॥
सदा सादरं सुन्दरीगीयमानं
पुरग्रामकान्तारकुञ्जोदरेषु ।
असौ माधवो दुःखवृक्षावलीनाम्
लवित्रं पवित्रं चरित्रं चकार ॥ ७१ ॥
विश्वंभरोऽन्यांश्च निहत्य दैत्यान्
विश्वंभराभारमपाचकार ।
भवाब्धिमज्जज्जनतारकस्य
प्रायोऽवतारो हि सदुत्सवाय ॥ ७२ ॥
बाल्यमैत्र्युपगतं द्विजमेकम्
दुर्बलं धृतसरन्ध्रपटार्धम् ।
अर्चति स्म परिरभ्य स सम्राट्
श्रीमदं न गणयन्ति कुलीनाः ॥ ७३ ॥
त्वद्वाहोद्धूतधूल्यः करिकरनिकरैः सीकराश्च प्रयुक्ता व्योम
व्यापुः समन्ताद्यदुमुकुटमणे तत्र पङ्कोऽद्भुतोऽभूत् ।
आगच्छद्भिः सुरैः क्ष्मां तव भजनकृते स्फाटिकीभिः शिलाभि-
र्बद्धः पन्थास्तदानीं सुरसरिदिति तं मानवा मानयन्ति॥७४॥
श्रीकृष्ण त्वत्प्रतापेन
प्रतप्ताङ्गीर्दिगङ्गनाः ।
दिग्गजा वीजयन्त्येव
कर्णतालैः पुनः पुनः ॥ ७५ ॥
वनेषु वनदेवता दिवि दिवौकसां वल्लभा
भुजंगकुलकन्यका भुजगलोकलीलावने ।
यशः समरसंचितं नरमृगेन्द्र गायन्ति ते
प्रभाविजितकौमुदीकुमुदपाण्डुताडम्बरम् ॥ ७६ ॥
यस्त्रातुं व्रजमुज्जहार सहसा गोवर्धनं क्ष्माधरम्
यस्त्रैलोक्यमदर्शयन्निजमुखाम्भोजे यशोदाकृते ।
यः पुत्रं स्वगुरोर्यमालयगतं शक्त्याऽऽनिनाय क्षणाद्
यो भूभारमपाचकार सकलं तस्मै नमः शार्ङ्गिणे ॥ ७७ ॥
किं त्यक्त्वा वसतिं बले क्षितितले पातालमेवाश्रितम्
भो भोगीश्वर हन्त तत्र सततं मां क्लेशयन्त्यर्थिनः ।
आस्ते कोऽपि हरिर्गयाचलगिरौ क्ष्मापालचूडामणि-
स्तेनार्थिप्रकरः कृतो धनदवद्गच्छाधुना त्वं सुखम् ॥७८॥
श्रीमान् ह्वामरसोऽभवद् द्विजकुलालंकारचूडामणि-

गङ्गानिर्मलमौनिभार्गवकुले तस्माद्रविः पण्डितः ।
आसीत् तस्य सुतः सुरासुरकृतिं येह्लाम्बिकायां चिरा-
ल्लेभे श्रीहरिनाम रत्नमवनीमध्ये तदास्तां चिरम् * ॥७९॥

नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
त्रैलोक्यकौतुककरं क्रियते स्म काव्यम्
लोलिम्बराजकविना कविनायकेन ॥ ८० ॥

इतिश्रीमत्सूर्यपण्डितकुलालंकारश्रीहरिहरमहाराजाधिराजोद्द्योतितलोलिम्बराजकृते हरिविलासे महाकाव्ये कंसवधो नाम पञ्चमः सर्गः ॥

॥ हरिविलासःसंपूर्णः ॥ :: ॥ :: ॥

---

## ॥ श्रीपरमेश्वराय नमः ॥

॥ न्यायस्वरूपनिरूपणम् ॥

---

यद्भासा भाति विश्वं सकलमपि न यद्भासनाय क्षमन्ते
ज्योतींष्यन्यानि यच्च क्वचिदपि न धियो गोचरो नापि वाचः ।
तद्वस्त्वेकाद्वितीयं वियदनिलमुखाकारनानाविवर्त्तं
प्रेम्णाऽस्मान् सूक्तियुक्तिस्फुरणवितरणेनानुगृह्णात्वजस्रम् ॥१॥

इह खलु लौकिके शास्त्रीये च वाग्व्यवहारे समीहितार्थसिद्ध्युपोद्बलनाय न्यायावलम्बनं बहुषु निबन्धेषु समीक्ष्यते निबन्धकाराणाम् । तत् तेषामधिगतन्यायार्थानामभीप्सितं संपादयदपि तत्स्वरूपादिकमविदुषां केषां चिदसमीक्ष्य प्रवर्त्तमानानामस्थान एव तदुपन्यसनमुपहासायैव भूयसे । अपरैश्चेदानींतनैः पूर्वेषां पूर्वेषां विदुषां तत्तन्न्यायस्वरूपाणां विषयाणां च परमप्रसिद्धत्वात् तैः स्वग्रन्थेष्वप्रतिपादनेन तत्स्वरूपप्रभृतिपरिचयप्रेप्सुभिः प्रेक्षावद्भिरप्यतिमहता प्रयत्नेन तेषु तेषु निबन्धेषु तन्मार्गयमाणैरप्यलभमानैर्भूयानेव खेदोऽनुभूयते । अतस्तेषां सर्वेषां न्यायानां स्वरूपप्रदर्शनार्थनिर्वचनोदाहरणोपन्यासादिभिरेकत्र संगृह्य प्रकाशनमवश्यं सुधियां प्रमोदमुत्पादयेदिति चिरात्तथास्माकमेषाऽऽशा । तया च काशीविद्यासुधानिधिलाभेन चकोर्येव प्राप्तावसरया प्रेरिता वयं तत्प्रकाशनाय यतामहे ।

प्रकृतन्यायपदप्रतिपाद्यतावच्छेदकं च स्वघटितवाक्यघटितवाक्यकदम्बप्रतिपाद्यत्वसम्बन्धेन यत्किञ्चित्पदविशिष्टो यः प्रतिपादयित्रा दृष्टः श्रुतो वार्थो दृष्टान्तभूतः सन् प्रकृतार्थसिद्ध्युपष्टम्भकस्तत्त्वम् । भवति चापूपा निहिता न दृश्यन्ते" मूषिकाश्च दण्डं भक्षयन्त ईक्षिताः" दण्डं भक्षयतां चापूपभक्षणं सुसम्भाव्यमेवेति मूषिकैरेवाऽपूपा भक्षिताः स्युरिति वाक्यकदम्बार्थस्य प्रदर्शितसंबन्धेन दण्डापूपपदविशिष्टस्य यं भारं दुर्बलोऽपि वोढुं शक्नुयात् तद्भारवहनं बलिष्ठेन सुतरां शक्यं कर्तुमित्यादिप्रकृतार्थसिद्धौ दृष्टान्तत्वेनोपष्टम्भकत्वमिति समन्वयः । अन्यत्राप्येवमेवोह्यः ।

अत्र च लौकिका एव न्याया व्युत्पाद्यन्ते न तु मीमांसास्थनिषादस्थपत्यधिकरणन्यायादयः । तेषां मीमांसानिबन्धेषु न्यायमालाशास्त्रदीपिकाभाट्टदीपिकाप्रभृतिषु स्पष्टं व्युत्पादितत्वेनात्र तद्व्युत्पादनस्य नव्यनव्यदर्शनरसिककाशीविद्यासुधानिधिचकोरप्रीतिकरत्वसम्भावनाभावादिति ।

## ॥ १ ॥ ब्राह्मणवसिष्ठन्यायः ॥

एतस्य स्वरूपं निरूप्यते । यत्र ब्राह्मणानर्चय वसिष्ठं चार्चयेत्युच्यते तत्र प्रथमवाक्येनैव ब्राह्मणत्वेन रूपेण वसिष्ठस्याप्यर्चनस्य विधानसिद्धौ यद्वसिष्ठमर्चयेति-वाक्यान्तरं प्रयुज्यते तत् पूर्ववाक्यघटकब्राह्मणपदोपात्तवसिष्ठेतरयावद्व्यावृत्तधर्मविशेषबोधनपरतया पर्यवस्यति । तथाहि । पूर्ववाक्येन तावद् ब्राह्मणत्वावच्छेदेनार्चनस्य विधातुमशक्यत्वेनोद्देश्यतावच्छेदकसामानाधिकरण्येनैव विधेयान्वयस्य वक्तव्यतया कदाचिद् वसिष्ठार्चनस्यापि सम्भाविततया तदपाकरणाय प्रयुज्यमानं वसिष्ठमित्यादिवाक्यं पूर्ववाक्योपात्तमेवार्थमवयुत्यानुवदद् वसिष्ठे वसिष्ठेतरयावद्ब्राह्मणव्यावृत्तप्राशस्त्यमेव व्यक्तं व्यञ्जयत् तदर्चनस्यावश्यकत्वं ज्ञापयति । ततश्च समानकार्यविधानोद्देशेनोपात्तयोर्व्याप्यव्यापकभावापन्नधर्मावच्छिन्नबोधकयोः पदयोरेकतरस्य वैयर्थ्याकलनेन स्ववैयर्थ्यसम्पादकपदप्रतिपाद्या ये स्वेतरे यावन्तस्तद्व्यावृत्तधर्मस्य स्वप्रतिपाद्ये बोधनपरतया तज्ज्ञानासम्पाद्यफलविशेषोत्पादकस्वार्थज्ञानोत्पादनपरतया वा फलवत्त्वकल्पनमिति न्यायार्थः सिद्ध्यति ।

॥ अस्योदाहरणानि ॥

(१) यथा महाभाष्ये हलन्त्यमिति सूत्रे व्यवसितान्त्यं हलित्संज्ञं भवतीति वक्तव्यमिति वार्त्तिकस्यव्यवसितपदं

---

* किं त्यक्त्वेत्यारभ्य तदास्तां चिरमित्यन्तं पद्यद्वयं हरिविलासमुद्रणान्तावसरे श्रीहरिचन्द्रेति प्रसिद्धमहाधनिकपुस्तकागारोपलब्धचतुर्थादर्शादुपलब्धं ततश्च हरिहरमहाराजस्य पितामहो ह्लामरसशर्मा गयागिरिनिवासी मौन्युपनामको भार्गवगोत्रीयोऽवगतः ।
जननी च हरिहरमहाराजस्य येह्लाम्बिकेति भूमिकायामनुक्तमपि स्मर्तव्यमिति शमिति ॥ :: ॥

व्याख्यातं, के पुनर्व्यवसिताः, धातुप्रातिपदिकप्रत्ययनिपातागमादेशा इति, अत्र प्रातिपदिकपदेनैव प्रातिपदिकत्वेन रूपेण निपातानामपि संग्रहे सिद्धे ब्राह्मणवसिष्ठन्यायेन निपातपदोपादानमिति शेखरकारादयः । अर्वाग्दृग्भिः सुप्त्राव्वर्त्तिष्वेव प्रातिपदिकत्वस्य व्यवहारान्निपातेभ्यश्च सुपोऽदर्शनेन प्रातिपदिकत्वाभावनिश्चयेन निपातान्यस्येत्यद्वाच्यत्वं न ज्ञायेतेति तान् प्रत्युपादीयमानं निपातपदं व्यक्तमेव निपातेतरप्रातिपदिकव्यावृत्तपामरसमवेतप्रातिपदिकत्वाभावप्रकारकज्ञानविशेष्यत्वस्य निपातेषु व्यञ्जनामर्यादया बोधनेनार्थवद्भवतीति तेषामाशयः । यद्वा । निपातानां ज्ञानं येषां श्रोतॄणां कमनीयकामिनीदर्शनमिव सुखजनकं भवति तान् प्रति निपातपदमुपादीयमानं निपातेतरप्रातिपदिकज्ञानाजन्यसुखविशेषोत्पादकनिपातज्ञानजनकत्वेन फलवद्भवतीति कल्पनीयमिति ।

(२) यथा वा उपदेशेऽजनुनासिक इदित्यत्रोपदेशपदार्थप्रतिपादिका प्राचीनवैयाकरणानां कारिका ।

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्त्तिताः ॥ इति ।

अत्रापि सूत्रोपादानेन गणोपादानेन चोणादिलिङ्गानुशासनयोर्धातोश्च लाभे सिद्धेऽपि लोकानामष्टाध्याय्यामेव सूत्रपाठ इति व्यवहारेणोणादिलिङ्गानुशासनयोस्तद्व्यवहाराभावेन धातुपाठे च भ्वादिगणे दिवादिगण इत्यादिव्यवहारसत्त्वेऽपि गणपाठ इति व्यवहाराभावेनोणादिलिङ्गानुशासनधातूनामुपादानस्य लोकबोधनफलकत्वेनार्थवत्त्वमुचीयते । प्रदर्शितदिशा सुखविशेषजनकबोधोत्पादकत्वेन वा सफलत्वं कल्प्यते ।

(३) यथा वा दायभागप्रकरणे मिताक्षरादिधृतं योगियाज्ञवल्क्यवचनम् ।

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि ॥ इति ।

अत्रापि द्रव्यपदेनैव भूनिबन्धयोर्लाभे तदुपादानं स्वर्णरूपकादिष्वेव द्रव्यमिति व्यवहरतां व्यक्तं बोधनायैव । नच द्रव्यादिपदप्रतिपाद्यतावच्छेदकं भूमिनिबन्धादिसाधारणं न भवतीति नैतदुदाहरणमिति भ्रमितव्यम् । अनुपघ्नन् पितृद्रव्यं” क्रमादभ्यागतं द्रव्यं”अपुत्रधनं पत्न्यभिगामीतिप्रभृतिवचनघटकद्रव्यादिपदैर्भूम्यादेरपि बोधस्य दायभागप्रकरणे सुप्रसिद्धत्वात् ।

(४) यथा वा दैवादिप्रभेदेति साङ्ख्यसूत्रव्याख्याभूता कारिका ।

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥ इति ।

एतत्कारिकास्थतैर्यग्योनस्य पञ्चधात्वं पशुमृगपक्षिसरीसृपस्थावरभेदेन निरूपितं वाचस्पतिमिश्रसाङ्ख्यभाष्यकारप्रभृतिभिः । तत्रापि पशुभ्यो मृगाणां पृथङ्निर्देशो मृगेषु ग्राम्यजनस्य पशुत्वव्यवहाराभावात् तेषां व्यक्तं प्रतिपत्तय एव कल्प्य इति ।

एतत्समानार्थक एव शब्दान्तरघटितत्वेन विषयान्तरावलम्बित्वेन च भेदव्यपदेशं भजमानः,

## ॥ २ ॥ गोबलीवर्दन्यायः ॥

यत्र गाः कालय बलीवर्दं चेत्युच्यते तत्र गोपदेनैव बलीवर्दबोधसिद्धौ बलीवर्दपदं दुर्दम्यत्वज्ञापनपरत्वेन सफलमिति कल्प्यते । इति–

## श्रीपरमेश्वराय नमः

॥ अथेन्दिरापतिपरीक्षायाः पूर्वप्रक्रान्ताया अवशिष्टोंऽशः ॥

(१) क्ङिति चेति सूत्रस्थः कैयटः स्वरूपव्याक्रिययैव पराक्रान्तः ।

(२) निषेधाश्च बलीयांस इति न्यायेन विध्युन्मूलकतया निषेधानां प्राबल्यात् तत्रोपस्थितावपीतरत्र विधीनामुपस्थानमनुचितमेव ।

(३) क्ङिति चेति सूत्रे भिवादिवूपधार्थं तन्निमित्तग्रहणं कर्त्तव्यमित्युक्त्वा धातोरिति वर्त्तते धातुं क्ङित्परत्वेन विशेषयिष्याम इत्युक्त्वाऽथवा कार्यकालं सञ्ज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यं पुगन्तलघूपधस्य गुणो भवतीत्युपस्थितमिदं भवति क्ङिति नेत्युक्तं भाष्ये । भवद्रीत्या निषेधाकाङ्क्षया यथोद्देशपक्षेऽपि दोषवारणात् पक्षविशेषोपादानस्यासंगतिः ।

(४) विशेषप्रतिपत्तुः सञ्ज्ञादिविषये विध्याकाङ्क्षया तदुपस्थितौ विधिविषये चाकाङ्क्षया सञ्ज्ञाद्युपस्थितावन्योन्याश्रयः ।

(५) विधीनां प्राधान्यात् तत्रैव सञ्ज्ञादीनामुपस्थितेरौचित्येन यथोद्देशपक्षविलयापत्तिः । प्रथमत्यागे मानाभाव इत्याश्रयणे तु सञ्ज्ञादेश एव विध्युपस्थितौ तत एव लक्ष्यसंस्कारे विधिदेशे फलाभावेनाधानादिवत् पुनः संस्कारानौचित्येन कार्यकालपक्षस्यैव वा विलयापत्तिः ।

इत्यनुवादः ।

अथ प्रत्युक्तिः ।

(१) पुगन्तेतिसूत्रस्थक्ङिद्ग्रहणस्यानवकाशत्वमाचक्षाणो भगवानवश्यं निषेध्यभेदेन क्ङिति चेत्यस्य भेदमभिप्रैतीति, तदेतदुपपादयन्नुपाध्यायो यथोद्देशे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जत इति ग्रन्थेन किमपराध्यति, यत्र स्वरूपव्याक्रिययैव पराक्रान्त इति मुखमस्तीति वक्तव्यम् ।

(२) अस्तु तेन न्यायेन निरवकाशत्वरूपेण वा बीजान्तरेण निषेधानां प्राबल्यं तेन च बाधन्तां निषेधा विधींस्तथापि

(६३) विरहय्य न सामान्यं व्यक्तिः पुंभोगसाधिका ।

द्विविधं सुखादिवैषयिकमाभिमानिकं च संवेद्यते, तत्र पूर्वं शीतादिस्पर्शजन्यं स्वलक्षणहेतुकमेव सिद्धम्, उत्तरं त्वभिमानस्याध्यवसायरूपत्वेन पूर्वापरपरामर्शयोग्यार्थराज्यादिविषयं सिद्धम्, नच स्वलक्षणं तथाभूतं भवद्भिरिष्यते, इति सामान्यहेतुकमेव, ततः सुखादिसाधकत्वात् स्वलक्षणवत् सामान्यस्यापि नावस्तुत्वम्, "ननु तज्ज्ञानस्य तत्र हेतुत्वं न तस्येति चेत्,, न, स्वलक्षणविषयस्येव सामान्यविषयस्यापि ज्ञानस्यैव सुखाद्यवभासात्मकत्वात् स्वात्मनि क्रियाविरोधाच्च विषयस्यैव हेतुत्वमिति ॥

अधुना यैर्विनाशहेत्वसामर्थ्यवैयर्थ्याभ्यां क्षणिकत्वं साध्यते तान् प्रत्याह ।

(६४) इतः कारणनाशादेर्भङ्गोऽर्थे न स्वभावतः ।

इतः पूर्वोक्तात् स्थैर्यात् प्रमाणसिद्धाद्धेतोः कारणस्य नाशेन नाशोऽर्थस्य, यथा श्लेष्मादेर्नाशेन श्लैष्मिकस्य व्याधेः, आदिग्रहणान्नाशहेतोः, स क्वचिच्च कारणान्नाशः,तेन नाशहेतोः सद्भावाद्, यथा घटादेर्मुद्गरादिभ्यः, नतु स्वभावादेव, येन स्वभावस्याविशेषात् प्रागपि नाशसिद्धेः क्षणिकत्वं सिध्येत् ॥

"ननु नाशहेतवः किमव्यतिरिक्तं व्यतिरिक्तं वा तस्य नाशं कुर्वन्ति,, अव्यतिरेके भाव एव विनाशः, स च स्वहेतुनैव कृत इति वैयर्थ्यं तेषाम्, व्यतिरेकेऽपि अवस्तु वस्तु वा नाश इति वाच्यम्, तत्रावस्तुनोऽत्यन्तासत्त्वतः कर्तुमशक्यत्वादकिंचित्करत्वेनासामर्थ्यं तेषाम्, वस्तुत्वे तु घटस्यासौ पटादेरिवार्थान्तरत्वान्न नाश इति प्राग्वदुपलम्भप्रसङ्गः, "ननु घटनाशात्मनस्तस्य कृतत्वान्नैष प्रसङ्गः,, न, घटस्य न कृतो यतः, "ननु ततोऽस्य विनाशो भविष्यति,, न, तत्रापि स एव प्रसङ्ग इत्यनवस्था, तस्मादहेतुक एव विनाशोऽभ्युपगन्तव्यः, अहेतोश्च देशकालनियमायोगात् प्रतिक्षणं विनाशसिद्धिः, इत्यत आह ।

(६५) नचाप्यहेतुको नाशः कदाचिद्भावतोऽर्थवत् ।

न तावदहेतुको नाशो मुद्गरादिहेत्वन्वयव्यतिरेकानुविधानाज्जन्मवत्, अत एव नावस्त्वसौ, अपितु खर्पराद्यात्मको वस्त्वेव, घटादेर्हि खर्पराद्यात्मता नाशः प्रत्यक्षसिद्धो नान्यः, तस्यावस्तुत्वेन प्रमाणागोचरत्वात्, तदुक्तम्,

"यथाहेः कुण्डलीभावो व्यग्राणां वासमग्रता ।
तथैव जन्मनाशौ तु सतामेके प्रचक्षते,, ॥

इति, यद्येवं कार्यमेव विनाश उक्तः स्यात्, न, विकारित्वात्, कार्यं ह्युदकधारणाद्यविकृतरूपस्येव घटादेः सिद्धम्, नाशस्तु रूपान्तरापत्तिलक्षणो विकारः, इदमेव प्रकृतिविकृतिभावं महामतयो मन्यन्ते, लोकोऽपि नष्ट क्षीरमन्नीभूतमित्याह । "ननु दध्युत्पादे क्षीरस्य किं जातं, येन तन्नोपलभ्यते,,बालभाषितमेतत्,नाश एव नष्टत्वान्नोपलभ्यते, तन्नाशात्मकं हि दधीत्युक्तम्, "ननु भावनिवृत्त्यात्मक एवाभावः, नास्तीह घट इत्यादावपि तथा दर्शनात्,, सत्यं, नाशस्तु न तदात्मकोऽपितु वस्त्वन्तररूपः प्रत्यक्षसिद्ध इत्युक्तम्, भावनिवृत्तिमात्रं त्वभावोऽत्यन्तावस्तुत्वान्न प्रमाणविषयः, अपितु देशादिनियतपदार्थान्तरसंसर्गभ्रान्तिविवेकरूपो नास्तीह घट इत्यादौ व्यवहारमात्रफलो विकल्पकल्पित एव, यदुक्तं भवद्भिरेव,

"रूपाभावादभावस्य शब्दरूपाभिधायिनः ।
नाशङ्का एव सिद्धास्ते व्यवच्छेदस्य वाचकाः,, ॥

इति, न तस्य कार्यता, अपि त्वनर्थरूपस्यैवाभावस्य, इति न विनाशहेतोरसामर्थ्यं वैयर्थ्यं वा दोष इति ॥

ये तु विनाशः स्वभाव एव भावस्य, ततो विनाशस्वभावादेव भावो नश्यति, नतु हेत्वन्तरात्, तेनाप्यतत्स्वभावस्य नाशयितुमशक्यत्वात्, अत एव च कृतकत्वानित्यत्वयोस्तादात्म्यादव्यभिचारः सिध्यति, नान्यथा, यदुक्तम्,

"अहेतुत्वाद्विनाशस्य स्वभावादनुबन्धिता ।
सापेक्षाणां हि धर्माणां नावश्यंभावितेष्यते,, ॥

इत्याहुः, तान् प्रत्याह ।

(६६) नाप्यर्थादपृथग्यस्मादर्थवन्नोपलभ्यते ।

यो ह्यर्थस्वभावः स तस्मिन् निष्पन्ने निष्पन्न एव, शिंशपात्व इव वृक्षत्वम्, नचार्थनिष्पत्तौ तन्नाशो वस्त्ववस्तु वा तदात्मन्युपलभ्यते, अत्यन्तविरुद्धत्वेन परस्परपरिहारेणावस्थानतस्तादात्म्यासंभवात्, यदुक्तमाचार्येण परमोक्षनिरासकारिकासु,

"विरुद्धावेककालस्थौ धर्मावेकाश्रयं गतौ ।
इतरेतरनाशात् तौ कुरुतो लोपमात्मनः,, ॥

इति, तन्निष्पत्तावनिष्पत्तेर्नार्थस्वभावो नाशः, "ननु द्वितीयस्मिन् क्षणे स तस्य भवतीति कथमस्वभावः,, अत एव कार्यवत्, "ननु

"हेत्वन्तरानपेक्षित्वात् स स्वभावोऽनुवर्णितः,, ।

इति,, तर्हि सांशयिक एष स्वभाव इति न ततो वस्तुसिद्धिः, अन्यथापि संभवतोऽनवस्थाप्रसङ्गादिति, कृतकत्वेन नाशस्य तादात्म्यप्रतिबन्धाभावात्,अतादात्म्ये चावश्यंभावानभ्युपगमादननुमानम्, तर्हि नाशयोग्यता कृतकस्य वस्तुनः स्वभावो न नाशः, ततो नैष दोष इति ॥

यद्येवमस्मत्पक्ष एव, नच व्यभिचारोऽनुमानस्येत्याह ।

(६७) अभेदे कारकं यद्वदर्थसिद्धौ प्रवर्तते ।
तन्नाशाय तथैवेति नाशो जातस्य जायते ॥

यथैव सहकारि कारणं दण्डचक्रसूत्रादि घटादेरर्थस्य साधनाय प्रवर्तते, तथैव तस्य खर्पराद्यात्मकनाशकरणाय मुद्गरादिसहकारि कारणं प्रवर्तत इति, यत् कृतकं तत् सहकारिसंनिधावश्यं नश्यति, यस्तु न नश्यति नासौ कृतको यथात्मादिरित्यन्वयव्यतिरेकसद्भावात् कृतकत्वेनानित्यत्वं शब्दादावनुमातुं युक्तं न भवताम्, व्यतिरेकासंभवतः केवलान्वयिनोऽस्य गमकत्वासिद्धेः, "ननु नश्वरस्वभावस्य किं मुद्गराद्यपेक्षा,, यदुक्तं, तदयुक्तम्, मुद्गरादिसंनिधावेव तस्य रूपान्तरापत्तिस्वभावत्वात्, "नन्वनुपकारिणोऽपेक्षायोगात्, मुद्गराद्युपकारे तु स पूर्वः स्वभावत एव घटो नष्टोऽयमन्यस्तदुपकृतः समुत्पन्न इति क्षणिक एव,, न, तथास्वभावत्वादित्युक्तम्, स्वहेतोर्हि स तथाभूतस्वभावो भावो भवति, यः सर्वदानुपकारकमुद्गरादिसंनिधौ विकारमुपयाति, नान्यथा, इत्यत्र तथा दर्शनमेव प्रमाणम्, नच स्वभावा भावानां पर्यनुयोगमर्हन्ति, एतेन तथाभूतसहकारिसंनिधावर्थक्रियाकरणस्वभावत्वात् स्थिरस्य क्रमेणार्थक्रियाविरोधः परिहार्यः, "ननु सहकार्यसंनिधौ जनकाद्भिन्नस्तस्य स्वभावो जननाभावादेव,, न, तदापि सहकारिसंनिधौ कार्यकारणस्वभावत्वात्, तत्संनिधौ तु स एवेति न भेदः, नह्यस्मात् स्वभावात् कालत्रयेऽपि तस्यान्यथाभावः, सहकार्यसंनिधानात् तु न प्राक्कार्योद्भवः, इति तत्संनिध्यसंनिधी परं भिद्येते न वस्तुभेदः, "ननु संनिध्यसंनिधी तर्हि सहकारिणो भेदं विदधाते विदधतो विरुद्धस्वभावत्वात्,, न तत्रापि विरोधः, तस्यापि संनिधायकस्वसहकारिसंनिधौ तत्संनिधिस्वभावत्वात्, तस्यापि स्वसहकारिसंनिधौ, तस्यतस्यापीति नानियमः, स्वभावनियमितत्वाद्भावानां वैश्वरूप्यस्येति, सहकारिणामपि क्षित्यादीनां बीजादिकारणसंनिधौ तत्कार्यकारणात् स्वैरं तत्सदृश एव स्वभावः, येन तत्संनिधान एव तदङ्कुरादि कार्यं कुर्वन्ति नान्यदेति सर्वेषां तत्कारकत्वं स्वभावः परस्परसंनिधानापेक्षस्तु इति सर्वे कारकाः सहकारिपदवाच्या नैकैकाः, नच तेषां स्वभावभेदः, सर्वेषां च सामर्थ्येऽपि न कार्यानेकत्वप्रसङ्गः, परस्परसंनिधौ तदेककार्यनिर्वर्तकस्वभावत्वात्, एवं नानाभूतार्थक्रियाकरणे नानाभूततत्तत्सहकारिसंनिधौ नानाभूतानेककार्यकर्तृकस्वभावत्वात् क्रमेण नानाभूतार्थक्रियाकरणेऽपि न स्वभावभेदः, यथैकस्यैव चैत्रस्य लवनपचनभोजनाद्यनेककार्यकर्तुस्तत्तद्दात्रादिसहकारिसंनिधौ तत्तल्लवनपचनादिकार्यकर्तृस्वभावत्वात् क्रमेण लवनपचनादिभावेऽपि न स्वभावभेदः, तथाभूतस्वभावस्य तत्राक्रमेणैव भावात् प्रदीप इव, प्रदीपस्य हि वर्तिदाहतैलशोषणप्रकाशस्वज्ञानाद्यनेककार्यनिर्वर्तकः स्वभावोऽभ्युपगतो भवद्भिः, नतु कार्यभेदेन स्वभावभेद इति दर्शितं प्रागेव, तद्वदत्रापि सहकारिसंनिधौ तत्कार्यकर्तृस्वभावावियोगात् सर्वदैव, स्थिरस्वभावस्य सहकारिसंनिधानस्य तु क्रमिकत्वात् क्रमेणानेककार्यनिर्वर्तनेऽपि न भेदः, तत्स्वभावाभेदात्, स्वरूपस्य तु भेदसिद्धौ हि नञर्थानुप्रवेशपरमास्त्रा बौद्धाः, नच सर्वदैकस्वभावधर्माच्छादितानां संभवतीति न स्थिरस्य क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तिरिति ॥

"नन्वकारण एव कारकान्तरात्मादेरपि विनाशो भविष्यतीति व्यतिरेकासिद्धेर्युष्माकमप्यनैकान्तिकोऽयं हेतुः,,इत्याह।

(६८) व्यतिरेकेऽपि विषयो यस्तस्यासौ न जायते ।
विरोधित्वेन किं कुर्मो दृष्टे बाधा न विद्यते ॥

व्यतिरेकनिमित्तं यस्तस्य व्यतिरेकस्य विषय आत्मादिस्तस्य नाशो नोपपद्यते, विरोधित्वादिति, अयमर्थः, यस्यैव यथा नाशेन सह विरोधः प्रमाणेन सिद्धस्तस्यैवासौ विरुद्धत्वात् शीतस्येव कारणान्तरादभवदौष्ण्यमौष्ण्यस्य शीतं निवर्तकमनुमीयते, यदुक्तं भवद्भिरपि, "अविकलकारणस्य भवतोऽन्यभावे भावाद्विरोधगतिरिति,, नाविरुद्धस्य करणाच्च घटादेरुत्पत्तिमतश्च हेतुमता नाशेन सह विरोधः प्रत्यक्षेण सिद्ध इति, तथाभूतस्यैवासावनुमानेन संभावयितुं युक्तो नानुत्पत्तिमतोऽहेतुक आत्मादेः, नहि प्रत्यक्षदृष्टस्य क्वचिदन्यथात्वं युक्तम्, धूमदानामपि देशान्तरेऽनग्नितोऽपि भावसंभावनया सर्वानुमानाभावप्रसङ्गात्, "अथ नातद्भाविनः सकृदपि ततो भावादिति वस्तुव्यवस्थित इत्युच्यते,, तर्ह्यकृतकस्यात्मादेरहेतुकनाशकल्पना कल्पनामात्रमेव, अतो व्यतिरेकोऽस्य सिद्ध इति नानैकान्तिकता ॥

एतदेव दर्शयति ।

(६९) विनाशहेतुः सद्भावव्याप्ते सर्वत्र वस्तुनि ।
कृतकत्वमनित्यत्वं नातो व्यभिचरिष्यति ॥

सतो भाव उत्पादस्तेन व्याप्ते सर्वस्मिन्नुत्पत्तिमति वस्तुनि विनाशहेतुः शीतस्येवौष्ण्यं यतो वास्तवेन प्रतिबन्धेन सर्वत्र सर्वदा व्यापकत्वेन सिध्यति, ततः कृतकत्वाख्यो हेतुः शब्दादौ धर्मिण्यनित्यत्वं साधयत्येव, नत्वनैकान्तिकः, यथाहुः,

"अवश्यंभावनियमः कः परस्यान्यथा परैः ।
अर्थान्तरनिमित्ते वा धर्मे वाससि रागवत्,, ॥

इति, यतो न वासस्यपि रागोऽनुमीयते, अपितु रागयोग्यता, इत्यव्यभिचार एव, यद्येवं कृतकः कश्चिन्न विनश्येदपि नात एव महाप्रलयसिद्धेः, अपिच, नाशयोग्यतास्य साध्या न नाश इत्युक्तम्, तस्याश्चाव्यभिचार एव, यथा हि बीजस्या-

ङ्कुरजननयोग्यतानुमानेऽपि कदाचित् काकादिभक्षणादङ्कुरजननाभावेऽप्यनुमानमदुष्टमेव, घटादिवदत्यन्तायोग्यत्वनिराकरणफलत्वात् तस्य, तथेहात्मादिवदत्यन्तनाशायोग्यत्वनिराकरणाय घटादेरर्थस्य नाशयोग्यतानुमीयते, अत एव चार्थरक्षादौ नीतिशास्त्राणां प्रवृत्तिः, नयविदश्च निपुणा दृश्यन्ते, नान्यथेत्यदोषः, तदेवं ग्राहकात्मनोऽपि क्षणिकत्वामिद्धेरैहिकफलविषयतयापि "प्रवृत्तिफलभोक्तृत्वं,, प्रतिज्ञासूत्रपदोपात्तं व्याख्यातम् ॥

अधुना "यः पुमान्,,इति पदद्वयं व्याख्यातुं यैरिन्द्रियसंघ एव चेतनो नान्यः कश्चित् पुरुषो नाम तत्रैवाहंप्रत्ययस्य दृष्टेरित्युच्यते, तान् प्रत्याह ।

(१०) कान्तायामिव बोद्धव्यो बोधोऽहमिति वै तनौ ।
जानात्येव पुमान् यस्मादियं मे बोधसाधिका ॥

चैतन्यं तावत् स्वसाक्षिकमनुभवसिद्धमित्युक्तम्, यदि च सैवेन्द्रियसंहतिरूपा तनुः इत्युच्यते, भवतु नामान्तरमेव तत्, ततो नार्थान्तरम्, नच नाम्नि विवादो विदुषाम्, "अथ रूपादिसंवित्त्यन्यथानुपपत्त्या चेतनेन स्वात्मनः करणतया यश्चक्षुरादिसमूहोऽनुमीयते सेन्द्रियसंहतिरित्युच्यते, तदा करणत्वेनैव तस्याः सिद्धेः,,न चेतनात्मककर्तृरूपत्वेन प्राक्प्रदर्शिताहंप्रत्ययविषयता युक्ता, अत्यन्तभेदात्, "ननु हन्त्यात्मानमात्मनेतिवदभेदेऽपि कल्पितोऽत्र कर्तृकरणादिभेदो भविष्यति,, सत्यम्,यद्यभेदश्चैतन्येनास्याः सिद्धो भवेत्, प्रोक्तानुमानेन तु भेद एव सिद्ध इत्युक्तमेतत्, "ननु

"अहं चक्षुरहं श्रोत्रं सर्वेंद्रियतनुस्त्वहम्,, ।
इत्यादिश्रुतिसिद्धोऽत्राभेदो भविष्यतीति,
"नाहं जाया ह्यहं पुत्रोऽहं गौरश्वधनान्यहम्,,

इतिवत् प्रत्यक्षादिविरोधात्, गौणत्वेनाप्यागमस्योपपत्तेरिन्द्रियचैतनिकपक्षोऽत्यन्तायुक्त एव ॥

भूतचैतनिकपक्षेऽप्याह ।

(११) भिन्नलक्ष्मा तु चिद्भावः क्ष्मादेर्योऽप्यचितेर्नहि ।
यद्दृष्टौ विमतिः क्ष्मादेः पूर्वव्यक्तेः स्वसंस्थितः ॥

चिदात्मको भावचिद्रूपोऽर्थो नाचेतनस्य पृथिव्यादेः स्वभावो युक्तः, ततो भिन्नलक्षणो यतः, एतदुक्तं भवति, चेतनाचेतनयोः परस्परपरिहारस्थितलक्षणत्वाद् घटतदभावयोरिव नैकत्वम्, किंच यद्यस्मात् पृथिव्यादेर्या संबन्धिनी दृष्टिः पृथिव्यादिविषयं प्रत्यक्षं ज्ञानं, तस्याः सकाशाच्चिद्भावस्य विमतिः सत्तासंशयो दृश्यते, ततस्तयोर्नैकत्वम्, यो हि यदात्मकः स तन्निश्चये निश्चित एव, यथा घटनिश्चये मृदादिः, यस्तु यन्निश्चये विमत्यधिकरणभावापन्नो नासौ तदात्मकः, यथा घटनिश्चये पिशाचः, शरीराकारपृथिव्यादिनिश्चये च संदिग्धश्चिद्रूपोऽर्थ इति न तदात्मकः, नचायमसिद्धो हेतुः, कायवाग्व्यवहारात्मनानुमानेन परचित्स्वभावः सिद्धो यतः, स्वचित्स्वभावोऽप्युक्तनयेन ग्राहकतया पूर्वा प्रत्यग्रूपा यासौ तस्य व्यक्तिः प्रकाशस्ततः स्वत आत्मनैव ग्राह्यस्वभावात् पुरोरूपात् स्वशरीरात्मनः पृथिव्यादेर्भेदेन संस्थितो धारणादिवृत्त्युपलक्षितात् स्वशरीराकारात् पृथिव्यादिभूतपञ्चकाद् ग्राह्यात्मनोऽत्यन्तविलक्षणस्तद्ग्राहकरूपोऽयमर्थः स्वतः सिद्धो यतः, न भूतस्वभाव इत्यर्थः, अत एव लौकायतप्रतिक्षेपेणास्य गतार्थता, तत्र हि भूतकार्यत्वेनानित्यत्वं प्रतिक्षिप्तम्, अत्र भूतवन्नित्यत्वेऽपि तदात्मत्वमिति भेदः ॥

अन्तःकरणचैतनिकाः सांकर्षणपाञ्चरात्रास्त्वाहुः, "कल्पयित्वापि पुरुषं भवद्भिर्धर्मज्ञानादिधर्माष्टकयुक्तमन्तःकरणमभ्युपगतमेव, तदन्तःकरणमेवोभयवादिसिद्धं ज्ञानरूपमात्मत्वेनेष्यताम्, तदव्यतिरिक्तस्याज्ञानरूपस्यात्मत्वात् सिद्धेः, ज्ञानात्मत्वे च ज्ञानद्वयानुभवप्रसङ्गतः प्रत्यक्षविरोध इति,,तान् प्रत्याह ।

(१२) अचैतन्यान्न विज्ञानं करणेऽन्तर्व्यवस्थिते ।

भवेदेतद्, यद्यन्तःकरणमपि चेतनमस्माभिरभ्युपगतं स्यात्, तत् तु कार्यत्वाद् घटादिवदचेतनमेव, नच कार्यत्वमसिद्धम्, भवद्भिरपि महाविभूतिकार्यत्वेन तस्याभ्युपगमात्, अथ तस्मादन्यदेव तन्नित्यमित्युच्यते, तर्ह्यात्मैवासौ सिद्ध इति नान्तःकरणचैतन्यवादः ॥

"कथं तर्ह्यन्तःकरणस्य ज्ञानं धर्मो भवद्भिरुक्तः,, इत्याह ।

(१३) चैतन्यव्यक्तिभूमित्वात् तद्वृत्तिर्ज्ञानमुच्यते ।

ज्ञायतेऽनया स्मृतिप्रभासादावसंनिहितोऽर्थः पुरुषेणेति कृत्वान्तःकरणवृत्तिरुपचाराज्ज्ञानमुच्यते, नतु मुख्यतः, बोधात्मनोऽपरिणामित्वेन संस्कारासंभवतस्तदानीमर्थासंभवाच्चाननुभूयमानाकारानुपपत्तेरन्तःकरणमेव संस्काराकाररूपमभ्युपगन्तव्यं यतः, एवं धर्मादिरूपत्वमप्यन्तःकरणस्य तत्संस्काररूपतया नतु ज्योतिष्टोमादिक्रियात्मकधर्मादिरूपत्वेनेति विपञ्चितमस्माभिः स्वायंभुवोद्द्योते, तत एवावधार्यमिति, अन्तःकरणस्य धर्मादिमतो ज्ञानानभ्युपगमात् पुरुष एव ज्ञानात्मकः सिद्ध इति । "यः पुमान,, इति पदद्वयं व्याख्यातम् ॥

प्रागभेदसिद्धौ पुंसः प्रमाणं नास्तीत्युक्तम्, अधुना तु भेदसिद्धौ प्रमाणमाह ।

(१४) एकस्मिन्नेव काले यत् प्रतिलिङ्गं सुखादयः ।
विभिन्ना उपलभ्यन्ते तेनाणुर्भिन्न इष्यते ॥

स्वसंवेदनेन हि प्रतिशरीरं स्वात्मा सुखाद्यनुभवितृत्वेन, परशरीरचेष्टादिभिश्च दुःखादियुक्तात्मान्तरानुमातृत्वेन युगपदेव संवेद्यते, नचानुमेयोऽनुमाता, अनुमाता वानुमेय एव युगपदेव संभवति, अत्यन्तभेदादित्युक्तम्, अतस्तयोर्भेद एव युक्तः, नच परमात्मानुमातृत्वं तदानीमसिद्धमसत्यं वा युज्यते वक्तुम्, स्वसंवेदनसिद्धत्वात्, सुखादिप्रकाशकत्ववत्, नापि तदालम्बनोऽसावसत्यः, बाधकाभावात्, सुखादिवत्, इत्यात्मभेदः सत्य एव ।

अत्र वेदान्तविदः परस्याभिप्रायमाह ।

(७५) नानुभेदात् सुखादीनां किंतु साधनभेदतः ।
भेदश्चेत्,

प्रतिशरीरमेकत्वेऽप्यात्मनो यथा ग्रीष्मातपदह्यमानवपुषोऽकस्मात् संप्राप्तशीततरजलनिमग्नाधःकायस्य युगपदेवातपजलादिसाधनभेदादूर्ध्वाधोभाविनोः सुखदुःखयोः संवेदनम्, एवं शरीरभेदेऽपि तस्य भविष्यतीति ॥

अत्रोत्तरमाह ।

(७६) सर्वदुःखादावेका संविद्भवेत् ततः ।

यथा प्रतिशरीरमेकत्वादात्मनोऽनेकसुखदुःखादिविषयमेकमेव संवेदनं संवेद्यते, तथा यदि सर्वशरीरेष्वेक एवात्मा स्यात्, ततः सर्वदुःखसुखादिविषयमेकमेव संवेदनं स्यात्, तद्रूपत्वादेवात्मनः, इति सर्वस्य सर्वज्ञत्वप्रसङ्गः, परस्परं भेदाभावात्, सत्यम्, "एकैव संविद् भ्रान्तिनिबन्धनस्तु भेद इति चेत्,, न, असिद्धत्वात्, "ननु स्वप्नादावस्याः सिद्ध एव तन्निबन्धनो भेदः, यदुक्तम्,

"न चेत् स्यात् स्वप्नपुरुषो भ्रमस्यास्य निदर्शनम् ।
सत्यं, तदन्यरूपेण प्रतिभातीति को वदेत्,, ॥

इति,, न, तत्रापि संविदः स्वात्मनि भ्रमाभावाज्जायतीव प्रतिशरीरं सुखादि[illegible]विद्धो भेदः सत्य एव, भ्रान्तं हि विज्ञानं सर्वमालम्बने भ्रान्तं न स्वात्मनि, आलम्बनं ह्यन्यथा बहिःस्थितमन्यथा प्रतीयमानं भ्रमविषयतामापद्यते, यत् पुनर्बाधैकस्वभावं वस्तु, तद्यथैव चकास्ति, तथैव सत्, अतत्स्वभावस्यासंवेद्यत्वात्, स्वसंवेद्यत्वे च तत्स्वभावत्वम्, इति स्वशरीरवर्तिन एव सुखादिवेदनस्याभेदः, नतु परशरीरवर्तिनोऽनुमानसिद्धस्य, अनुमातृतयैव ततो भेदेन संवेदनात्, इत्यात्मभेदः सत्य एवेत्युक्तम्, "नन्वितरेतराभावसव्यपेक्षत्वाद् भेदस्याभावाविषयत्वाच्च प्रत्यक्षस्य न भेदः स्वसंवित्प्रत्यक्षगम्यः, तदुक्तम्,

"आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः,,

इति,, नेतरेतराभावसव्यपेक्षो भेदः, किं तर्हि सिद्धे भेदे तदितरेतराभावसिद्धिः, सर्वैक्ये हि न कस्यचित् कुतश्चिदभावः, इति घटार्थी पटदर्शनात् किमिति निवर्तते, प्रमाणाप्रमाणविभागश्च न स्यात्, सर्वस्य सत्तामात्राव्यभिचारात्, इति स्वसंवेदनेन परात्मानुमातृतया स्वात्मभेदेन प्रकाशमानः सत्य एव, नहि स्वसंवित्सिद्धमवस्तु, अपरवेद्यत्वात्, ब्रह्मवत्, इति भिन्ना एवात्मान इति सिद्धम् ॥

परिणतवेदान्तविदः संहितापाञ्चरात्राश्चाहुः "सत्यं भिन्ना एव जीवात्मानः, ते तु परमकारणादनश्वराद् ब्रह्मपदवाच्याद् यदि वा नारायणाख्यादव्यापका एव, घटादिवत् स्वकारणलयस्वभावाश्चोत्पद्यन्ते, इति,, तानप्यनुमानेन प्रतिक्षिपन्नाह ।

(७७) चैतन्यादेव पुरुषो न विकारी नचाविभुः ।
नियमेनाविभुर्यस्माद्विकारी चाप्यचेतनः ॥

यश्चेतनो नासावव्यापको लयस्वभावो वा, तद् यथा परमकारणम्, यस्त्वव्यापको लयस्वभावश्च, नासौ चेतनः, यथा घटादिः, चेतनश्च जीवाख्यप्राणसंयुक्तोऽयमात्मा स्वसंवेदनसिद्धो भवद्भिरभ्युपगतः, इति नाव्यापको लयस्वभावश्च युक्तः, अपितु नित्यव्यापकस्वभाव एव, दिक्कालयोर्ग्रहीतृत्वेन तदवच्छिन्नतया सर्वदैवावभासनाच्च, नहि ग्राह्येण घटादिना ग्राहकोऽवच्छेत्तुं शक्य इत्युक्तम्, नच दिक्कालयोरपि ग्राह्यतां मुक्त्वान्यो ग्राहकैकस्वभावेनात्मना संबन्धः संभवति, तदिदमुक्तम्,

"अनवच्छिन्नमद्भावं वस्तु यद्देशकालतः ।
तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुनित्यते,, ॥

इति, "नन्वेवं व्यापकतयात्मनो दूरेऽयमर्थ इति प्रत्ययो न स्यात्, नच शरीरापेक्षयेति वाच्यम्, तस्याप्रमातृत्वात्, अत्यल्पमिदमुच्यते, सर्वसर्वज्ञताप्रसङ्ग एव वाच्यः, न, सूर्यातपादेर्मेघादिवद् बोधस्यावरणसंभवात्, यद्येवं कार्यकारणादिभिः स्वस्थान एव तद्व्युदासात् तस्याभिव्यक्तिः, इत्यभिव्यक्त्यपेक्षया दूरत्वादूरत्वप्रतिभासोऽप्युपपद्यत एवेत्यदोषः ॥

यदप्यव्यापको लयस्वभावश्चायमात्मा सर्वार्थदर्शनासत्त्वादसर्वज्ञत्वाद् घटवदित्यत्रानुमानं भवद्भिरुपन्यस्तं तदप्ययुक्तमित्याह ।

(७८) व्यतिरेकस्य सद्धेतावन्वयव्यतिरेकिणि ।
सर्वार्थदर्शनासत्त्वात् संदिग्धमुभयं तव ॥

अन्वयव्यतिरेकवति सम्यग्घेतौ सर्वार्थदर्शनासत्त्वादित्यस्मिन्नभिमते भवतां परं प्रति वैधर्म्यदृष्टान्तपरमकारणस्यासि-

द्वेरीश्वरमुक्तानां नित्यव्यापकस्वभावत्वेन स्वयमनभ्युपगमात् संदिग्धो व्यतिरेकः, तस्मिंश्च संदिग्धे संबन्धिरूपत्वात् पूर्वापरवदन्वयस्यापि संदेहाद् गोमानश्ववत्त्वादित्यादाविवानैकान्तिकतैत्यहेतुता, योऽपि कैश्चिज्जीवात्मनामव्यापकत्वे लयस्वभावत्वे च सत्यादिनान्वितत्वाद् घटादिवदिति हेतुरुक्तः, सोऽप्यसिद्ध एव, आत्मनामन्वयासिद्धेः, अन्वयो हि ग्राह्यस्य कर्मतामापन्नस्य ग्रहीतुं शक्यः, नचात्मा स्वात्मन एव ग्राही[1] भवति, स्वात्मनि क्रियाविरोधात्, स हि ग्राहकत्वेनैव प्रत्यग्रूपतया सर्वदा भासते, इत्युक्तम्, "ननु तेनैव रूपेणास्यान्वयो भविष्यतीति,, न, तस्यानेकग्राहकप्रकाशविषयत्वात्, "नचैकैकात्मसंवेदने ग्राहकान्तरसंवेदनं संभवति,, तस्य ततोऽन्यत्वेन घटादिवत् परत्वात्, "न ह्यात्मनां परस्परं स्वसंवेदनमात्राः संकीर्यन्ते,, सर्वस्य सर्वज्ञत्वप्रसङ्गादित्युक्तम्, प्रत्येकं च स्वात्मवेदने कस्य कुत्रान्वयः, "यद्येवं सर्वज्ञः सर्वात्मनां ग्राह्यत्वादन्वयं ग्रहीष्यतीति,, तदप्ययुक्तम्, सर्वज्ञात्मनैव व्यभिचारात् सोऽपि स्वसंवेदनेन परात्मभ्यो भेदेनैव तद्गृहीततया भासते यतः, नच ग्रहीतर्यन्वयः संभवतीत्युक्तम्, नच तस्य सर्वज्ञत्वादेव विपरीतग्रहणं संभवति, तद्यथा, तेनात्मान्तरेभ्यः स्वात्मात्यन्तानन्वितरूपोऽसंभवन् भ्रमेण प्रत्यक्षेण गृहीतः, तथैव परमात्मानः परस्परभिन्नाः समन्वयविषयभावमतिक्रम्य वर्तमानास्तेन साक्षात्क्रियन्ते, इत्यदोषः, अत एवानुमेयोऽप्यात्मनामन्वयो न संभवति, तदानीमनुमेयादनुमातुरनुमात्ररूपतया वैसदृश्येनैव भासनात्, स्वात्मवत् परात्मनामत्यन्तविसदृशतयैवानुमानात्, तर्ह्यसन्नात्मा सत्तयानन्वितत्वादश्वविषाणवन्नास्य सत्त्वान्वयात् सत्त्वम्, अपितु स्वरूपसत्त्वात् सत्तावत् परमकारणवद्वा, तस्यापि हि सत्त्वान्वयात् कार्यत्वेन परमकारणत्वाभावः, "कथं तर्ह्यन्वयाभावे सर्वात्मस्वात्मपदस्य प्रवृत्तिः सादृश्याद्ब्रह्मणीव परमात्मशब्दस्य, "ननु तदप्यग्राह्यस्वभावे स्वात्मनि नैव ग्रहीतुं शक्यम्,, सत्यम्, वैसदृश्यपरिहारेण तु कथंचिददूरविप्रकर्षेण व्यवहारार्थं तत् तत्रोच्यते, न परमार्थः, यत् श्रूयते "नेति नेत्यात्मगतिः,, इति दर्शितमस्माभिर्विस्तरेण रौरववृत्तिविवेकपरमोक्षनिरासकारिकासु, इति, तत एवावधार्यम्, तदेवमन्वयाख्यस्यास्य हेतोरसिद्धेर्नोऽव्यापकत्वं लयस्वभावत्वं चात्मनामनुमातुं युक्तम्, इत्युक्तयुक्त्या नित्यव्यापकस्वभावा एव तेऽभ्युपगन्तव्या इति, "यद्येवं सर्वशरीरेषु सर्वात्मनां संनिधानाद् भोगसंकरः,, न, कर्मभिर्नियमितत्वात्, "ननु तेषामपि स एव दोषः,, न, कर्तृभेदेन भेदात्, कर्तृत्वं हि चिकीर्षायोगात् प्रत्यात्मं भिद्यते, नान्यचिकीर्षया अन्यचिकीर्षा वोपपद्यते यतः, चिकीर्षयैव तेषां कर्तृत्वमिति वक्ष्यामः ॥

[1] ग्राह्यो, इति पाठान्तरेण भाव्यम् ।

॥ श्रीः ॥

॥ अथ प्रसन्नराघवनाटकप्रस्तावना ॥

इह खलु भारते वर्षे संस्कृतभाषोपनिबद्धानां प्राचीनप्रौढकविप्रणीतनाटकानामद्यत्वे पठनपाठनयोर्विरलप्रचारतया तत्पुस्तकानां दुःसम्पादत्वेऽप्यहं सततं प्राचीनोत्तमग्रन्थगवेषणतत्परोऽत्रैव काश्यां विद्वन्मनोनन्दनस्यास्य प्रसन्नराघवनामकनाटकस्यैकं पुस्तकमुपालप्सि । तत्पुस्तकस्य चात्यन्ताशुद्धतयाऽस्पष्टाक्षरतया च शोधनेऽनुभूतमहापरिश्रमोऽनधिगततदीयानेकश्लोकार्थः सुचिरं पुस्तकान्तरान्वेषणपरो महता कालेनात्रैव प्राप्तपुस्तकान्तरद्वयः समग्रमिदं पुस्तकं सम्यक् परिशोध्येमं प्रथमाङ्कमुत्तमकाव्यरसास्वादोद्यतानां विदुषां मनोविनोदाय काशीविद्यासुधानिधिनामकपत्रद्वाराऽधुना प्रकाशयन् क्रमेणास्य सप्ताप्यङ्कान् प्रतिपत्रमेकैकाङ्कमुद्रणेन सप्तभिर्मासैः प्रकाशयिष्यामि । अस्य नाटकस्य रचयिता महाकविर्जयदेवोऽस्ति । यतोऽस्यैव प्रथमाङ्के नटं प्रति सूत्रधारोक्तिः ।

विलासो यद्वाचामसमरसनिस्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति ।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः ॥

स च कविः कालिदासादिमहाकविभ्योऽर्वाचीन एवेति तत्रस्थादेवाग्रिमात् सूत्रधारवचनरूपश्लोकात् स्फुटमवसीयते। तथाहि ।

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणो
केषां नैषा भवति कविताकामिनी कौतुकाय ॥

इत्यमस्य सप्ताङ्कघटितस्योत्तमनाटकस्य काशीविद्यासुधानिधिचन्द्रिकाचकोरायमाणानां सहृदयानामानन्ददायकतयेमं मदीयपरिश्रमं सकललोकानुकम्पी भगवानीश्वरः सफलीकरोत्विति हमानोऽस्म्यहं

गोविन्ददेवशास्त्री ।

॥ श्रीगणेशायनमः ॥

॥ अथ प्रसन्नराघवं नाम नाटकम् ॥

॥ प्रथमाङ्कः ॥

चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः
श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः ।
भालेष्वब्जभुवो लिखन्ति युगपद् ये पुण्यवर्णावलीः
कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥

अपिच ।

आकल्पं मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरी-
धीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः ।
लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथा-
दायी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति ॥

अन्यच्च ।

नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णन-
प्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः ।
सक्रोधं मधुकैटभौ सकरुणस्नेहं सुतामम्बुधेः
सोत्प्रासप्रणयं सरोजवसतिं पश्यन् हरिः पातु वः ॥

नान्द्यन्ते सूत्रधारः परितो विलोक्य सहर्षम् । अये कथममी निजवदनशारदारविन्दनर्तितगिरिनन्दिनीनयनखञ्जनस्य निखिलमुनिजनहृदयनन्दनस्य विकटजटापटलोत्संगताण्डवितगङ्गातरङ्गनिकरस्य मन्दाकिनीचन्दनललाटिकायमानमुकुटार्पणीतनूतनसुधाकरस्य त्रिभुवननलिननिर्माणनिर्मलबिमाङ्कुरस्य भगवतः शङ्करस्य यात्रायां परिमीलिता एव पार्षदाः । तदेतानुपगम्य निजकलाविलोकनप्रमादाय तावदभ्यर्थयामि । विमृश्य । अथवा किमभ्यर्थनया । यतः ।

आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् ।
गर्भस्थं केतकीपुष्पमामोदेनैव षट्पदाः ॥

विलोक्य सहर्षम् । नूनमेतदभिमन्थानादेव सामाजिकसमाजादितोऽभिवर्तते सखा मे रङ्गतरङ्गः ।

प्रविश्य नटः । भाव । इदं मन्मुखेनैव भवन्तमुदीरयन्ति सामाजिकाः । यत् किल अये भरताधिराज इत्यर्धोक्ते ।

सूत्रधारः कर्णौ पिधाय । अहह असमञ्जसमसमञ्जसं भवतु कार्यं तावदाकर्णयामि ।

नटः । भाव । अधुना मयैव भवत्सकाशादाकर्णनीयं किमिदमसमञ्जसमिति ।

सूत्रधारः । नन्विदमेव यत् किल नन्दति ज्यायसि कनीयसि राजपदमुपन्यस्यते । अहं हि भरतमात्रक एव । मम पुनरयजन्मा गुणारामनामा राजपदभाजनम् ।

नटः । कीदृग्गुणस्ते गुणारामः ।

सूत्रधारः । ननु नाम्नैव दत्तोत्तरम् ।

नटः । विहस्य कथं नाम्नैव गुणावगमः ।

सूत्रधारः । अथ किम् ।

गुणग्रामाभिसंवादि नामापि हि महात्मनाम् ।
यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥

अपिच । किमिदं गुणारामे कथं नाम्नैव गुणावगम इत्युच्यते । यः खलु रतिजनकस्य राज्ञः सदसि हरचापारोपणं नाम रूपकमभिनीय परितुष्टेन राज्ञा समर्पितां रङ्गविद्याधराख्यातिं प्रियामिव समासादितवान् ।

नटः । स पुनः संप्रति कं देशमभिनन्दयति ।

सूत्रधारः । केनापि दाक्षिणात्येन नटापसदेन ममैवेदं गुणारामेति नामेति वदता रङ्गविद्याधराख्यातिरपहृता तदाकर्ण्य गुणारामस्तामेव दिशं प्रचलितः । अधुना च श्रुतमस्माभिर्यत्सुकण्ठनाम्ना गायकेन सह मैत्रीं विधाय दाक्षिणात्यानां भूभुजां सदसि तेन सह रङ्गसङ्गरमुपक्रान्तवानिति ।

नटः । अहो महानुपक्रमः ।

सूत्रधारः । उचितमिदम् । यतः

कीर्तिं मृणालकमनीयभुजामनिद्र-
चन्द्राननां स्मितसरोरुहचारुनेत्राम् ।
ज्योत्स्नास्मितामपहृतां दयितामिव स्वां
लब्धुं न कः परमुपक्रममातनोति ॥

तत् कथय कार्यम् ।

मारिषः । इदमेव यत् किल त्वयाभिनीयमानमवलोकयाम इति ।

प्रत्यङ्गमङ्कुरितसर्वरसावतार-
नव्योल्लसत्कुसुमराजिविराजिबन्धम् ।
धर्मेतरांशुरिववक्रतयातिरम्यं
नाट्यप्रबन्धमतिमञ्जुलसंविधानम् ॥

सूत्रधारः । तत् कथं पुनरवधारणीयं किंनामधेयं नाटकमिति । विमृश्य सहर्षम् । अये कथमहं निजशिरःशेखरशयाल्वपि नीलोत्पलं रत्नाकरचपलवीचिमालापरिसरे विचारयामि । नन्विहैव श्लोकेऽष्टपङ्क्तिमाल्लिखिते स्फुटमस्ति प्रसन्नराघवं नामेति ।

मारिषः । तमेव श्लोकं पठित्वा सहर्षम् । अहो देव्याः कविकुलकुमुदविकाशचन्द्रिकायाः प्रसादमहिमा सरस्वत्याः । यत्प्रसादादेवंविधाः कवीनां विचित्रमधुराः सूक्तयः समुल्लसन्ति ।

सूत्रधारः । एवमेतत् । नन्वनेनैव कविनोक्तम् ।

वाणि त्वत्पदपद्मरेणुकणिका या स्वान्तभूमिं सतां
संप्राप्ता कवितालता परिणता सैवेयमुज्जृम्भते ।
त्वत्कर्णेऽपि चिराय यत्किसलयं सूक्तापदेशं शिरः-
कम्पभ्रंशितपारिजातकलिकागुच्छे विधत्ते पदम् ॥

पुनर्विभाव्य मम पुनः कविकमलसद्मनि मुनौ वल्मीकजन्मनि मनः कौतुकितं यस्यैकमपि वदनारविन्दमासाद्य चतुर्मुखकमलवनविहारविनोदमनुभवति भारती नाम राजहंसी ।

नटः । एवमेतत् । त्रिभुवनाभोगेऽपि हि ।

भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वन-
द्वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा मुनिः ।
पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किम-
प्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥

विमृश्य । मम तु रामचन्द्र एव निर्भरमानन्दितोऽयं चित्तचकोरः । यत्कीर्तिचन्द्रिकाचुम्बितोऽयं वाल्मीकेरपि सारस्वतसागरः समुल्ललास ।

सूत्रधारः । इत्थमिदम् ।

चन्द्रे च रामचन्द्रे च कान्तानां च दृगञ्चले ।
नीलोत्पलसुहृत्कान्तौ कस्य नामोदते मनः ॥

अपिच ।

झगिति जगतीमागच्छन्त्याः पितामहविष्टपान्-
महति पथि यो देव्या वाचः श्रमः समजायत ।
अपि कथमसौ मुञ्चेदेनं न चेदवगाहते
रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकाम् ॥

नटः । कथं पुनरमी कवयः सर्वे रामचन्द्रमेव वर्णयन्ति ।

सूत्रधारः । नायं कवीनां दोषः । यतः

स्वसूक्तीनां पात्रं रघुतिलकमेकं कलयतां
कवीनां को दोषः स तु गुणगणानामवगुणः ।
यदेतैर्निःशेषैरपरगुणलुब्धैरिव जग-
त्यसावेकश्चक्रे सततसुखसंवासवसतिः ॥

अपिच भोः ।

बीजं यस्य चिरार्जितं सुचरितं प्रज्ञा नवीनोऽङ्कुरः
काण्डः पण्डितमण्डलीपरिचयः काव्यं नवः पल्लवः ।
कीर्तिः पुष्पपरम्परा परिणतः सोऽयं कविस्त्वद्रुमः
किं वन्ध्यः क्रियते विना रघुकुलोत्तंसप्रशंसाफलम् ॥

नटः । कः पुनरस्य कविः ।

सूत्रधारः । सप्रणयकोपम् ।

विलासो यद्वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति ।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः ॥

अपिच ।

लक्ष्मणस्येव यस्यास्य सुमित्रागर्भजन्मनः ।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः ॥

नटः । कथमविदितचन्द्रमसश्चकोरकिशोरकस्य चरितमनुसृतोऽस्मि । तेन हि मम हस्ते निजनाटकमर्पयित्वेदमुक्तोऽस्मि रक्षणीयमिदं सूक्तिरत्नं चौरेभ्य इति । स च मया सविनयमिदमुक्तः ।

कर्णे निधाय च पिधाय च कण्ठपीठे
धृत्वा च मूर्द्धनि नते हृदये च कृत्वा ।
चौरापहारचकितेन चिरं मयैष
त्वत्सूक्तिमौक्तिकगणः परिरक्षणीयः ॥

सूत्रधारः । केयमलीकशङ्का तस्य कवेः ।

सुललितवदनामुदारवृत्तां
कृतिमथवा युवतिं परस्य हृत्वा ।
तटमपि परमर्णवस्य गत्वा वद
कतरः सुखभाजनं जनः स्यात् ॥

नटः । एवमेतत् । नन्वयं प्रमाणप्रवीणोऽपि श्रूयते । तदिह चन्द्रिकाचण्डातपयोरिव कवितातार्किकत्वयोरेकाधिकरणतामालोक्य विस्मितोऽस्मि ।

सूत्रधारः । क इह विस्मयः ।

येषां कोमलकाव्यकौशलकलालीलावती भारती
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ।
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिता-
स्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥

नटः । अपि नाम स्वयमेव कविताकोविदाः पारिषदा अस्य सूक्तिभिर्विनोदिष्यन्ते ।

सूत्रधारः । नन्वनेनैवोक्तम् ।

अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः कियन्तः ।
निजघनमकरन्दस्यन्दपूर्णालवालः
कलशसलिलसेकं नेहते किं रसालः ॥

नटः । अहो अस्य कवेः सूक्तीनां सरलता कोमलता च ।

सूत्रधारः । क्वचिद्वक्रता कठिनता च

नटः । कथमेते अपि रमणीये

सूत्रधारः । कथ किम् ।

निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः
स्तूयन्ते नच नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः ।
तद्वैदग्ध्यवतां सतामपि मनः किं नेहते वक्रतां

धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥

अपिच

अमृतजलधेः पायंपायं पयांसि पयोधराः
किरति करकास्ताराकारा यदि स्फटिकावनौ ।
तदिह तुलनामानीयन्ते क्षणं कठिनाः पुनः
सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम् ॥

नटः । नूनमस्य कवेः किमपि कौतुकप्रमोदमेदुरमन्तःकरणं यदेवंविधाः सरसशीतलाः सूक्तयः समुल्लसन्ति ।

सूत्रधारः । उचितमिदम् ।

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥

अपिच

न ब्रह्मविद्या नच राजलक्ष्मीस्तथा यथेयं कविता कवीनाम्।
लोकोत्तरे पुंसि निवेश्यमाना पुत्रीव हर्षं हृदये करोति॥

नेपथ्ये । साधु भोः कुशीलवकुलोत्तंस साधु

सूत्रधारः । कथमयं भगवतो याज्ञवल्क्यस्य प्रियोऽन्तेवासी दाल्भ्यायन इत एवाभिवर्तते । तदास्यानवलोकनीयचतुर्थवर्णस्य पुरतःस्थातुमनुचितमस्माकम् । तदेहि परतो गच्छाव इति निष्क्रान्तौ ।

॥ प्रस्तावना ॥

प्रविश्य दाल्भ्यायनः । तमेव श्लोकं पठित्वा साकूतम् । साधूक्तमनेन । तथाहि । भूपतिरयं जनकोऽपि सकललोकलोचनारविन्दमार्त्तण्डे क्वचिदपि पुरुषप्रकाण्डे निजां कन्यां समर्पयितुकामोऽस्मद्गुरूपदिष्टायां ब्रह्मविद्यायां कुलक्रमागतायां राज्यलक्ष्म्यां च शिथिलादरः संवृत्तः । पुनः कर्णं दत्वा कथमयमाकाशे वीणाध्वनिः श्रूयते । तन्नूनमस्मद्गुरुमभ्यागच्छता समीरसंघट्टनकलक्वणद्वल्लकीगुणेन देवर्षिणा नारदेन भवितव्यम् । विलोक्य कथं ध्वनिसादृश्येन प्रतारितोऽस्मि । नन्वयं गगनतलावलम्बिनोर्मधुकरयोरेव ध्वनिराकर्ण्यते । पुनः कर्णं दत्वा सहर्षविस्मयम् । अहो भगवतो योगीश्वरस्य प्रसादमहिमा येनाहमेवंविधानामपि वचनावबोधमधुरां सिद्धिमासादितवानस्मि । तदाकर्णयामि किमेतावालपतः । कर्णं दत्वा

एकः किमाह । सखे कलालाप कुत आगतोऽसि

अपरः किमाह । वयस्य मधुरप्रिय संततविकस्वराच्चन्द्रमौलिमन्दाकिनीकुमुदकाननात् । अहो अनयोश्चतुरालापपेशलता रुचिरनामधेयता च । पुनः कर्णं दत्वा

किमाह मधुरप्रियः । अस्ति नवीनः कोऽपि वृत्तान्तः । किमाह कलालापः । अस्ति । अचिरमेव कदापि खलु बलिनन्दनो बाणासुरः कमलमालया भगवन्तमिन्दुमौलिमभ्यर्च्य सविनयमिदमूचिवान् । यत् किल भगवन्

कैलासाधिकसारं किमस्ति वस्तु महीतले ।
यस्मिन् सफलतामेति मम दोर्दण्डमण्डलम् ॥

ततश्च विहस्येदमाह च भगवानिन्दुमौलिः ।

अस्ति मे कार्मुकं दिव्यं न्यस्तं जनकभूभुजि ।
यस्य बाणानले तिस्रः पुरः प्राप्ताः पतङ्गताम् ॥

तदाकर्ण्य च तत् कार्मुकं विलोकयितुं स तत्र गतः । अहमिहागतः । कुतः पुनस्त्वमिह कथय कीदृशो वा तत्र नवीनो वृत्तान्त इति

दाल्भ्यायनः । किमाह मधुरप्रियः । अहमागतोऽस्मि नन्दनवनात् । अथच तत्र मया लङ्केश्वरानुचरस्य गर्जितमाकर्णितम् । आः कथं रे नन्दनवनस्य रक्षिणोऽनर्चितचन्द्रचूड एव निशाचरचक्रवर्तिनि लूनसकलप्रसूनं नन्दनवनमिति । ततस्तैरिदमुक्तो निशाचरः । क्षन्तव्यमेतत् । अद्य हि जनकराजकन्यकावीरस्वयंवरविलोकनकुतुकितसकलसुरलोकविमानमण्डनाय महान् कुसुमोपयोगः । तदाकर्ण्य चेममेव वृत्तान्तमुपायनीकरोमि लङ्केश्वरस्येति प्रचलितो निशाचरः । अहमपि कौतुकादिहागतोऽस्मि ।

दाल्भ्यायनः । सविषादम् । अहो महाननर्थाङ्कुरोद्भेदो यदयं बाणरावणयोः कर्णान्तिकमपि विश्रान्तः सीतास्वयंवरवृत्तान्तः । अथवा अलमतिकातरतया । भ्रमारोपिता अपि भ्रमरोक्तयः सम्भवन्ति । विमृश्य कुतो वा भ्रमरसंभावना ।

मकरन्दरसस्यन्दसुन्दरोद्गारधारिणौ ।
श्रवणानन्दिनावेतौ बन्दिनाविव राजतः ॥

नेपथ्ये । साधु भगवन् विज्ञातं बन्दिनावेव खल्वावां नानादिगन्तसमागतनृपतिचक्रवर्णनाय जनकेन समादिष्टौ ।

दाल्भ्यायनः । अहो घुणाक्षरन्यायो यदिदं भ्रमरद्वयं प्रति मयोक्तं बन्दिद्वयं प्रति फलितं वचः । भवतु तदिमं भ्रमरवृत्तान्तमस्मद्गुरवे निवेदयामीति निष्क्रान्तः ।

॥ विष्कम्भकः ॥

ततः प्रविशति बन्दिद्वयम् ।

एकः । वअस्स मञ्जीरअ पेक्ख पेक्ख गद्दंदसरिससिहिट्ठ्ठसलाआसहस्सरिणम्मिदेसु मंचएसु आसीणा इमे कुङ्कुमकअङ्गराआ राआणो अमलफडिअपासाअसिहरासङ्गिणो कणअसिहा विअ रेहन्ति । अमुद्दुद्दुसाअरलहरिसिहरावलम्बिणो अभिणवुग्ग-

मन्तणिसाअरबिम्बप्पडिबिम्बा विअ सोहन्ति* ।

मञ्जीरकः । सखे नूपुरक पश्य पश्य ।

स्वां स्वां दिशं श्रितवतां निवहेन राज्ञां
मञ्चावलीवलयमाकलितं विभाति ।
सीतास्वयंवरविलोकनकौतुकेन
पुञ्जीकृताकृति दिशामिव चक्रवालम् ॥

अपिच ।

नटति नरकरायव्यग्रसूत्राग्रलग्न-
द्विपदशनशलाकामञ्चपाञ्चालिकेयम् ।
त्रिपुरमथनचापारोपणोत्कण्ठितानां
मतिरभसवतीव क्ष्माभृतां चित्तवृत्तिः ॥

नूपुरकः । वअस्स मञ्जीरअ को इमो सीदाकरग्गहवासनावसन्तलच्छीविलसन्तपुलअमुउलजालमण्डिदं णिअभुअसहआरसाहिजुअलं पुलोवन्तो चिट्ठदि† ।

मञ्जीरकः । स एष निजयशःपरिमलप्रमोदितचारणचञ्चरीकचयकोलाहलमुखरितदिक्चक्रवालक्ष्मापालकुन्तलालङ्कारो मल्लिकापीडो नाम ।

नूपुरकः । इमो उण कदमो जो किल दूरावसारिअकडअप्पअडिअधणुग्गुणकिणकिसणलेहामण्डले भुअदण्डे पुलोवन्तो चिट्ठदि‡ ।

मञ्जीरकः । सोऽयं कुबेरदिगङ्गनाललाटतटविलासलंपटः काश्मीरतिलकः ।

नूपुरकः । इमो उण को णिअपडावदिणअरुग्गमपुव्वगिरिसिहरसहअरं दक्खिणभुअदण्डमुच्चमिअ वट्टदि§ ।

मञ्जीरकः । स एष निजप्रतापप्रभापटलपिञ्जरितमलयाचलनितम्बतटः काञ्चीमण्डनो वीरमाणिक्यनामा नृपतिः ।

नूपुरकः । को इमो हरसुल्लसन्तपुलअविसंठुलकपोलत्थलचलकुण्डलसरिसनिवेसणावदेसेण पअडिअहरसरासणकण्ण-

* वयस्य मञ्जीरक पश्य पश्य गजेन्द्रदशनस्निग्धशलाकासहस्रनिर्मितेषु मञ्चेष्वासीना इमे कुङ्कुमकृताङ्गरागा राजानोऽमलस्फटिकप्रासादशिखरासङ्गिनः कनकसिंहा इव राजन्ते । अमुग्धदुग्धसागरलहरीशिखरावलम्बिनोऽभिनवोद्गच्छच्चिशाकरबिम्बप्रतिबिम्बा इव शोभन्ते ।

† वयस्य मञ्जीरक कोऽयं सीताकरग्रहवासनावसन्तलक्ष्मीविलसत्पुलकमुकुलजालमण्डितं निजभुजसहकारशाखियुगलं विलोकयन् तिष्ठति ।

‡ अयं पुनः कतमो यः किल दूरावसारितकटकप्रकटितधनुर्गुणकिणकषणलेखामण्डले भुजदण्डे विलोकयन् तिष्ठति ।

§ अयं पुनः को निजप्रतापदिनकरोद्गमपूर्वगिरिशिखरसहचरं दक्षिणभुजदण्डमुन्नमय्य ' र्तते ।

ऊरमनोरहो रेहदि* ।

मञ्जीरकः । सोऽयमसमरणमहार्णवैकमकरो मत्स्यराजः ।

नूपुरकः । इमो उण को अमलमलयजरसधवलिअभुअदण्डविडम्बिअभुअगरायसिरी सिरीसकुसुमसुउमारं माररिपुसरासणं कलअन्तो विप्फुरदि† ।

मञ्जीरकः स एष विमलमुक्तावलीविराजमानवक्षस्तटतुङ्गभुजङ्गतरङ्गः सिन्धुराजः । तदलमनेन प्रक्रतं तावदुपक्रमामहे । परिक्रम्य उच्चैः । अहो राजान आकर्णयत आकर्णयत ।

आकर्णान्तं त्रिपुरमथनोद्दण्डकोदण्डनद्धां
मौर्वीमुर्वीवलयतिलकः कोऽपि यः कर्षतीह ।
तस्यायान्ती परिसरभुवं राजपुत्री भवित्री
कूजत्काञ्चीमुखरजघना श्रोत्रनेत्रोत्सवाय ॥

पुनः सकौतुकम् । सखे पश्यताममी ।

कामारिकार्मुकविकर्षणकौतुकोर्मि-
रोमाञ्चितद्विगुणपीवरबाहुदण्डाः ।
सीताकरग्रहमिलत्कुतुकातिमात्र-
विस्तीर्यमाणहृदयाः परितो नरेन्द्राः ॥

पुनः सहर्षम् । अये कथमुच्चलितमेव समसमयसंचरणमिलत्कपोलतलसंघट्टमसृणरणन्मणिकुण्डलेन राजमण्डलेन ।

नूपुरकः । पुलोवेहि पुलोवेहि इमाणं अण्णोण्णसंघट्टन्तकेयूरसमुच्चलन्तकणअकणमिसेण पआवग्गिणो विप्फुलिङ्गा विअ दीसन्ति‡ ।

मञ्जीरकः । विहस्य

पश्य पश्य सुभटैः स्फुटभावं ।
भक्तिरेव गमिता ननु शक्तिः ॥
अञ्जलिर्विरचितो ननु मुष्टिः-
मौलिरेव नमितो ननु चापः ।

नूपुरकः । कहं आरम्भरमणिज्जो जेव्व इमाणं संरम्भो§ ।

मञ्जीरकः । सविषादम् ।

आद्वीपात् परतोऽप्यमी नृपतयः सर्वे समभ्यागताः
कन्येयं कलधौतकोमलरुचिः कीर्तिश्च लाभास्पदम् ।

* कोऽयं हर्षोल्लसत्पुलकविसंष्ठुलकपोलस्थलचलितकुण्डलसदृशनिवेशनापदेशेन प्रकटितहरशरासनकर्णपूरमनोरथो राजते ।

† अयं पुनः कोऽमलमलयजरसधवलितनिजभुजदण्डविडम्बितभुजङ्गराजश्रीः शिरीषकुसुमसुकुमारं माररिपुशरासनं कलयन् विस्फुरति ।

‡ विलोकय विलोकय एषामन्योन्यसंघट्टमानकेयूरसमुच्चलत्कनककणमिषेण प्रतापाग्नेर्विस्फुलिङ्गा इव दृश्यन्ते ।

§ कथमारम्भरमणीय एवैतेषां संरम्भः ।

नाकृष्टं नच टाल्कृतं न नमितं स्थानाच्च न त्याजितं
केनापीदमहो धनुः किमधुना निर्वीरमुर्वीतलम् ॥

नेपथ्ये । आः कोऽयमलीकवैतालिको धनुर्मात्रकेऽपि नमयितव्ये निर्वीरमुर्वीतलमुपदिशति ।

नूपुरकः । वअस्स कस्स इमो महीअलचलन्तराहुरहचक्करवक्कसो कण्डधुणी सुणीअदि * ।

मञ्जीरकः । मयाप्ययमपरिचितः । तदेनं पृच्छामि तावत् । परिक्रम्य । अहो कः खलु भवान् यः सकलदेशदर्शिनो ममापि न विख्यातः

प्रविश्य पुरुषः । साटोपं परिक्रम्य सक्रोधम् । आः पाप वैतालिकापसद कतिपयग्रामटिकापर्यटनदुर्विदग्ध कथं मामपि दश इत्यर्धोक्ते । स्वगतं कथं संवरणीयं विवरितुमुपक्रान्तोऽस्मि । भवतु इदमेव तावत् निर्वाहयामि । कथं मामपि दशदिग्विलासिनीकर्णपूरीकृतकीर्तिपल्लवं त्रिभुवनवीरनामधेयं कूपमण्डूक इव सागरमविख्यातमपदिशसि । तत्कथय क्व तावत् कर्णान्तनिशमयगुणं कन्यारत्नं कार्मुकं च ।

मञ्जीरकः । इदं तावत् कार्मुकं कन्या तु चरमं लोचनपथमवतरिष्यति ।

पुरुषः । ससंरम्भम् । धिङ् मूर्ख कथं रे राशिनक्षत्रपाठकानां गोष्ठीं न दृष्टवानसि । तेऽपि कन्यामेव प्रथमं प्रकटयन्ति चरमं धनुः ।

मञ्जीरकः । स्वगतं कथमयं वाचाटतां प्रकटयति । भवतु । अनयैव तावदेनं निवारयामि । प्रकाशम् । अये एतावति वीरमण्डले भवानेव नक्षत्रविद्याकुशलः ।

पुरुषः । सक्रोधम् । आः कथं रे अहमेव क्षत्रविद्यायामकुशलः

मञ्जीरकः । तत् कथं कार्मुकमन्तरेणैव कन्याविलोकनायोत्कण्ठसे ।

पुरुषः । साटोपं । परिक्रम्य कथं ममापि चापारोपणे संशयः ।

मञ्जीरकः । अथ किम्

पुरुषः । तदेव ममाभिसंभाव्यते । यदि

विनैवाम्भोवाहं बहलरुचिलिप्ताम्बरतलात्
तडिल्लेखा हेमद्युतिविततिरम्या विलसति ।

यदिवा

विनैव स्वर्गङ्गां नभसि रभसोन्मुद्रशफरी-
परीवर्त्तैः साकं स्फुरति नवनीलोत्पलवनम् ॥

विलोक्य सविषादं कथमस्मत्प्रतिज्ञाभङ्गाय विपरीतं सृष्टिनैपुणं प्रणीतवान् विधिः । नन्विदं तथैव पश्यामि । विमृश्य । अथवा क एष विधिरपि मद्विरोधाय ।

मयि क्षीरोदन्वद्विभृतमुरजिद्वाभिनलिनीं
निजक्रीडावापीजलकमलिनीं कर्तुमनसि ।
पदभ्रंशाशङ्की मधुरमधुरालापचतुरै-
श्चतुर्भिः स्वैर्वक्त्रैरनुनयपरोऽभूदयमपि ॥

पुनर्निपुणं निरूप्य । अये सादृश्येन प्रतारितोऽस्मि ।

तडिल्लेखा नेयं विलसति परं सौधशिखरे
वसन्त्याः कस्याश्चित् कनकरुचिरा गात्रलतिका ।
अपीदं नोन्मज्जत् कुवलयवनं मीनतरलं
परं तस्या एव स्फुरति नयनालोकललितम् ॥

विभाव्य नूनं तदेव सीताभिधानं कन्यारत्नम् । पुनः सहर्षम् ।

राजीव जीवसि मुधा न सुधाकरत्व-
मस्याः समः पदनखस्य कुतो मुखस्य ।
अये दृशोर्मृगदृशः कतमः कुरङ्ग-
स्तत् खञ्जन त्वमपि किं जनरञ्जनाय ॥

पुनः सरभसम् ।

कदली कदली करभः करभः करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं नचमूरुदृशः ॥

मञ्जीरकः । सखे नूपुरक किमेतत् कस्याश्चिदपि हस्तादादायसानन्दमालोकयत्यान्तःपुरिको जनः ।

नूपुरकः । अहमेरिसं सम्भावेमि जं किर गुरुभवणादो आगदाए चन्दणिआए समप्पिदं चित्तपडं पुलोवेदित्ति * ।

मञ्जीरकः । स त्वया दृष्टश्चित्रपटः ।

नूपुरकः । भट्टदारिआ दाव अण्णच्च कोवि णीलुप्पलदामसामलङ्गो कुसुमसरसरिसरूओ कुण्डलीकिदहरचावो चक्कवट्टिकुमारो † ।

मञ्जीरकः । अहह मुग्धः खल्वबलाजनः । यदेवमपि कठोरप्रतिज्ञे राजनि किशोरवयसं जामातरमाशंसति । सखे जानासि केन लिखितं चित्रमिति ।

नूपुरकः । जाणामि । महेसिणो जण्णवक्कस्स दुहिआए धम्मआरिणीए ‡ ।

मञ्जीरकः । सहर्षम् । इदानीमुद्भिन्नो मम मनोरथाङ्कुरः । देवी हि मैत्रेयी सिद्धयोगिनी कालत्रयदर्शिनी सा नालीकमालिखति ।

नूपुरकः । सव्वं सम्भावीअदि जइ इमो जरठङ्गो इदो ओसरदि § ।

* वयस्य कस्यायं महीतलचलद्राहुरथरवकर्कशः कण्ठध्वनिः श्रूयते ।

* अहमीदृशं सम्भावयामि यत् किल गुरुभवनादागतया चन्दनिकया समर्पितं चित्रपटं विलोकयतीति ।

† भट्टदारिका तावत् अन्यश्च कोऽपि नीलोत्पलदामश्यामलः कुसुमशरसदृशरूपः कुण्डलीकृतहरचापश्चक्रवर्तिकुमारः ।

‡ जानामि महर्षेर्याज्ञवल्क्यस्य दुहित्रा धर्मचारिण्या ।

§ सर्वं सम्भाव्यते यद्ययं जरठाङ्गः इतोऽपसरति ।

मञ्जीरकः। आः कोऽयं किमिदमेनमपसारयामि। अये किमितस्ततो विलोकयसे । नन्विदं शाम्भवं धनुस्तदिहैव दीयतां दृष्टिः ।

पुरुषः । आः किमुच्यते दृष्टिरिति । नन्वियं मुष्टिरपि दीयते। परिक्रम्य शेखरभ्रंशमभिनीय सविषादं विलोकयति ।

मञ्जीरकः ।

अये लङ्केश विस्रस्तशेखरालोकनेन ते ।
समयो याति तत् तूर्णं गृहाण हरकार्मुकम् ॥

पुरुषः । स्वगतं । कथमनेन विदितोऽस्मि विमृश्य । अथवा घुणाक्षरन्यायगतं शब्दसादृश्यमेतत्। प्रकाशं ससंरम्भम्।

सावलेपकमनीयमुदस्य
क्रीडयैव विनिबध्य च मौर्वीम् ।
क्रष्टमेव हरकार्मुकमेतद्
दृश्यमत्र सुदृशो हृदयं च ॥

धनुषि हस्तमर्पयित्वा स्वगतं कथं न चलत्यपि । भवतु प्रकाशम् । अये धनुरिति वक्रः पन्थाः । तत् सरलेन करवालधारापथेन सीतामानयामि ।

मञ्जीरकः । कथमतिप्रगल्भसे । न विलोकयसि ।

रोषारुणीकृतविलोचनकान्तिभिन्न-
भ्रूभङ्गभीमघटितभ्रुकुटीविटङ्कम् ।
उत्खातलोलकरवाललताकराल-
दोर्दण्डचण्डचरितं नरवीरचक्रम् ॥

पुरुषः । कृपाणमुद्यम्य परितो विलोक्य पश्यत पश्यत ।

निर्भिन्नवैरिकरिकुम्भतटीविमुक्त-
मुक्ताफलप्रकरतारकिताम्बरश्रीः ।
यः कालरात्रिरिव भाति रणे स एष
रे रे नृपा मम कृपाकृपणः कृपाणः ॥

आकाशे कर्णं दत्वा । किं ब्रूथ ।

एकः कथं बहुतरैः सुभटैः करोमि
संयत्समडम्बरमिति त्यज रे विषादम् ।
यं मन्यसे सुलभमत्र सहैव तेन
चेतो निधेहि समरे समरेखयैव ॥

अहो धृष्टता मनुष्यकीटानाम् । तदेतान् निजमूर्त्यैव तावद् भीषयामि । साटोपं निष्क्रान्तः । नेपथ्ये ।

मन्दाकिनीकनकपद्मबिसाङ्कुराणां
किञ्चोग्रदिग्गजलसद्दशनाङ्कुराणाम् ।
उन्मूलनैरलमनीयत शैशवं ये-
स्तेऽमी निजा मम भुजाः प्रकटीभवन्तु ॥

ततः प्रविशति निजरूपेण दशकण्ठः ।

नूपुरकः । वअस्स पेक्ख पेक्ख कोदूहलं जं एकस्सवि माणुसस्स दस मत्थआइं * ।

मञ्जीरकः । नैष मानुषो राक्षसराजः खल्वसौ दशकण्ठः ।

नूपुरकः । ता परित्ताअदु मं वअस्सो णं रक्खसमत्तो जेव्व सम्मुहपडिदं माणुसं चव्वेइ किं उण रक्खसराओ † ।

मञ्जीरकः । अलं कातरतया । सकलवीरवृन्दवन्दनीया हि बन्दिजातिः । तत् कथमस्मद्विधेषु सकलभुवनैकवीरो विपरीतं वर्तिष्यते दशकण्ठः ।

नूपुरकः । सहर्षम् । जदि एरिसं ता किंपि इमं णीसङ्को पुच्छिस्सम् । उपसृत्य अये किंति एसिआइं मत्थआइं उव्वहीअन्ति किन्तिवा एकं रक्खिअ उण अवराइं जत्तकुत्तवि ण णिक्खिवप्यन्ति ‡ ।

रावणः । आः पाप कथमस्थाने शिरश्छेदवार्तयामङ्गलमावेदयसि तद्देष वैतालिक इत्युपेक्ष्यः ।

मञ्जीरकः । विहस्य स्थाने शिरश्छेदवार्ताऽपि भवतो मङ्गलाय ।

रावणः । अथ किं ननु रे ।

विद्याधरप्रणयिनीकरपल्लवाग्र-
लीलाविमुक्तकुसुमप्रकरावकीर्णः ।
श्रीचन्द्रचूडचरणे च रणे च कामं
छिन्नोऽपि मस्तकगणो मम मङ्गलाय ॥

नूपुरकः । जदि एरिसो तुमं ता किन्ति णिअरूअं सङ्गोविअ चोराव्व पविट्ठोऽसि § ।

रावणः । धिङ् मूर्ख न जानासि रे ।

ये चन्द्रचूडाचलचालनैक-
चातुर्यचिन्तामणयो भुजा मे ।
तैरेव भूयिष्ठतरैः प्रवृत्त-
श्चापाधिरोपाय कथं न लज्जे ॥

तत् कथय कुत्र जानकीति ।

मञ्जीरकः । सविषादम् ।

यस्याः स्वयं कुलगुरुः किल याज्ञवल्क्य-
स्तातः स एष जनको जननी धरित्री ।
सापि त्वमद्य बत दुर्विधिशैशवेन
वत्से निशाचरकराङ्कगता भवित्री ॥

* वयस्य पश्य पश्य कौतूहलं यदेकस्याऽपि मानुषस्य दश मस्तकानि ।

† तत् परित्रायस्व मां वयस्य नूनं राक्षसमात्र एव सम्मुखपतितं मानुषं चर्वति किं पुना राक्षसराजः ।

‡ यदीदृशस्तर्हि किमप्येनं निःशङ्कः प्रक्ष्यामि । अये किमिति इयन्ति मस्तकानि ऊह्यन्ते किमिति वा एकं रक्षित्वाऽपराणि यत्रकुत्रचिच निक्षिप्यन्ते ।

§ यदीदृशस्त्वं तर्हि किमिति निजरूपं संगोप्य चोर इव प्रविष्टोऽसि ।

नूपुरकः । अपवार्य । अलं तावेण कहं एत्तिअमेत्तम्मि वीरमण्डले कोवि णत्थि जो इमस्स हठपउत्तस्स पुरदो होदि * ।

मञ्जीरकः । कुपितस्य दशकण्ठस्य कः संमुखे भवति क्षत्रिय ऋते सहस्रबाहोः कार्तवीर्यात्

नूपुरकः । सहर्षम् । जीविदह्म पेक्ख णं पत्तो सहस्सबाहू किदवीरपुत्तो † ।

मञ्जीरकः । धिङ् मुर्ख जामदग्न्यकुठारधाराजलनिमग्नः क्व संप्रति कार्तवीर्यः । तन्नूनमयं बाणासुरो भविष्यति । हन्त भोः तदिदमनर्थान्तरम् । विमृश्य । अथवा विषस्य विषमौषधं भविष्यति ।

ततः प्रविशति बाणासुरः । परिक्रम्य साटोपम् ।

कैलासशैलशिखरादपि भूरिसारं
निःसीमभारमधुना धनुरिन्दुमौलेः ।
आलम्ब्य पुष्पसदृशं करपल्लवेन
स्फीतं भुजद्रुमवनं सफलं करोमि ॥

रावणः । अनाकर्णितकेन । कथमद्यापि नानीयते जानकी ।

बाणः । विलोक्य स्वगतम् । कथमिह दशकण्ठोऽपि । प्रकाशम् । अहो एतावति वीरलोके न केनापि तावदारोपितमैश्वरं धनुः ।

नूपुरकः । नारोपणीयं च

रावणः । कथमद्यापि नानीयते सीता । तदयं चन्द्रहास एव मे बलादानयति ।

बाणः । विहस्य । यदीदृशं वीरडम्बरं तत् किमारोप्यैव हरकार्मुकं नानीयते सीता ।

रावणः । आः कोऽयमलीकपण्डितः ।

उद्दण्डचण्डिमलसद्भुजदण्डखण्ड-
हेलाचलाचलहराचलचारुकीर्तेः ।
कीदृग्यशस्तुलितबालमृणालकाण्ड-
कोदण्डकर्षणकदर्थनयानया मे ॥

बाणः । सोऽयमशक्तिप्रकारः ।

रावणः । आः कथं दशमुखस्याप्यशक्तिसंभावना ।

बाणः । विहस्य । अये बहुमुखता नाम बहुप्रलापितायाः कारणं विक्रमस्य बहुबाहुतेव ।

रावणः । आः कथं रे पलालभारनिःसारेण भुजभारेण वीरंमन्योऽसि ।

बाणः । सक्रोधम् । अये समरकलाकुण्ठ दशकण्ठ ममाऽपि भुजभारं निःसारं व्यपदिशसि । न जानासि किं यतोऽत्रैव

पितुः पादाम्भोजप्रणतिरभसोत्सिक्तहृदयः
प्रयातः पातालं न कतिकतिवारानकरवम् ।
सहस्रे बाहूनां वितिवलयमासज्य सकलं
जगद्धारोद्वेलां फणफलकमालां फणिपतेः ॥

रावणः । अरे चलितनयवृत्तिरसि यदलीकविक्रमवर्णनया सत्यविक्रमस्य मे पुरतः स्वात्मानं विडम्बयसि ।

बाणः । कथं त्वमेव सत्यविक्रमः ।

रावणः । अथ किम् ।

दोष्णां न मे विदितवानसि वीरलक्ष्मी-
प्रासादविभ्रमवतीं पदवीं गरिष्ठाम् ।
ये चन्द्रशेखरगिरौ करपल्लवाङ्क-
पर्यङ्कशायिनि दधुः कलशप्रतिष्ठाम् ॥

बाणः । अलमलीकवाग्विग्रहेण तदिदं धनुरावयोस्तारतम्यं निरूपयिष्यति ।

मञ्जीरकः । अये बाणरावणौ किमिदं नरवीरैकसमर्पणीयसीतापरिणयमनोरथेन विफलमायास्यते चेतःपदवी ।

बाणः । किमेतावता

त्रिपुरमथनचापारोपणोत्कण्ठिताधी-
र्मम न जनकपुत्रीपाणिपद्मग्रहाय ।
अपितु बहुलबाहुव्यूहनिर्व्यूहमाला-
बलपरिमलहेलाताण्डवाडम्बराय ॥

रावणः

उन्मीलितेन शिखरेण हराचलस्य
प्रागेव मे भुजवनस्य कृता परीक्षा ।
एषा विदेहतनयाकुचकुम्भकेलि-
कौतूहलाद्गिरिशकार्मुककर्मदीक्षा ॥

नेपथ्ये

असुरसुरनिशाचरोरगाणा-
मपि नरकिन्नरसिद्धचारणानाम् ।
नमयति यदि कोऽपि चापमेतन्-
मम दुहितुः स करग्रहं तनोतु ॥

रावणः

रे रे भुजाः कुरुत चन्द्रकलाकिरीट-
कोदण्डकर्षणयशोधवलां त्रिलोकीम् ।
अङ्गीकुरुध्वमचिराच्च विदेहपुत्री-
वक्षोजचन्दनरजःपरिधूसरत्वम् ॥

धनुरालोक्य स्वगतम् । अये दुर्विगाहमिदं तदलमनेन । प्रकाशम् । बाणत्वमेव तावदग्रे धनुरारोपय । अस्माकमपि नूतनागतत्वेन मान्योऽसि ।

* अलं तावेन कथमेतावन्मात्रे वीरमण्डले कोऽपि नाऽस्ति योऽस्य हठप्रवृत्तस्य पुरतो भवति ।

† जीविताः स्मः । पश्य प्राप्तः सहस्रबाहुः कृतवीर्यपुत्रः ।

बाणः । तथास्त्विति परिक्रामति ।

रावणः । स्वगतम् । अरे हृदय । अलं कातरतया । अयं तावत् कतरः कुण्ठीकृतदशकण्ठे शितिकण्ठकार्मुके ।

अन्योऽपि कोऽपि यदि चापमिमं विकृष्य
सीताकरग्रहविधिं विदधीत धीरः ।
लङ्कां नयामि च गिरानुनयामि चैनां
द्रागानयामि च वशे जनकेन्द्रपुत्रीम् ॥

मञ्जीरकः । सखे पश्य

बाणस्य बाहुशिखरैः परिपीड्यमानं
नेदं धनुश्चलति किंचिदपीन्दुमौलेः ।
कामातुरस्य वचसामिव संविधानै-
रभ्यर्थितं प्रकृतिचारु मनः सतीनाम् ॥

रावणः । सविषादमात्मगतम् । कथमियं सीतानुनयप्रत्यूहपिशुनेव दुरुपश्रुतिः । प्रकाशम् । अये बाण अपि नाम ते पलालभारनिःसारो भुजभारः ।

बाणः । कथं भुजमण्डलमिदमालोकयन्नपि कटुभाषितां न मुञ्चसि ।

रावणः । तत् किमनेन करिष्यसि ।

बाणः । यत् कृतं हैहयराजेन ।

रावणः । इदमसौ ते भुजवनं निजप्रतापानले निर्दहामि ।

बाणः । इदमहं त्वत्प्रतापानलमनेकरुचिरचापचुम्बितनिजबाहुबलाहकनिवहनिर्मुक्तनाराचधारासारैः शमयामि ।

रावणः

रे बाण मुञ्च मयि बाणशतानि पञ्च
नन्वस्ति मे करतले करवालवल्ली ।
रे पञ्चबाण विवृणु त्वमपि स्वबाणान्
नन्वेति सा युवतिलोकललामवल्ली ॥

नूपुरकः । अये बाणरावणा सअं जेव्व अप्पाणं वण्णन्ता ण लज्जेथ * ।

रावणः । धिङ् मूर्ख कथमात्मैकश्लाघ्यो दशकण्ठः । ननु रे ।

मन्दोदरीकुटिलकोमलकेशभार-
मन्दारदाममकरन्दरसं पिबन्तः ।
वीणानिनादमधुरध्वनिमुद्गिरन्तो
मद्विक्रमं मधुकरा अपि कीर्तयन्ति ॥

बाणः । कथमयं सुरतरुकुसुमदामकमनीयकामिनीजनोपभोगसौभाग्यं विडम्बयति । तदिदानीम् ।

* अये बाणरावणौ स्वयमेवात्मानं वर्णयन्तौ न लज्जेते ।

अमी मे दोर्दण्डास्तुलितहरशैलैकशिखरा-
स्तुरासाहं साहंकृतिकरतलन्यस्तकुलिशम् ।
पराभूय स्वैरं त्रिदशवनमुन्मूल्य सकलं
मम क्रीडोद्यानं सुरतरुमनोज्ञं विदधतु ॥

इति निष्क्रान्तः ।

रावणः । कथमयं निर्गतः । अहं तु

अनाहृत्य हठात् सीतां नान्यतो गन्तुमुत्सहे ।
न शृणोमि यदि क्रूरमाक्रन्दमनुजीविनः ॥

मञ्जीरकः । वत्से जानकि । अधुना दैवैकरक्षणीयासि ।

रावणः । कर्णं दत्वा । अये कस्यायमाक्रन्दः श्रूयते नभसि । निपुणं निरूप्य । नूनमनेन कस्यचित् नाराचपीडितेन कठोरमाक्रन्दता गगनपथचारिणा मारीचेन भवितव्यं तदेनमाश्वासयामि तावदिति निष्क्रान्तः ।

नूपुरकः । वअस्स दिट्ठिआ वग्घस्स विअ मुहादो कुरङ्गी विअ इमस्स हत्थादो उव्वरिदा जाणई * ।

मञ्जीरकः । सखे एवमेतत् तदेहि वृत्तान्तमिमं जनकराजस्य निवेदयावः ॥ इति निष्क्रान्ताः सर्वे ।

॥ प्रथमोऽङ्कः ॥

* वयस्य व्याघ्रस्येव मुखात् कुरङ्गीवास्य हस्तादुर्वरिता जानकी ।

## RÁMA AND SÍTÁ.

### X.

As, when the sun and moon their empire leave,
Black night descends upon the widowed eve;
So RÁVAN, watching for the lovely prize—
His form concealed in roaming Bráhman's guise—
Drew near to SÍTÁ, in the cottage left,
Far from her guardians, of all aid bereft.
All life was hushed, and, as the Fiend came near,
No leaflet stirred, the wind was still through fear;
And his red eye held, powerless to flee,
The trembling waters of GODÁVERÍ.
Unholy guest in holy guise he came,
Close to the side of RÁMA's mourning dame:
Like a dark well with treacherous weeds o'ergrown,
Like SATURN when his baleful rays are thrown
Upon the fairest star of all the sky.
Thus the Night-rover with his evil eye
Looked on the lonely lady as she wept
Within her leafy home. Awhile he kept
His gaze upon her beauty, for it fed
Upon the splendour of white teeth, the red
Of luscious lips, the light of eyes that through
Their long soft lashes, moistened with the dew
Of weeping, glorified a face, fair-browed,
Pure as the moon shining without a cloud.
Then RÁVAN cried, pierced by Love's fiery dart:
"Speak, marvellous beauty, tell me who thou art:

All lonely here, in silken robes arrayed,
Wearing a lotus wreath thy brows to shade :
What heavenly being do mine eyes behold,
Fairer and brighter than the finest gold?
Fame? Beauty? Modesty?—No less I ween,
Or sweet Desire, young Love's voluptuous queen?
Red are thy lips, thy teeth are small and white ;
Thy tender eyes are large and soft and bright.
No child of earth could wear a smile so sweet,
And O, the wonder of thy perfect feet!
Robes cannot hide the glories of thy breast,
And fancy faintly pictures all the rest
Sweet queen, these eyes have never seen till now
Sylph, Nymph, or Goddess half so fair as thou.
This savage wood befits thee, lady, ill,
Where wild Fiends roam, changing their form at will.
On some smooth terrace should thy couch be spread,
In gardens sweet with blooms thy feet should tread ;
A royal robe thy peerless form should deck,
And priceless gems sparkle upon thy neck ;
The choicest wreath should bind thy glorious hair,
A matchless lord thy bed of love should share.
Who art thou, Goddess? But no Heavenly Maid
Loves this wild wood : beneath this gloomy shade
No Nymph or gentle spirit seeks to roam ;
This is the Giant's haunt, the lion's home.
Dost thou not dread, so delicate and fair,
The tiger near thee and the wolf and bear?
Whose and who art thou? Tell me, whence and why
Thou comest hither, with no guardian nigh,
To the wild woods of Dandaka, where stray
Demons, and lions roaring for their prey."
He ceased. The lady, by his garb beguiled,
With fearless innocence looked up and smiled;
She bade the seeming Bráhman to a seat,
And gave him water for his weary feet;
And, still intent on hospitable care,
Brought forth the choicest of her woodland fare.
She by the cottage door expecting stood
To see her lord returning through the wood ;
But nought save boundless trees her gazes met,
Ráma and Lakshman, lingering, came not yet.
And then she told him what he sought to know,
Her name, her lineage, all her weal and woe :
The monarch's promise, and Kaikeyí's hate,
The fatal oath, and grief that came too late.
"And now," she said, "declare thy name and race,
And why thou roamest to this gloomy place."
She spoke. The stranger thundered in reply :
"Terror of men and Gods and worlds am I,
Rávan, whose will the Giant hosts obey.
Since I have seen thee, lovely one, to-day,
Clad in silk raiment, bright as polished gold,
My love for all my wives is dead and cold.
Though countless dames of perfect beauty, torn
From many a pillaged realm, my home adorn,
Come, fairest, come, my queen and darling be ;
Among a thousand I will love but thee.
My city, Lanká, like a glittering crown,
Looks from the high brow of a mountain down
On restless Ocean, who with flash and foam
Beats in wild rage against my island-home.
There pleasant gardens shall thy steps invite
With me to wander when the moon is bright ;
There in new joys thy breast shall ne'er retain
One faint remembrance of this place of pain"
Then from her breast the noble fury broke ;
With flashing eye and quivering lip she spoke :
"Me, me, the faithful wife of Ráma, him
Before whose glory Indra's fame is dim :
Ráma, who quails not in the battle-shock,
Fierce as the Ocean, steadfast as the rock :
Ráma, the lord of each auspicious sign ;
Ráma, the glory of his princely line.
Me, Ráma's wife, the dear fond wife of him,
Him of the eagle eye, the lordly limb ;
Me dost thou dare with words of love to press,
A jackal suing to a lioness?
As far above thine impious reach am I
As yonder sun that blazes in the sky.
Ha! thou hast seen those air-drawn trees of gold,
That sign of doom which dying eyes behold,
If thou hast ventured, weary of thy life,
To look with eyes of love on Ráma's wife.
Fool! thou hadst better strive to rend away
The serpent's venomed fang, the lion's prey ;
To steal the blessed tree that blooms on high,
To drink fell poison and not fear to die.
Fool! with a needle's point thine eye to prick ;
Fool! with thy tongue a razor's edge to lick.
Thou, tempt the wife of Ráma! Better leap,
A millstone round thy neck, from Lanká's steep
Into the raging sea and strive to swim
From shore to shore than tempt the wife of him.
Thou, win his wife! With lighter labour try
To pluck the sun and moon from yonder sky ;
Safer to wrap within thy robe the flame,
Than woo to folly Ráma's faithful dame.
As the vast ocean to a trickling rill,
As Meru's mountain to the meanest hill ;
The feathered monarch to the skulking bat,
The lordly lion to the crawling cat :
As sandal perfume to the common mire,
As gold, found perfect by the testing fire,
To homely iron and dull lumps of lead :
As the gay peacock, with his plumes outspread,
To the shy moping solitary owl ;
As the proud swan is to the meanest fowl
That dips his wings, unnoticed, in the sea—
So is my Ráma to a thing like thee."

स्यापि संभवात् तृणादावदृष्टकर्तृपूर्वकत्वसंशय इति न विपक्षता, अपितु प्रोक्तनयेन वास्तवं पक्षत्वमेवेति । नच कर्मणोऽपि कृष्यादेरिव चेतनानधिष्ठितस्य कार्यजनकत्वमिति वक्ष्यामः । तत् तृणादीनां दृष्टहेतुत्वेऽपि परैरदृष्टकार्यत्वेनोपगमात् प्रत्युतात्र सपक्षत्वमिति मत्वात्र सादिभिरेव विपक्षत्वाशङ्कया नैकान्तिकत्वं परिहृतमाचार्येण नतु तैरपीति ॥

"नन्वसिद्ध एवायं हेतुः,, इति पराभिप्रायमाह ।

(६) धीमत्कृतं तु यत् कार्यं दृष्टं तस्यैव दर्शनात् ।
धीमतोऽनुमितिर्युक्ता देहादेर्न विपर्ययात् ॥

यदेव हि यस्य कार्यत्वेन सिद्धं तदेव तस्यानुमापकं न कार्यमात्रम्, धूमादीवाग्न्यादेः, न शकटादिविशिष्टमेव घटपटप्रासादनगरादि कार्यं कर्तृजन्यं सिद्धमिति, तत एव विशिष्टज्ञानादात्मकर्त्रनुमानं युक्तम्, नतु कार्यशब्दवाच्यत्वे तद्विजातीयात् तनुभुवनकरणादेः कार्यान्तरात् तत्र तत्कार्यत्वादिति, यदाहुः सौगताः,

"सिद्धं यादृगधिष्ठातृ भावाभावानुवृत्तिमत् ।
संनिवेशादि तद्युक्तं तस्माद्यदनुमीयते ॥
वस्तुभेदे प्रसिद्धस्य शब्दसाम्यादभेदिनः ।
न युक्तानुमितिः पाण्डुद्रव्यादिव हुताशने ॥
अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित् ।
घटादेः करणात् सिध्येद्वल्मीकस्यापि तत्कृतिः ॥
जात्यन्तरप्रसिद्धस्य शब्दसामान्यदर्शनात् ।
न युक्तं साधनं गोत्वाद्वागादीनां विषाणवत्,, ॥

इति ॥

एतत् प्रतिविपत्ति ।

(७) कार्यत्वादेव कुम्भादेर्देहादि न विलक्षणम् ।
कार्यं च न क्वचिद्दृष्टं प्रज्ञावत् कारणं विना ॥

न तावददृष्टकर्तृकेषु तनुकरणभुवनादिषु कार्यत्वमसिद्धं भवताम्, येन दृष्टकर्तृकेभ्यो विजातीयत्वाभ्युपगमो युक्तः स्यात्, जगतः सर्वस्यानित्यत्वेन समनन्तरप्रत्ययोपादानाभ्युपगमात्, "नन्वाश्रयाणां भेदात् तदपि भिन्नमेव,,न,तेन रूपेण तेषामप्यभिन्नत्वात्, शाबलेयबाहुलेयादीनामिव गोत्वेन शब्दघटादीनामिव वा कृतकत्वेन, नह्यन्यथा कृतकत्वेनानित्यत्वं घटादिवच्छब्दादावनेकवृत्त्यादिभिर्नानेकत्वं भूतकण्ठमालागुणावत् सामान्यादौ शक्यमुपपादयितुं भवद्भिः, तेन रूपेण तेषां समानतैव, यदुक्तम्, "साध्यधर्मसामान्येन समानोऽर्थः सपक्ष इति, न, "कार्यत्वेनेति चेत्,, जितं जिगीषुभिरभिनवैः प्रसिद्धन्यायनिह्नवेनासिद्धताद्यान्ध्यमुत्पादयद्भिः, कथं वा संनिवेशवतां सर्वेषां प्रमेयत्वसत्त्वकार्यत्वशून्यत्वानात्मत्वादिभिरिव न संनिवेशवत्त्वेनापि समानता, "ननु संनिवेशो नाम नान्यत् किंचित् संनिविष्टेभ्यः,, बालभाषितमेतत्, सतोऽपि किमन्यत् सत्त्वं कार्यत्वाकार्यत्वम्, सत्यम्, भिन्नानामपि तेषामेकविमर्शजनकत्वेन समानतेष्यते, यदुक्तम्,

"एकप्रत्यवमर्शाख्यज्ञानाद्येकार्थसाधने ।
भेदेऽपि नियताः केचित् स्वभावेनेन्द्रियादिवत् ॥
ज्वरादिशमने काश्चित् सह प्रत्येकमेव वा ।
दृष्टा यथा वौषधयो नानात्वेऽपि नचापराः,, ॥

इति, तर्हि संनिवेशवत्त्वेनापि सर्वसंनिवेशवतां समानत्वे प्रतीयमानं तद्वदेव भविष्यतीति केषांचिज्जात्यन्तराभिधानमयुक्तमेव, अकर्तृपूर्वत्वासिद्धौ तेषां जात्यन्तरत्वमेकशब्दवाच्यत्वेऽपि स्यात्, उपादानकारणभेदसिद्धाविव पाण्डुत्वादेरुपलभ्यमानाकारान्यत्वनिश्चये वा गोशब्दवाच्यानामिव वागादीनां नवानाम्, नतु तत्संशये संबन्धग्रहणकाल एव महानसदृष्टाद् धूमादतिदूरवर्तित्वेनादृष्टाग्निसंबन्धस्य धूमान्तरस्यैवाग्न्युपादानतायां संदेहमात्रादसिद्धेः, अदर्शनमात्रस्य च संदेहफलत्वादित्युक्तम्, "तर्ह्यसिद्धत्वादेव तेषां दृष्टकर्तृभ्यो जात्यन्तरता स्यात्,, न,अत एव तस्य साध्यत्वाद् धूमादेरिवाग्न्याद्युपादानता, न दूरवर्तिनि पर्वतादौ साधनस्य ह्यसिद्धता दूषणम्, साध्यस्य तु भूषणमेवेत्युक्तम् । "अथ व्याप्तिरसिद्धा कार्यमात्रस्य कर्तृमात्रेणेत्युच्यते,, घटादीनां विशिष्टकृतत्वेनैव दर्शनात्, क्व वा धूममात्रस्य वह्निमात्रेण व्याप्तिः सिद्धा भवताम्, धूमविशेषोऽपि हि कश्चिदेव महानसादावह्निविशेषजन्यः सिद्धः, "ननु तार्णपार्णादेर्विशेषव्यभिचारेऽपि ततो धूममात्रस्य दर्शनात्र तदापि निर्विशेषस्य सामान्यस्य प्रत्यक्षेणासिद्धेः स एव तदवस्थो दोषः,, सत्यम्,अत एवार्थसामर्थ्यादनुमानतो वा सर्वत्राग्निजन्यो धूमो धूमत्वात्, महानसदृश्यधूमवत्, इत्यप्रतिष्ठितभेदस्याग्निमात्रस्य व्यापकस्याप्रतिष्ठितभेदं धूममात्रं व्याप्यं लिङ्गतया प्रतीयते, यदुक्तम्,

"सामान्यविषयं प्रोक्तं लिङ्गं भेदाप्रतिष्ठितेः,, ।

इति, "यद्येवमिहापि घटपटशकटादिकार्येषु कर्तृविशेषस्य कुम्भकारादेर्व्यभिचारादप्रतिष्ठितभेदमेव कार्यमात्रं कर्तृमात्रस्य व्याप्तं हेतुत्वेन सिद्धमिति न व्याप्तेरप्यसिद्धिः, प्रतिबन्धमूलैव हि व्याप्तिरिति व्याप्तिविदः,, सत्यम्, यदि प्रतिबन्धो भवेत्, दृष्टान्ताधीनैव तत्र व्याप्तिः, सा च तत्पुत्रादेः श्यामत्वानुमानवद्व्यभिचारिण्येवेत्यननुमानम्, इदमपि चिकित्सकोपदेशवत् श्रद्धेयमेव, प्रतिबन्धो हि धूमाग्न्यादेरिवात्रापि प्रत्यक्षसिद्ध

एव, धूमाग्न्योर्हि कार्यकारणभावो न दृष्टान्तसिद्धप्रत्यक्षानुपलम्भमन्तरेण कृतकत्वानित्यत्वयोर्वा तादात्म्यमनेकवृत्त्यनेकत्वयोर्वान्यतोऽवगम्यते, भवद्भिरपि संबन्धसाधकप्रमाणविषयतया च दृष्टान्तमात्रयोगेऽपि श्यामस्तत्पुत्रत्वादित्येवमादेरनुमानावस्करस्य व्यभिचारिता, तदत्राप्युपादानकारणस्येव कर्तुरपि कार्येण सह कार्यकारणभावो दृष्टान्ते प्रत्यक्षानुपलम्भप्रमाणसिद्ध इति तद्बलादेव सर्वस्य कार्यस्योपादानेनेव कर्त्रापि व्याप्तिः सिद्धेत्यव्यभिचारः, "यद्येवं दृष्टकर्तृकेष्वेव प्रतिबन्धसिद्धेः सा सिध्यति, नादृष्टकर्तृकेष्वन्यत्वात्,, प्रलापमात्रमेतत्, अन्यत्वमात्रस्य दृष्टकर्तृकेषु दृष्टाग्निसंबन्धेषु च धूमादिषु दर्शनेनानैकान्तिकत्वात्, "अथादृष्टकर्तृकतैव दृष्टकर्तृकेभ्योऽन्यत्वमुच्यते,, तदपि तथाभूतैर्घटादिकैरनैकान्तिकमेव, अथ तत्र घटादिरूपतयानन्यत्वम्, इहापि कार्यरूपतयेति न विशेषः, "ननु यज्जातीयो यतः सिद्धस्तत एव तस्यानुमानं युक्तम्, न विजातीयाद् वल्मीकस्तूपादेरिव कुम्भकारस्य, भिन्नजातीयं च दृष्टकर्तृकाददृष्टकर्तृकं कार्यमिति न ततः कर्त्रनुमानं युक्तम्,, न, तेन रूपेण तेषां भेदासिद्धेः, इत्युक्तम्, कृतकत्वेनेव शब्दघटादीनाम्, सत्त्वेनेव वा सर्वपदार्थानाम्, नहि कृतकत्वस्यानेकविजातीयवस्तुभिन्नेनानित्यत्वेन तादात्म्यं सत्त्वेन वा क्षणिकत्वस्य भवतामुपपद्यते, "ननु तेन रूपेण तेषां समानतैव न विजातीयता,, "ननु विरुद्धमेतद् विजातीयमेव सजातीयमिति,, न, धर्मभेदाच्छाबलेयबाहुलेयाविव, गोत्वे च तर्ह्येतदेव साधु, यस्य यथाभूतेन सह प्रतिबन्धः सिद्धः स तथाभूतमेव प्रतिबन्धबलाद् गमयति, किमत्र सजातीयत्वेनेति, यदुक्तं भवद्भिरपि,

"यदीदं स्वयमर्थानां रोचते तत्र के वयम्,, ।

इति, अतश्च वल्मीकस्तूपादेः कुम्भकारव्यभिचारेऽपि चेतनायुक्तकर्त्रव्यभिचारोऽस्त्येवेति तत्रापि स एव साध्यः । किंच, कात्र जातिरभिप्रेता, यदपेक्षया सजातीयत्वासजातीयत्वव्यवहारः, "ननु भवतामिव सदृशतैव,, यद्येवं सत्त्वेनेव सर्वभावानां कार्यत्वेन सर्वकार्याणां सदृशत्वमिति तदेवाविनाभावात् कर्तृसिद्धौ हेतुरुच्यत इति यज्जातीयो यतः सिद्धस्तज्जातीयादेवात्र कर्तानुमेय उक्तो न विजातीयाद्वा तच्छब्दमात्रवाच्यादिति वा सिद्धता, "कथं तर्हि पाण्डुत्वादेरपि नाग्निजन्यता,, तदभावेऽपि मल्लोलादिषु तस्य दर्शनात्, सत्त्वस्येवाकार्यभूतेष्वात्मादिषु, नचाकर्तृकं किंचित् कार्यं सिद्धं येन तत्र वर्तमानस्यास्य हेतोर्व्यभिचारः संभाव्यते, पर्वततृणादेरप्यदृष्टकर्तृकत्वेन सिद्धेरुक्तत्वात्, इति न पाण्डुत्वादेर्वह्निजन्यत्वमिव कार्यत्वस्य कर्तृजन्यत्वमसिद्धमिति ॥

"अथ यथाभूतेनैव यस्य प्रतिबन्धः सिद्धस्तथाभूत एव तस्मादनुमीयत इत्ययमेव ग्रहः,, तत्राप्याह ।

(८) नच यद्व्यक्तिसंबन्धा व्यक्तिर्यैवेह संमता ।
तस्या एवानुमानं स्यात् पुनस्तदुपलब्धितः ॥

यद्येवं सकलसजातीयविजातीयव्यावृत्तेन स्वलक्षणेनैवाग्न्यादिना महानसादौ धूमादेः स्वलक्षणस्यैव प्रतिबन्धः सिद्धः, तस्य चाननुयायित्वाच्च धर्मान्तरेऽनुमानं संभवति, नापि तत्रैव प्रत्यक्षसिद्धेरनुमानायोगात्, इति निवृत्तेदानीमनुमानवार्ता, जितं प्रत्यक्षैकप्रमाणवादिना, सामान्यविषय एवानुमानं प्रमाणं कार्यमिहेत्यतोऽप्यस्य नासिद्धता ॥

"अन्ये तु शरीरयुक्तकर्तृपूर्वकत्वादिसाधनाद्धर्मविशेषविपरीतसाधनोऽयं विरुद्धः, शरीरयुक्तकर्तृपूर्वकत्वेनैव घटादौ दृष्टान्तेऽस्य हेतोर्व्याप्तिसिद्धेरित्याहुः,,

"यथासिद्धेन दृष्टान्ते भवेद्धेतोर्विरुद्धता ।
अनीश्वरविनाश्यादिकर्तृकत्वं प्रसज्यते ॥
शरीरादेर्विना चास्य कथमिच्छापि सर्जने ।
शरीराद्यथ तस्य स्यात् तस्योत्पत्तिर्न तत्कृता,, ॥

इति, एतदेव प्रतिक्षिपति ।

(९) सिसाधयिषतां न्यायः साध्यधर्मविपर्ययम् ।
परेषां हि शरीरादेर्दृष्टेनैव निवार्यते ॥

साध्यधर्मस्याशरीरकर्तृपूर्वकत्वस्य विपर्ययं कार्यत्वादेवास्माद्धेतोः साधयितुमिच्छतां परेषां तनुकरणादेर्धर्मिणः स विरुद्धसाधनन्यायः प्रत्यक्षेणैव निवार्यते, स्वकायकारणस्पन्दादेः कार्यस्य शरीरान्तरं विनैवेच्छायुक्तकर्तृपूर्वकत्वेनान्तरस्पर्शनेन्द्रियस्वसंवेदनप्रत्यक्षाभ्यां सिद्धेः कार्यत्वं सर्वत्राविनाभावात् तावन्मात्रमेवागमयति, नतु शरीरयुक्तकर्तृपूर्वकत्वमपि, व्यभिचारात्, तत्र धर्मविशेषविपरीतसाधनोऽयं हेतुरित्यर्थः, अन्यथा कृतकत्वादयोऽपि शब्दादौ घटादिवत् पृथुबुध्नोदराद्यविनाभावेनानित्यत्वं गमयेयुः, धूमादयश्च पर्वतादावपि महानसादाविवापर्वतवर्तिनं वह्निम्, इति सर्वस्य धर्मविशेषविपर्ययसाधनत्वाद्धेतुत्वाभावप्रसङ्गः, अथ तत्र य एवाव्यभिचारी धर्मः स एव साध्यो नान्यो व्यभिचारादित्युच्यते, तदिहापि समानमित्यविरुद्धता, "ननु क्षणिकत्वादर्थानामत्रापि पूर्वदेहक्षणसहकारिणो देहिनो देशान्तरे देहिक्षणोऽन्य एवोत्पद्यते, नतु कार्यं देहयुक्तकर्तृपूर्वकत्वं व्यभिचरतीति विशेषविरुद्ध एवायमिति कश्चित्, यदाह धर्मकीर्त्तिरपि,

"तस्मात् पृथगशक्तेषु येषु संभाव्यते गुणः ।
संहतौ हेतुता तेषां नेश्वरादेरभेदतः,, ॥

इति,, सत्यम्, यदि क्षणिकत्वमस्य स्यात्, तत् तु प्रतिक्षिप्तमात्मसिद्धौ, तत्प्रतिक्षेपमूलत्वात् तस्याः, अपिच शक्तताभिधानस्वभावस्यैव भवतः सर्वत्र तदभिधानं दौर्भाग्यमेव प्रकाशयति, क्षणिकत्वे क्रियायाः संभवाभावेन कर्तृत्वस्याप्यसिद्धेः, कोऽसौ धर्मो यस्य विशेषविपर्ययसाधनतानिराकृते हि क्षणिकत्वे सिद्धेऽभ्युपगते वात्मनि कर्तृत्वे वेश्वरपरीक्षाप्रस्तावो युक्तः, नान्यथा, तन्मध्ये तु क्षणिकाश्रयो विकल्पोऽभ्युपगमनिराकृत एव, "ननु स्थैर्येऽपि तद्विषयत्वात् स्पन्दक्रियायाः शरीरं तस्यापेक्षणीयमेव,, बालप्रलपितमेतत्, घटादिवद्धि कार्यतया तदपेक्षणीयं नतु शरीरतया, "नन्वचलद्वस्तु चलदवस्थानिवृत्त्यर्थं तदपेक्षणीयमेव,, "नन्वशरीरस्य ज्ञानक्रिययोरनुपपत्तिः, यदाह कुमारिलः,

"अशरीरो ह्यधिष्ठाता नात्मा मुक्तात्मवद्भवेत्,,।

इति,, तदयुक्तम्, नहि दृष्टेऽनुपपन्नं नाम, तथा दृष्टान्तः साध्यधर्मासिद्धः, मुक्तात्मनां सर्वज्ञत्वयुक्तेश्वरसमत्वाभ्युपगमात्, तर्हि विज्ञानकैवल्यादिवद्भविष्यति, न तेषामशरीरत्वं तथात्वहेतुरपितु मल एवेत्युक्तमन्यत्र,

"योग्यश्चायमदेहत्वादिन्द्रियाद्यप्रसिद्धितः,, ।

इति, एतदेव शब्दान्तरेणाह, तेनापि मीमांसकोपपत्त्युपजीवित्वप्रसिद्धिः केवलं बौद्धानां प्रकाशिता भवति, नाधिकं किंचित्, यदाहुः,

"पूर्वपक्षेषु तैरुक्ता या जघन्योपपत्तयः ।
ताभिर्दुर्लभलब्धाभिर्मत्ता वल्गन्ति भिक्षवः,, ॥

इति, कथं वा कार्यकारणाद्यभावे जिनस्य सर्वविषयं ज्ञानमिष्यते भवद्भिः, "ननु तस्यापि शरीरमस्त्येव,, तत् किं कर्मजमकर्मजं वा, कर्मजशरीरयोगेऽस्मदादीनामिवासर्वज्ञता, अकर्मजं तु शरीरमवह्न्यादिभ्यो धूमादीव नियतकारणजन्यत्वान्न संभवत्येव, "ननु करुणया तस्य शरीरं भविष्यति,, सत्यम्, यदि तस्यास्तत्र हेतुत्वं प्रत्यक्षतोऽनुमानाद्वा सिद्धं भवेत्, "नन्वागमाद्भविष्यति,, यदुक्तम्,

"तृतीयस्थानसंक्रान्तौ न्याय्यः शास्त्रपरिग्रहः,, ।

इति, सत्यम्, यदि प्रत्यक्षानुमानविषयस्थानद्वयेऽस्य विशुद्धिः स्यात्, सा तु नास्तीत्युक्तमात्मसिद्धौ, "ननु दयानुबन्धात् तस्यास्तृष्णादेरिव शरीरहेतुत्वम्,, तर्ह्यविद्यान्वयात् पुद्गलस्येव कारुणिकस्याप्यसर्वज्ञता, "ननु निर्माणशक्त्यैव तस्य शरीरमिति बौद्धाः,, न तर्हीश्वरासिद्धिः, "ननु तथापि तस्य शरीरमस्त्येव यद्यर्थप्रतिपत्त्युपायतया,, तर्ह्यस्मदादिवत् सोऽपीन्द्रियादिपरतन्त्रबोधत्वादसर्वज्ञ एव, नहीन्द्रियाणां सर्वार्थता संभवति, प्रदीपादिवत् परिमितार्थप्रकाशकत्वसिद्धेः, "ननु भावनाबलतो विनिवृत्तसमस्तचित्तदोषस्येन्द्रियानपेक्षयैव सर्वार्थदर्शिनोऽप्यधिष्ठानमात्रे न शरीरमुपयुज्यत एव,, यद्येवं कुड्यादेरविशिष्टं तत्र शरीरतामासादयति, यदाहुः,

"सांनिध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।
निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः,, ॥

शरीरानपेक्षयैव तस्य सर्वविषयं ज्ञानम्, इच्छामात्रेण च निर्माणकायादौ कर्तृत्वम्, अन्यस्यापि च मञ्जुश्रीप्रभृतेः सातिशयस्याभ्युपगतमेव भवद्भिरिति, तद्वद्भगवतोऽपि विश्वाधिष्ठानादिश्वरकार्यत्वसिद्धेर्न धर्मविशेषविपरीतसाधनता, नापि कुम्भकारात्मनोऽनीश्वरत्वम्, ज्ञत्वकर्तृत्वात्मकत्वादीश्वरत्वस्य कुम्भकारादावपि स्वकार्यविषयस्य भावात्, नहि तस्य तत्र ज्ञानाभावे कर्तृत्ववैकल्ये वा कुम्भकर्तृत्वं संभवत्यकुम्भकारस्येव, नापि विनाशित्वमात्मनः, प्राङ्नित्यत्वस्य साधितत्वात्, तत्र, दृष्टान्तेऽप्यनीश्वरविनाश्याद्यपि सिद्धम्, अतो नेत्थमपि विशेषविरुद्धता, एतेन,

"इच्छानन्तरवृत्तिस्तु दृष्टान्तेऽपि न विद्यते ।
अचेतनः कथं भावस्तदिच्छामनुवर्तते,, ॥

इत्येतदपि प्रत्युक्तम्, स्वदेहस्पन्दादौ कुम्भकारादेस्तथैव दृष्टत्वात्, "अथ शरीरादन्यो घटादिर्नेच्छानन्तरवृत्तिर्दृष्ट इत्युच्यते,, तदप्ययुक्तम्, इच्छया विना तस्याप्यसिद्धेः, नह्यनिच्छुरन्येच्छुर्वा कुम्भकारो घटं वर्तयन् दृष्टः, "नन्विच्छामात्रस्य तत्राहेतुत्वम्,, शरीरादेरप्यपेक्षणात्, किमतः, नहि सहकार्यपेक्षा कारणस्य कार्यतां विहन्ति, कर्मणो धर्मादेः सुखादाविव शरीराद्यपेक्षेति सैव सर्वत्राव्यभिचारिणीति कार्यादनुमीयते, "नच शरीरादन्येष्विच्छया करणमसिद्धमेव,, सिद्धमन्त्राणामिच्छयैवाहिविषाग्न्यादिष्वन्यथाकरणदर्शनात्, इति वक्ष्यत्याचार्यः स्वयमेवोत्तरकाण्डे, प्रोक्तं च सौगतैः,

"मन्त्राद्युपप्लुताक्षाणां यथा मृच्छकलादयः ।
अन्यथैवावभासन्ते तद्रूपरहिता अपि,, ॥

यद्वा, ईश्वरः स्वशरीर एव स्वनिर्माणकायान्तराधिष्ठानेन पूर्वं स्वशरीरमुपसंहृत्य जगत्कृत्यं संपादयति, अनादिर्हि तस्य परपुरप्रवेशिन इव शरीरप्रबन्ध इत्यपि तत्रैवाचार्यो वक्ष्यति, अतश्च यदुक्तम्,

"अनेकान्तश्च हेतुस्ते तच्छरीरादिना भवेत् ।
उत्पत्तिमांश्च तद्देहे देहत्वादस्मदादिवत्,, ॥

इत्येतदप्यपहस्तितमेव, तच्छरीरस्य संनिवेशवत्त्वेऽपि नित्यत्वानभ्युपगमात्, इति मायागर्भेश्वराणांच शरीरयोगेऽप्यैश्वर्यमिष्यत एव, यदुक्तमाचार्येण मोक्षकारिकासु,

"कलायोगेऽपि चावश्यः कलानां पशुसङ्घवत् ।
वश्यास्ताः पशुभिः सार्धं तेषां ते तदुपर्यतः,, ॥

इत्यविरोधः ॥

॥ अथ प्रसन्नराघवनामकनाटकस्य ॥

॥ द्वितीयोऽङ्कः ॥

॥ ततः प्रविशति तापसः ॥

तापसः । समन्तादवलोक्य । अहो अयमनेकशुकशावकानुगमनिकामहरिल्लतावितानमनोरमारामरमणीयसंनिवेशप्रदेशः । नेपथ्याभिमुखमवलोक्य कथमयं भिक्षुः । भिक्षो इतइतः ।

प्रविश्य भिक्षुः । अपि कुशलं तापसस्य ।

तापसः । क्षेममस्माकं युष्माकं च कुशलम् ।

भिक्षुः । इदानीं विशेषतो भवद्दर्शनात् ।

तापसः । पुनः सप्रणयम् । ननु कीटवन् महीपर्यटनेन श्रान्तो भवान् । तदिह मिथिलायां पञ्चरात्रनिवासेन श्रमोऽपनेतव्यः । प्रसङ्गादयं च राजा जनको द्रष्टव्यः ।

भिक्षुः । किमस्माकं निरीहाणां राजदर्शनेन ।

तापसः । नूनमयं ब्रह्मविद्याविनोदकुशलः खलु सीरध्वजस्तेन द्रष्टुमुचित एव भवादृशाम् ।

भिक्षुः । अये राजापि ब्रह्मविद्यावानिति सत्यमेतत् ।

तापसः । भिक्षो सत्यमेतत् । देवस्य दश इत्यद्वौक्ते देवस्य शितिकण्ठस्याज्ञा ।

भिक्षुः । विहस्यालमपलापेन । विदितं मया राक्षसः खलु भवान् ।

तापसः । तत् कथय विश्रब्धं को भवानिति ।

भिक्षुः । अहमपि भवादृश एव कोऽपि राक्षसः ।

तापसः । तदाकर्ण्यताम् । अहं हि सकलमन्त्रिमुकुटमाल्येन माल्यवता प्रहितस्ताटकावनम् । आकर्णितं हि तेन यत् किल कोऽपि कौशिको नाम मुनी राजानमयोध्यापतिमेत्य स्वमखरक्षणाय तस्य रामनामानं तनयं सानुजं याचितवान् । तेन च वश्यं माननीयो मुनिरिति निजनयनाभ्यामपि प्रियतमौ निजतनयौ तस्य समर्पितौ ।

भिक्षुः । ततस्ततः ।

तापसः । ततस्तेन मुनिना पारितोषिकं ताटङ्कयुगमर्पितं तस्य राज्ञः । उक्तं च राजन् दिव्यमिदं ताटङ्कयुगम् ।

तदिदं वीरसूकर्णनिवेशोचितमित्यसौ ।
अन्तःस्फुरन्ती रत्नानां वर्णमालेव शंसति ॥

तेन च कौशल्याकर्णयोर्निवेशनीयमिति । अनुमतं च राज्ञा । राजकुमारद्वयानुगतेन निजाश्रमपदं प्रति गतं च मुनिना ।

भिक्षुः । ततस्ततः ।

तापसः । तदिदमाकर्ण्य तत् ताटङ्कयुगं लङ्केश्वरजनन्या निकषाया एव कर्णोचितमिति विचिन्त्य तदाहरणाय पूर्वमेव ताटकां प्रति निजानुचर एकः प्रस्थापितः । अधुना च नूनं ताटकया तत् ताटङ्कयुगमाहृतमिति विचार्य तदानयनाय ताटकां प्रत्यहं प्रहितः ।

भिक्षुः । कथं पुनरिदं वृत्तान्तजातमाकर्णितं माल्यवता ।

तापसः ।

वार्त्ता च कौतुकवती विमला च विद्या
लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
मेतत् त्रयं प्रसरति स्वयमेव भूमौ ॥

विशेषतश्च बहुतरप्रणिधिप्रणिधायी माल्यवान् ।

भिक्षुः । तत् कथं मिथिलोपवने भवान् ।

तापसः । आकर्णितं हि मया मिथिलामागतो लङ्केश्वर इति । अतस्तद्विलोकनाय प्रथममिहागतोऽधुना च ताटकावनं यास्यामि । तत् कथय तावत् भवान् पुनः कतरः ।

भिक्षुः । अहमपि स एव यः प्रथमं ताटकां प्रति प्रहितो मिथिलोपवनागमनकारणं समानमावयोः ।

तापसः । सहर्षम् । तत् कथय तावत् तत् किं सताटङ्कमधुना ताटकावनम् ।

भिक्षुः । सताटकमिति तावत् पृच्छ ।

तापसः । क्व पुनः सम्प्रति ताटका ।

भिक्षुः । पुरीं प्रविष्टा ।

तापसः । तत् किं दशरथस्य ।

भिक्षुः । नहिनह्यन्तकस्य ।

तापसः । केन पुनः प्रतिहारायितमन्तकपुरीप्रवेशे तस्याः ।

भिक्षुः । रामबाणेनैव ।

तापसः । क्व एष रामः । विमृश्य नूनं स एव यः खलु दशरथकुमारयोरग्रजः । तत् कथय क्व पुनरधुना ताटकातनयौ ।

भिक्षुः । सुबाहुस्तावत् ताटकामेवानुगतः । मारीचोऽपि शिशुक्रीडोचितरामनाराचपीडितो जीवन्मुक्त इव दूरं क्षिप्तः ।

तापसः । तत् कथमिदानीं न कथितं केनापि लङ्केश्वरस्य ।

भिक्षुः । कथितमेव किलेदमाक्रन्दता मारीचेन ।

तापसः । तत् कथं कुपितो न लङ्केश्वरः ।

भिक्षुः । सीताभिलाषशीतले लङ्केश्वरचेतसि नारूढ एव कोपपरीतापः ।

तापसः । क्व पुनरधुना रामलक्ष्मणौ ।

भिक्षुः । श्रुतं मया कौशिकानुपदं तदाश्रमात् मिथिलां प्रति प्रचलिताविति । विलोक्य सत्रासम् । कथमिमौ तावित एवाभिवर्त्तेते तदस्य निशाचरवैरिणो रामस्य पुरतः स्थातुम-

नुचितमावयोरिति निष्क्रान्तौ ॥

॥ विष्कम्भकः ॥

ततः प्रविशतो रामलक्ष्मणौ ।

रामः । वत्स लक्ष्मण पश्यपश्यारामरामणीयकम् ।

लक्ष्मणः । आर्य निसर्गरमणीयोऽयमारामः । अधुना तु मधुमासावतारेण नितान्तरमणीयः ।

रामः । सहर्षम् । कथमवतीर्णैव मधुमासलक्ष्मीः । विमृश्य । एवमेतत् । तथाहि ।

इह मधुपवधूनां पीतमल्लीमधूनां
विलसति कमनीयः काकलीसंप्रदायः ।
इह नटति सलीलं मञ्जरी वञ्जुलस्य
प्रतिपदमुपदिष्टा दक्षिणेनानिलेन ॥

अपिच

मलयशिखरादाकैलासं मनोभवशासनाद्
भुवनवलयं जेतुं वाञ्छन् वसन्तसमीरणः ।
विहितवसतिं कैलासाग्रे भुजङ्गधरं हरं
मनसि विमृशन् भीतः शङ्के प्रयाति शनैःशनैः ॥

लक्ष्मणः । आर्याहं त्वेवं तर्कयामि ।

पथिपथि लतालोलावीचीभिः स्रवन्मधुसीकरं
कुसुमनिकरं वर्षन्तीभिः सहर्षमिवार्चितः ।
मधुकरवधूगीतासक्तं कुरङ्गकमास्थितः
प्रसरति वने मन्दंमन्दं वसन्तसमीरणः ॥

रामः । वत्सालमनेन । तद् यावदयं भगवान् विश्वामित्रस्तत्रभवतो याज्ञवल्क्यस्य समागमसुखमनुभवति तावत् तदीयसायन्तनदेवतार्चनोचितानि कुसुमान्यवचीयन्ताम् ।

लक्ष्मणः । बाढमिति लताविटपान्तरितः कुसुमावचयं नाटयति ।

रामः । विलोक्य कथमिदमितश्चण्डिकायतनं । अञ्जलिं बद्ध्वा मातः ।

करुणतरङ्गिणि विकसन्नयनामृतोर्मिसीकरिणि ।
तरुणतुहिनकरचूडामणिरमणि त्वां नमस्यामि ॥

पुनरन्यतो विलोक्य । अये इयमसौ मदकलकलहंसोत्तंसितसितसरोजराजिराजिता सरसी सरसीकरोति मे चेतः । पुनः सकौतुकम् । अये कथमयं नलिनीवनविहारिणीं सहचरीमपि विहाय कलहंसपोतश्चूतविटपान्तरालमनुसरति । कर्णं दत्वा । अये क एष मदकलकरिकनकशृङ्खलामणिरणितानुकारी मनोहारी कोऽपि कलकलः समुल्लसति । विमृश्य । नूनं राजहंससिञ्जितहारि मञ्जीरगुञ्जितमेतत् । तदवश्यमिह सलीलचलच्चरणरणन्मणिनूपुरया पुराङ्गनया कयाचन चण्डिकायतनमागच्छन्त्या भवितव्यम् । तदलमस्माकमितोऽवलोकनेन । परस्त्रीति शङ्कापि सङ्कोचाय रघूणाम् ।

नेपथ्ये । भर्तृदारिके इतइतः ।

रामः । कथमियं राजकुमारिका । तदालोकयामि तावत् । विलोक्य सहर्षकौतुकम् ।

केयं श्यामोपलविरचितोल्लेखहेमैकरेखालग्नैरङ्गैः कनककदलीकन्दलीगर्भगौरैः ।
हारिद्राम्बुद्रवसहचरं कान्तिपूरं वहद्भिः
कामक्रीडाभवनवलभीदीपिकेवाविरस्ति ॥

ततः प्रविशति सीता सखी च ।

सीता । हला पेक्खपेक्ख अज्ज इममुज्जाणं वसन्तसहअरेण सअं जेव्व मम्महेणालङ्किदं विअ अतिमेत्तं रमणिज्जं पडिहादि * ।

सखी । अनवद्याङ्ग्येवमेतत् ।

रामः । अये सर्वानवद्याङ्गीति वक्तव्यम् । नन्वस्याः

बन्धूकबन्धुरधरः सितकेतकाभं
चतुर्मधूककलिकामधुरः कपोलः ।
दन्तावली विजितदाडिमबीजराजि-
रास्यं पुनर्विकचपङ्कजदत्तदास्यम् ॥

पुनर्निर्वर्ण्य । अहो मुग्धाया अप्यस्याः प्रकृतिकमनीयपदार्थपरिशीलनौचित्यचातुरी । तथाहि । इयं हि

पदाभ्यामुन्निद्रामधरयति शोणाम्बुजरुचिं
कराभ्यामादत्ते नवकिसलयानामरुणताम् ।
प्रवालस्य च्छायां दशनवसनाग्रेण पिबति
स्मितज्योत्स्नापूरैरुपहसति कान्तिं हिमरुचेः ॥

सखी । भर्तृदारिके इदं तत् चण्डिकायतनम् ।

सीता । अञ्जलिं बद्ध्वा । देवि ससहरमौलिदेहाद्धधारिणि तिहुअणघरसुआसिणि णमोणमो दे † ।

सखी । समुचितैव प्रणामपरिपाटी ।

सीता । सप्रणयकोपम् । अलमलीअजप्पिदेण ‡ ।

सखी । अञ्जलिं बद्ध्वा ।

कान्तमिन्दुमणिदामकोमले
कोमलेन्दुमुकुटाङ्कशायिनि ।
इन्दुचारुमचिरेण विन्दता-
मिन्दुसुन्दरमुखी सखी मम ॥

* हला पश्यपश्याद्यैतदुद्यानं वसन्तसहचरेण स्वयमेव मन्मथेनालङ्कृतमिवातिमात्रं रमणीयं प्रतिभाति ।

† देवि शशधरमौलिदेहार्द्धधारिणि त्रिभुवनगृहसुवासिनि नमो नमस्ते।

‡ अलमलीकजल्पितेन ।

रामः । अये कथमस्याः परिणयमनोरथप्रणयी सखीजनः । विमृश्य । उचितमेतत् वयःसन्धौ खल्वियं वर्त्तते ।

तथाहि ।

अपक्रान्ते बाल्ये तरुणिमनि चागन्तुमनसि
प्रयाते मुग्धत्वे चतुरिमणि चाश्लेषरसिके ।
न केनापि स्पृष्टं यदिह वयसा मर्म परमं
तदेतत् पञ्चेषोर्जयति वपुरिन्दीवरदृशः ॥

सखी । अयि देवि सत्वरं मे पूरय मनोरथं यावदियं न दुर्मनायते सखी ।

सीता । सप्रणयकोपम् । किन्ति दुम्मणायिस्सम् * ।

लक्ष्मणः । अयि राजहंसकन्यके किमिति दुर्मनायसे । अयं ते चूतविटपान्तरितः कान्तः ।

सीता । हला कस्स इमो करिकलहकण्ठनिग्घोसमहुरो कण्ठसद्दो सुणिअदि । ता निरूवेह्म † ।

रामः । सविषादम् । कथमियमन्तरितैव लतया । लतां प्रति ।

स्तनविजितस्तबकश्रीरधराधरितप्रवालनवलक्ष्मीः ।
अयि लतिके तिरयन्ती तरलदृशं नावलम्बसे लज्जाम् ॥

पुनः सहर्षम् ।

श्यामच्छवीनामियमन्तराले
प्रादुर्भवन्ती कदलीदलानाम् ।
कलेव चान्द्री नवनीरदानां
चकोरवन्मां मुदितं करोति ॥

पुनः कदलीं प्रति ।

हे बालहेमलतिके ध्रुवमीहसे त्व-
मूरुश्रियं कलयितुं तरलायताक्ष्याः ।
एनां विलम्बय विलासवतीं चिरं हि
स्त्रीणां कलाः परिचिताः स्थिरतां प्रयान्ति ॥

सीता । हला को इमो कणअवण्णो सिहण्डिपिच्छमण्डितकण्णपूरो मुद्धत्तणविमुक्कलोअणविआरो कुमारो दीसदि । इमं पेक्खन्तीए मह णिअवच्छम्मि विअ वच्छत्तणपच्छालिअं हिअअं वट्टदि ‡ ।

लक्ष्मणः । अये केयमस्यां सुमित्रायामिव मे सुचिरप्रवृत्ता चित्तवृत्तिः ।

सीता । हला इमं कुमारं पुलोअन्तीए मह वच्छा उम्मिला चित्तमारुहदि * ।

सखी । विहस्य । नूनमयं कस्य चिद् वत्सशब्दलालनीयो भविष्यति । यं विलोकयन्त्या मे त्वमपि चित्तवृत्तिमारोक्ष्यसि । तत् पृच्छामि तावद् एनमिति परिक्रम्य । अये राजकुमार कः खलु भवान् यस्त्वमेक एव मुग्धतयाऽपरिशिलितास्वपि वनभूमिषु विहरसि ।

लक्ष्मणः । धिङ् मूर्खे कथं मामग्रजेन परिसरवर्त्तिना रामचन्द्रेण नाथवन्तमप्येकाकिनमपदिशसि ।

सखी । सहर्षम् । कुसुमितस्तदधुना मे मनोरथद्रुमः ।

सीता । हला किमेत्त अह्माणं ता एहि णिजघरं जेव्व वज्जह्म † । इति किञ्चित् परिक्रम्य पुनर्व्यावृत्य हला एक्कं विसुमरिदह्मि णं सो सहआरपादवो अवलोअणीओ जस्स वासन्दीलदाए सह सङ्गमं अहिलसन्ति मह अम्बाओ ‡ इत्युभे परिक्रामतः ।

रामः । सहर्षम् ।

मन्मनःकुमुदानन्दशरत्पार्वणशर्वरी ।
अहो इयमितो नूनं पुनरप्यभिवर्त्तते ॥

निर्वर्ण्य ।

वहत्यस्या दृष्टिर्विकचनवनीलोत्पलतुला-
मखण्डस्याभिख्यां वदनमिदमिन्दोः कलयति ।
कुचौ किञ्चिन्मीलत्कमलतुलनां कन्दलयत-
स्तमःशोभां चित्रां चिकुरनिकुरम्बं हि कुरुते ॥

सखी । एष सहकारपादप इयञ्च वासन्ती लतेति तदन्तिकमनुसरतः ।

रामः । कथमिमे मे परिसरमनुसरतः । तत् किञ्चिदपसरामि तावत् ।

सखी । सहकारशाखां करे धृत्वा सकौतुकम् । हला पेक्ख पेक्ख इमेहिं नहसिहाविलिहिदेहिं कोमलदलेहिं सम्भावीअदि जं किर इअं चूदलदा केणावि विदद्धेण णिअहत्थेण सम्भाविदेत्ति । अहवा णिअचावलदासङ्किदेण सअं मम्महेणेवेति § ।

रामः । इत्थं सम्भावयति भवती मम पुनरन्यथा वितर्कः ।

मत्वा चापं शशिमुखि निजं मुष्टिना पुष्पधन्वा

---

* किमिति दुर्मनायिष्ये ।

† हला कस्यायं करिकलभकण्ठनिर्घोषमधुरः कण्ठशब्दः श्रूयते तन् निरूपयामः ।

‡ हला कोऽयं कनकवर्णः शिखण्डिपिच्छमण्डितकर्णपूरो मुग्धत्वविमुक्तलोचनविकारः कुमारो दृश्यते । इमं पश्यन्त्या मम निजवत्स इव वात्सल्यप्रक्षालितं हृदयं वर्त्तते ।

* इमं कुमारं विलोकयन्त्या मम वत्सोर्मिला चित्तमारोहति ।

† हला किमत्रास्माकं तदेहि निजगृहमेव व्रजामः ।

‡ हला एकं विस्मृतास्मि ननु स सहकारपादपोऽवलोकनीयो यस्य वासन्त्या लतया सह सङ्गममभिलषन्ति ममाम्बाः ।

§ हला पश्यपश्यैतैर्नखशिखाविलिखितैः कोमलदलैः सम्भाव्यते यत् किलेयं चूतलता केनापि विदग्धेन निजहस्तेन सम्भावितेति । अथवा निजचापलताशङ्कितेन स्वयं मन्मथेनैवेति ।

तन्वीमेनां तव तनुलतां मध्यदेशे बभार ।
यस्मादत्र त्रिभुवनवशीकारमुद्रानुकारा-
स्तिस्रो भान्ति त्रिवलिकपटादङ्गुलीसन्धिरेखाः ॥

सखी । भर्तृदारिके इयं वासन्ती लता । इदं च पश्य

वासन्तीरसबिन्दुं सुन्दरमिन्दिन्दिरा इह चरन्ति ।
चिरमन्दिरमरविन्दं मन्दमन्दं परिहरन्ति ॥

सीता । तदेव पठति ।

रामः । किमिदानीं लतान्तरवर्णनया । नन्वियमेव

निर्मुक्तशैशवदशा शिशिरा नवीन-
सम्प्राप्तयौवनवसन्तमनोरमश्रीः ।
उन्मीलितस्तननवस्तवका निकाम-
मेणीदृशस्तनुलता तनुते मुदं नः ॥

सखी । भर्तृदारिके पश्य । इयमसौ वासन्ती लता स्वयमेव सहकारपोतमालिङ्गितुं पुरःसरति ।

सीता । सप्रणयकोपम् । अये अलीअजप्पिणि दाणीं तुह परिसरं परिहरिअ अण्णदो गमिस्सम् * ।

रामः ।

अमलमृणालकाण्डकमनीयकपोलरुचे-
स्तरलसलीलनीलनलिनप्रतिफुल्लदृशः ।
विकसदशोकशोणकरकान्तिभृतः सुतनो-
र्मदलुलितानि हन्त ललितानि हरन्ति मनः ॥

सीता । विलोक्य सकौतुकम् । अम्मो ।

विसदृपेसलुप्पलप्पलासपुङ्खसामलो
महेससोम्मसेहरप्फुरन्तसोमकोमलो ।
लदाघरम्मि को इमो अणङ्गरूअखण्डणो
विलोअणाण देइ मे सुहं सिहण्डमण्डणो † ॥

सखी । भर्तृदारिके कथय कथं लतालोकनाद्विरतासि ।

सीता । अनाकर्णितकेन । तदेव पञ्चमस्वरं पठति ।

सखी । उपसृत्य । कथमियमन्यचित्तेव लक्ष्यते । क्व पुनश्चित्तमस्याः । रामं दृष्ट्वा साकूतम् । अये इदमस्याश्चित्तगजबन्धनालानम् । पुनः सीतां हस्ते धृत्वा भर्तृदारिके प्रणयमधुरोऽपि सखीजनः किमवधीर्यते । अथवोचितमिदम् । अधुना हि तवायं हृदयमधिवसति ।

सीता । स्वगतम् । कहं अवगदह्मि इमाए ‡ इति लज्जां नाटयति ।

सखी । स्वगतम् । कथमियं लज्जते । तद् अन्यतो नयामि । प्रकाशम् । कथमद्यापि हृदयं न मुञ्चति ते प्रणयकोपः ।

सीता । स्वगतम् । कोवमुद्दिसिअ इमाए भणिदं ण उण इमम् । प्रकाशम् । हला कहं तुह कुविस्सं केवलमण्णचित्तदाए ण सम्भाविदासि * ।

सखी । क्व तर्हि दत्तचित्तासि ।

सीता । आरामम्मि † ।

सखी । विहस्य । अहो ते चातुर्यं यत आकारप्रकटनेनैवाकारगुप्तिं कृतवत्यसि ।

सीता । सलज्जमधोमुखी तिष्ठति ।

रामः ।

उत्तरङ्गय कुरङ्गलोचने
लोचने कमलगर्वमोचने ।
अस्तु सुन्दरि कलिन्दनन्दिनी-
वीचिडम्बरगभीरमम्बरम् ॥

सखी । सप्रणयस्मितम् । भर्तृदारिकेऽलमालिजनेऽपि हृदयापलापेन । ननु विदितं मया ।

अत्र ते सखि शिखण्डमण्डने
पुण्डरीकरमणीयलोचने ।
श्यामतामरसदामकोमले
रामनामनि मनो मनोभवे ॥

सीता । हला पेक्खपेक्ख

मअणवहूणेउररवरमणिज्जं किम्पिकिम्पि कूजन्तो ।
माअन्दमुउलमहुरसमहुरमुहो महुअरो भमइ ‡ ॥

पुनः स्वगतम् ।

अयि पिबह लोअणाइं
पिअजणवअणारविन्दमअरन्दम् ।
अयि तरलाइं विआरह
पुणकह तुम्हे कह इमो अ § ।

इति रामं नयनाञ्चलेन सलीलमालोकते ।

रामः । निर्वर्ण्य ।

सर्वस्वं नवयौवनस्य भवनं भोगस्य भाग्यं दृशां
सौभाग्यं मदविभ्रमस्य जगतः सारं फलं जन्मनः ।

---

* अये अलोकजल्पिनीदानीं तव परिसरं परिहृत्यान्यत्र गमिष्यामि ।

† अहो विकसितपेशलोत्पलाग्रपुङ्खश्यामलो महेशसौम्यशेखरस्फुरत्सोमकोमलो लतागृहे कोऽयमनङ्गरूपखण्डनो विलोचनयोर्ददाति मे सुखं शिखण्डमण्डनः ।

‡ कथमवगतास्म्यनया ।

* कोपमुद्दिश्यानया भणितं न पुनरिमम् । हला कथं तुभ्यं कुपिष्यामि केवलमन्यचित्ततया न सम्भावितासि ।

† आरामे

‡ हला पश्यपश्य । मदनवधूनूपुररवरमणीयं किमपिकिमपि कूजन् माकन्दमुकुलमधुरसमधुरमुखो मधुकरो भ्रमति ।

§ अयि पिबत लोचने प्रियजनवदनारविन्दमकरन्दम् । अयि तरले विचारयत पुनः क्व युवां क्वायञ्च ।

साकूतं कुसुमायुधस्य हृदयं रामस्य तत्त्वं रतेः

शृङ्गारस्य रहस्यमुत्पलदृशस्तत् किञ्चिदालोकितम् ॥

सीता । स्वगतम् । पुनस्तामेव गाथां पठति ।

सखी । अयि भर्तृदारिके पश्य ।

दलदमलकोमलोत्पलपलाशशङ्काकुलोऽयमलिपोतः ।

तव लोचनयोरनयोः परिसरमनुवेलमनुसरति ॥

सीता । सहर्षमात्मगतम् । अपि लोअणाइं बद्धसप्पदाइं णं सुहोपसुदीयम् * ।

रामः । सप्रत्याशम् ।

अमृतमयपयोधिक्षीरकल्लोललोलैः

स्नपयति तरलाक्षी यत्र मां नेत्रपातैः ।

अपि भवतु सदायं सन्मुहूर्तः (विमृश्य सविषादम्)

कुतो वा मधुरविधुरमिश्राः सृष्टयो हा विधातुः ॥

प्रविश्य चेटी । भट्टदारिए भट्टिणीहिं आणत्तम्हि जं किर वत्सा जाणई झत्ति घरमाणीअ विचित्ताहरणेहिं मण्डीअदु जेण तीए साणंदं वअणारविन्दं पुलोअम्ह † ।

सीता । हण्डे कहं सिणेहमुद्धाओ मह अम्बाओ ‡ ।

चेटिका । भट्टदारिए कहं ण मुद्धाओ तुह अम्बाओ § ।

सीता । कहं उण मुद्धाओ मह अम्बाओ ‖ ।

चेटिका । जा तुमं णिसग्गलावण्णचन्दलेहां णेवच्छलच्छीलंछणेणालंकिदुमिच्छन्ति । तहा अ

अयि तुह मुहलेहा चन्दबिम्बे सणेहा

दसणकिरणलच्छी अच्छजोह्णासरिच्छी ।

कुवलयदलदोणीकन्दराए वहन्ती

तरलबहलमिट्ठी दुद्धधारव्व दिट्ठी ॥

ता आअच्छ गच्छम्ह णिअघरं जेव्व ¶ इति निष्क्रान्ताः स्त्रियः ।

रामः । सविषादम्, कथं नयनपथमतिक्रान्तेव कान्ता । पुनः सप्रत्याशम् ।

अप्याविरस्तु भूयोऽपि मम लोचनयोरियम् ।

दिवसेऽन्तर्हिता नक्तं चन्द्रिकेव चकोरयोः ॥

लक्ष्मणः । आर्येयमाविरस्ति ।

रामः । सहर्षं कथं पुनः प्राप्ता प्रेयसी । विलोक्य न तावत् नूनं किमप्यन्यदभिसन्धाय तदिदमुक्तं वत्सेन । उच्चैर्वत्स केयमाविरस्ति ।

लक्ष्मणः ।

मुग्धस्य केलिविजितस्मरचापयष्टे-

रातन्वती रुचिमतीव सुधाकरस्य ।

रागोद्धुरा स्फुटमुदञ्चिततारकश्रीः

सन्ध्याविरस्ति ननु कापि पतिंवरेव ॥

रामः । वत्सैवमेतत् । तथाहि

ज्ञात्वा प्रबुद्धकमलामखिलां त्रिलोकी-

मम्भोनिधेर्विशति गर्भमसाविदानीम् ।

अन्तःप्रसुप्तहरिनाभिसरोजबोध-

कौतूहलीव भगवानरविन्दबन्धुः ॥

लक्ष्मणः । आर्य दृश्यतामयमीषन्मुकुलितराग इव गगनाभोगः ।

रामः । एवमेतत् । इदानीं हि

प्राचीमालम्बमाने घनतिमिरचये

बान्धवे बन्धकीनां

सम्प्राप्ते च प्रतीचीं शशिकरनिकरे

वैरिणि स्वैरिणीनाम् ।

अर्धश्यामोपलार्धस्फटिकमिव दिशा-

मन्तरालं विधत्ते

कालिन्दीजह्नुकन्यामिलदमलजल-

स्यन्दसन्दोहमैत्रीम् ॥

पुनः सहर्षमङ्गुल्या दर्शयन् ।

एतत् कोककुटुम्बिनीजनमनःशल्यं चकोराङ्गना-

चञ्चूकोटिकपाटयोर्घटितयोरुद्घाटिनी कुञ्चिका ।

दग्धस्यापि नवाङ्कुरः स्मरतरोराद्रागसां प्रेयसी-

मानोद्दामगजाङ्कुशो विजयते मुग्धं सुधांशोर्वपुः ॥

लक्ष्मणः ।

कल्लोलक्षिप्तपङ्कत्रिपुरहरशिरःस्वःस्रवन्तीमृणालं

कर्पूरक्षोदजालं कुसुमशरवधूसीधुभृङ्गारनालम् ।

एतद् दुग्धाब्धिबन्धोर्गगनकमलिनीपत्रपानीयबिन्दो-

रन्तस्तोषं न केषां किसलयति जगन्मण्डनं खण्डमिन्दोः ॥

रामः । वत्सालमतिप्रसङ्गेन तदेहि सायन्तनत्रिदशार्चनोचितकुसुमोपायनेन भगवन्तं गाधिनन्दनमुपास्महे ।

॥ इति निष्क्रान्ताः सर्वे ॥

## ॥ द्वितीयोऽङ्कः ॥

---

* अपि लोचने बद्धषट्पदे ननु सुखोपश्रुतिरियम् ।

† भर्तृदारिके भट्टिनीभिराज्ञप्तास्मि यत् किल वत्सा जानकी झटिति गृहमानीय विचित्राभरणैर्मण्ड्यतां येन तस्याः सानन्दं वदनारविन्दं विलोकयामः ।

‡ हण्डे कथं स्नेहमुग्धा ममाम्बाः ।

§ भट्टदारिके कथं न मुग्धास्तवाम्बाः ।

‖ कथं न मुग्धा ममाम्बाः ।

¶ यास्त्वां निसर्गलावण्यचन्द्रलेखां नेपथ्यलक्ष्मीलाञ्छनेनालङ्कर्तुमिच्छन्ति । तथा च अयि तव मुखलेखा चन्द्रबिम्बे सस्नेहा दशनकिरणलक्ष्मीरच्छज्योत्स्नासदृक्षा कुवलयदलद्रोणीकन्दरायां वहन्ती तरलबहलमृष्टा दुग्धधारेव दृष्टिः । तदागच्छ गच्छामो निजगृहमेव ।

## ॥ श्रीपरमेश्वराय नमः ॥

॥ न्यायस्वरूपनिरूपणम् ॥

## ॥ ३ ॥ स्थालीपुलाकन्यायः ॥

अधिश्रीयमाणस्थालीपर्यग्रोदनैकदेशभूतोपरितनैकसिक्थ-निपीडनजनिततत्पक्कतानिश्चयेन सर्वेषां पुलाकानां तत्स्थालीगतानां पक्कतां यथा पाचका निश्चिन्वन्ति, एवमधीतग्रन्थविशेषस्य कतिपयतद्ग्रन्थीयविषयेषु परीक्षणं सकलतद्ग्रन्थीयविषयेषु परीक्ष्यस्य योग्यताया निश्चायकं भवति,एतदेव स्थालीपुलाकन्यायेन परीक्षणमिति व्यवह्रियते । ततश्च यत्किंचित्समुदायैकदेशवृत्तिधर्मविशेषनिश्चयेन स्वघटिततत्समुदायघटकेषु यावत्सु तद्धर्मप्रत्ययो न्यायार्थः ।

ननु सकलपुलाकपाकाविनाभूतोपरितनसिक्थपक्कताऽनुमापयेत् कृत्स्नसिक्थपक्कभावम् । एवमाम्रैकदेशरसास्वादनमपि तदीययावदवयवसमवेतमधुराम्लप्रभृतिरसनिश्चायकं भवेत् । सकलावयवसमवेतमाधुर्याद्यविनाभावादेकदेशमाधुर्यादेः । परन्तु येन केनचित् प्रयुक्तस्य वाक्यकदम्बस्य प्रामाण्यपरीक्षणाय तद्घटककतिपयवाक्यानां प्रमाणान्तरेण प्रामाण्यं प्रमाय सर्वस्य कदम्बस्य प्रकृतन्यायेन प्रामाण्यावगमो न सङ्गच्छते लौकिकानाम् । एवं तान्त्रिकाणामपि । तथाहि । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरित्यस्य प्रामाण्यं कुगतिप्रादयउपपदमतिङितिसूत्राभ्यां सुप्पदाननुवृत्त्याऽसुबन्तेनैव समासविधानेनाचार्यव्यवहारेण प्रकृतन्यायेनैव प्रमीयते वैयाकरणैः । नह्यीदृशस्थले सकलपुलाकपाकाविनाभूतोपरितनपुलाकपाक इव कतिपयवाक्यप्रामाण्यं तद्वाक्यघटितवाक्यकदम्बप्रामाण्याविनाभूतं येन तल्लिङ्गं स्यात् । लोहितो वह्निः,पटः पृथ्वी,घटः प्रमेयः,पवनः स्पर्शवानिति केनचित् प्रयुक्तस्य वाक्यकदम्बस्य वह्नौ लौहित्यस्य बाधेनाप्रामाण्येऽपि तद्घटकघटः प्रमेय इत्यादेः प्रामाण्यदर्शनेन स्वघटकप्रामाण्ये स्वप्रामाण्यव्यभिचरितत्वस्य स्पष्टत्वादिति चेत् ।

मैवम् । यत्र व्याप्तिनिश्चयादिघटितसामग्रीसम्भवस्तत्रैवैकदेशवृत्तिधर्मविशेषनिश्चयस्य समुदाये तादृशधर्मविशेषानुमापकत्वोपगमात् । अन्यत्र तु सम्भावकत्वमात्रेणैव न्यायोपन्यासस्याभियुक्तव्यवहारविषयतायाः स्वीकारात् । न्यायशरीरेऽपि समुदायवृत्तिधर्मविशेषनिष्ठोत्कटविषयतानिरूपकत्वेनैव प्रत्ययस्य प्रवेशेन सम्भावनाया अपि सङ्ग्रहस्य सुशकत्वात् । विषयतागतमौत्कट्यं च समानकोटिकसंशयीयविषयताव्यावृत्तः प्रवृत्तिनिवृत्त्यन्यतरप्रयोजकतावच्छेदकतावच्छेदको धर्मविशेषः । सच सम्भावनाया अपि प्रवृत्तिनिवृत्तिप्रयोजकत्वेन तदीयविषयतायामपि सुलभ इति दिक् ।

अस्मान्न्यायाद्दण्डापूपन्याये यो विशेषः स तदुपपादनावसर एव स्फुटीकरिष्यते ॥

## ॥ ४ ॥ देहलीदीपन्यायः ॥

शालाद्वयमध्यवर्त्तिदेहलीनिहितदीपः शालाद्वयं स्वकिरणमण्डितं करोतीति दृष्टान्तभूतो न्यायविषयः । दार्ष्टान्तिकभूतं न्यायोदाहरणं च रामायणीयम् । तथाहि ।

अस्त्रेणापि हि बद्धस्य भयं मम न जायते ।
पितामहमहेन्द्राभ्यां रक्षितस्यानिलेन च ॥

इति ।

अत्र रक्षितस्येत्येतत् पूर्वोत्तरान्वयि । अन्यच्च । एकाच उपदेशेऽनुदात्तादितिसूत्रस्योपदेशपदार्थस्यैकाच्पदार्थेऽनुदात्तपदार्थे चान्वय इति । एवमुदाहरणान्तराण्यपि स्वयमुन्नेयानि । अयं च न्यायोऽन्वयविषय एव प्राय उदाह्रियते वृद्धैरिति बोध्यम् ॥

अनेन समानोदाहरणतया समानफलकोऽपि विषयान्तरमवलम्बमानः

## ॥ ५ ॥ मध्यमणिन्यायः ॥

नासिकाभूषणमौक्तिकयोर्मध्ये संयोजितो लोहितको मणिर्मौक्तिके स्वप्रभया भूषयतीति प्रसिद्धम् । उदाहरणानि प्रदर्शितान्येव । इति ॥

अनयोरपेक्षयाऽपर एष ईषद्विशेषशाली

## ॥ ६ ॥ काकाक्षिगोलकन्यायः ॥

काकस्यैकमेवाक्षिगोलकमुभाभ्यामप्यक्षिभ्यां चाक्षुषप्रत्यक्षोपजनने उपकारकं भवति । तत्र पूर्वापेक्षयायं विशेषो यत् तदुपकाराय तत्रतत्र गोलकस्य गमनमपेक्ष्यते । दीपादिस्तु निर्व्यापार एकत्र स्थित एवोभयोरुपकरोतीति । अत एवैकं नानेति रीत्या यत्र नानाधर्मावच्छिन्ननानाविशेष्यतानिरूपितैका प्रकारता यथा घटपटावित्यादौ नैयायिकमते द्वित्वस्य,यथा वैकत्र नानेति रीत्या नानाप्रकारतानिरूपितैका विशेष्यता घटोऽस्तीत्यादौ धात्वर्थनिष्ठप्रकारतया सङ्ख्यानिष्ठप्रकारतया च निरूपिता घटस्य,तथाविधस्थले घटः सुन्दरः पटश्च, नीलो घटः सुन्दरश्च, इत्यादावेव देहलीदीपन्यायमध्यमणिन्याययोर्विषयः । नतु निरूपकविशेष्यतादिभेदेन नानाप्रकारतादिप्रयोजके चैत्रो गच्छति मैत्रश्चेत्यादौ । यथा वा ।

यथा शची महाभागा शक्रं समुपतिष्ठति ।
अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥

इत्यादौ । ईदृशस्थले काकाद्यनुरुन्धानस्य गोलकस्येव

निरूपकविशेष्यतादिभेदानुरोधेन स्वप्रयोज्यविषयताभेदं प्रयोजयतः पदस्य काकाक्षिगोलकन्यायोदाहरणताया एवौचित्यात्। निरूपकविषयतादिभेदेन विषयताभेदप्रयोजकत्वस्यैव व्यापारस्थानीयत्वेन कल्पनात्। अस्य मूर्द्धाभिषिक्तमुदाहरणं तु

या भाति लक्ष्मीर्भुवि मन्दरस्था
यथा प्रदोषेषु च सागरस्था।
तथैव तोयेषु च पुष्करस्था
रराज सा चारु निशाकरस्था॥

इति।

अन्यच्च

कृताश्च वैदूर्यमया विहङ्गा
रूप्यप्रवालैश्च तथा विहङ्गाः।
चित्राश्च नानावसुभिर्भुजङ्गा
जात्यानुरूपास्तुरगाः शुभाङ्गाः॥

इति,

अत्रामध्यपतितस्यापि क्रियापदस्य सर्वत्र सम्बन्धः। अत्रायमपि विशेषः पूर्वन्यायापेक्षयाऽवगन्तव्यः॥ इति॥

॥ ७ ॥ वृद्धब्राह्मणवरन्यायः ॥

आसीत् कश्चन जात्यन्धोऽत्यन्तं दरिद्रोऽजातविवाहो वृद्धो ब्राह्मणः स च नानाविधैर्दुःखैर्बलवत् पीडितस्तीव्रतपश्चरणेन परमेश्वरमाराधयामास। तस्य च तपसा प्रीतः परमेश्वरः स्वाभीष्टमेकं वरं याचस्वेति तं प्रेरयामास। ततः स ब्राह्मणो यदि चक्षुष्मत्त्वं याच्यते तर्हि दारिद्र्यपीडा स्यादेव, तथा भार्यायां याचितायामपि दारिद्र्यान्धत्वसन्तत्यभावाः पुनर्दुःखं जनयेयुः, एवं धने याचितेऽप्यन्धत्वादीनीति, किं याचनीयमिति चिन्तासमाकुलो भूयो विचार्येदं प्रार्थयत्, स्वपौत्रं राजसिंहासनस्थितमीक्षितुमिच्छामीति। अथ च तस्य बुद्धिकौशलतः परमप्रीतेन परमेश्वरेण वरप्रदानेनानुगृहीतो धनं चक्षुषी मनोज्ञां भार्यां सन्ततिं च प्राप्यात्यन्तमाननन्देति भवतीतिहासः।

ततश्च यत्किंचित्पदार्थसिद्धिनान्तरीयकत्वं यस्य पदार्थस्य तेन तस्याऽऽक्षेपो न्यायार्थः पर्यवस्यति।

अस्योदाहरणं न मुन इति सूत्रस्थमहाभाष्ये नाभावे कृते मुभावो नासिद्ध इत्येवार्थं तस्य स्वीकृत्य नाभावप्रवृत्तिप्रतिबन्धकासिद्धत्वाभावकल्पनं विना कृतनाभावकलक्ष्यस्यासम्भवेनासिद्धत्वाभावविधानानुपपत्त्या नाभावे कर्त्तव्येऽप्यसिद्धत्वाभाव आक्षिप्यत इत्यभिहितं, तदेकम्।

अन्यच्च। प्राचीनवैयाकरणैर्भट्टोजिदीक्षितादिभिर्ठकि लोप इति सूत्रेण ठक्परकपितृष्वसृशब्दान्त्यलोपविधानान्यथाऽनुपपत्त्या पितृष्वसृशब्दाड्ढगाक्षिप्यते इति।

यथावा।

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत्।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते॥

इति प्रीतिदत्तस्याविभाज्यतां बोधयता वचनेन पितुरसाधारणं स्वत्वमाक्षिप्य दायमात्रस्य सप्रतिबन्धत्वमुपपादितं पूर्वपक्षिणा। तदेतदपि प्रकृतन्यायोदाहरणं भवितुमर्हतीत्यलम्।

काशिकपाठशालायाम्
धर्मशा॰ राजारामशास्त्री
साङ्ख्यशा॰ बालशास्त्री

## THE SA'HITYA-DARPAṆA,

OR

## MIRROR OF COMPOSITION.

*(Continued from page 115.)*

TEXT.

No. 707. When from blame and praise expressed, are understood praise and blame respectively, it is termed Artful Praise *(vyája-stuti)*.

COMMENTARY.

*a.* When praise is understood from *apparent* blame, the etymology of the term 'vyája-stuti' is to be explained thus 'vyájena stutih,' or praise BY an artifice; and when blame is understood from *an apparent* praise, it is to be interpreted 'vyája-rúpá stutih' or praise CONSISTING in an artifice or trick.

*b.* For examples in their order:—

"With pearl-necklaces on their breasts (but, under the pun,—with breasts divested of ornaments), with the hairs of their bodies erect *from joy* (with their bodies covered with thorns), the women of thy enemies, O king, have become as secure (widowed) at thy anger as ever."*

The stanza is mine.

*c.* "This, O Cloud, is but a false encomium I have bestowed upon thee—'thy waters are the life of the world.' But this indeed is a great praise to thee, that thou renderest assistance to the Lord of Justice (Yama—the god of death), by killing the way-farers *separated from their beloved.*"

TEXT.

No. 708. Periphrasis is when the fact to be intimated is expressed by a turn of speech.

COMMENTARY.

*a* For example:—

"—Whose troops in the Garden of Bliss *(nandana)* touched, with contempt, the flower-bunches of the *Pári-játa* tree,—fondly cherished for the adornment of S'achí's tresses."

* Here, observes the commentator, the apparent blame of the king consists in representing him as causing pain to women, and the praise intimated is that he is victorious over his enemies.

Here, what is in question and to be intimated, *viz* the fact, in the shape of a cause, of India's Heaven being conquered by Hayagríva, is expressed through the effect *viz*, the troops scornfully touching the flower-bunches of the *Párijáta*,—for the purpose of giving particular strikingness to the description Nor is it that variety of the Indirect Description in which a cause is understood from an effect (§706 *d*), since in that the effect is not in question, whilst in the present figure the effect equally with the cause is in question, as indicating the greatness of the power of the subject of description.

*b*. Similarly.—

"He restored to the fair ladies of his foemen their necklaces without the binding thread, as he caused tears to trickle down their breasts in drops large like pearls."

Here the effect—the tears of the enemies, as indicating the great prowess of the king who is the subject of description, is as much connected with the question as the intimated cause—the killing of the enemies: so the figure is no other than the Periphrasis.

*c*. "'The princess, O king, does not teach me to speak; the queens too are silent; feed me hump-backed girl; are not the princes and ministers taking their food yet?' —thus, the royal parrot, of the enemy's palace, let loose from the cage by the passengers, speaks, one by one, to the pictured personages in the empty turret."

Here, the *cause of this state of things* is in question, what is meant to be said being—'The enemies have suddenly fled away, having heard your majesty was ready to march.' *With respect to the present example, cited in the Kávyapraká́sa in illustration of the Indirect Description*, some say that the effect too is in question, as being fit to be described *in connection with the subject-matter, the cause*. Others, however, declare that the figure is no other than the Indirect Description, inasmuch as the inexpressibly *great* prowess of *the monarch* in question is understood from the account of the royal parrot, *which is not connected with the subject*.

TEXT.

No. 709. When a general is strengthened by a particular or a particular by a general, and when an effect is justified by a cause, or *vice versâ*,—either under a correspondence or a contrast—, it is Transition *(arthántara-nyása)*, and is thus eightfold.

COMMENTARY.

*a*. For examples in their order:—

"The meanest creature, assisted by one that is great, attains to the consummation of a deed. The rivulet of the mountain, united with a great river, reaches the *mighty* ocean."

Here, the generality, implied in the first half *of the stanza*, is confirmed by a particular *illustration*, implied in the second half.

*b*. "Thus having discoursed in words that did not exceed the sense, Mádhava (Krishna) ceased; for the great are, by nature, of measured speech"

*c*. "Be firm, O Earth!; O Serpent sustain her; thou, Royal Tortoise, uphold them both; ye Elephants of the Quarters, exert your energy to support the three —my venerable *brother* is about to string Mahádeva's *mighty* bow!"

Here, the cause, or occasion, *viz*, the stringing of Mahádeva's bow is what justifies the effect or consequence, viz, earth exerting herself to be firm, &c.

*d*. In the stanza—"One ought not to perform an act rashly: indiscretion is the great resting-place of evils. And Prosperity, attracted by merit, chooses, of her own accord, the man who does prudently"—the effect, *viz*, Prosperity's choosing *the prudent man*—justifies the cause, *viz*, the opposite of heedless proceeding, or prudence. These are examples *of the cases resting* upon Correspondence (see text).

*e*. The cases of Contrast; as—

"Served, as he is, thus, *by us Deities*, he (the demon Táraka) still torments the triple world: It is evil requital, not beneficence, that pacifies the wicked soul."

Here a particular is strengthened by a general, under a contrast. Similarly of others.

TEXT.

No. 710. When a reason is implied in (1) a sentence or (2) a word, it is termed Poetical Reason.

COMMENTARY.

*a*. Of these, the case of *a reason* being implied in a sentence; as—

"The blue lotus, which was like thy eyes in loveliness, is *now* sunk under water; that moon, my love, which imitated the fairness of thy face, is mantled over by clouds; those royal swans too are gone (*to the mánasa lake*) whose pace resembled thine—alas! the gods would not suffer me to derive a consolation even from thy similitudes—*in this season of rains so tormenting to separated lovers*."

Here, the sentences forming the *first* three lines *of the stanza* imply reasons for *what is affirmed in* the fourth line—'alas! the gods' &c.

*b*. The case of *a reason* implied in a word; e. g. *the following couplet of* mine:—

"Śiva, afraid of the immense weight, bears not the Ganges on his head, muddy as it is with the heaps of dust raised by the multitude of thy horses (त्वद्वाजिराजि-निर्धूतधूलीपटलपङ्किलां)."

Here, the one *compound* word, forming the first half, implies a reason for what is expressed by the second half.

*c*. *The reason expressed by more than one word*; as *in the following example of* mine:—

'O She, Gangá who flows through three ways *only* (or Heaven, Earth and Pátála), conceals herself, through shame, on Mahádeva's head, as she beholds the river *formed* of the waters *poured* in thy donations, she running through innumerable passages (पश्यन्त्यसंख्यपथगां त्वद्दा नजलवाहिनीं)"

*d.* Some writers, it is to be observed here, do not admit those cases of the Transition (§709 *c and d*) which rest upon the relation of causation, because, *they suppose*, they are superseded by the Poetical Reason residing in a Sentence. (§710 *a*) This *opinion* is not right For here *in the province of Poetry*, Reason is three-fold, as being Informative, Completive and Justificative (or Confirmative) Of these *three sorts*, the Informative Reason is the subject of the figure of Inference, the Completive of the Poetical Reason, and the Justificative of the Transition: thus the Transition founded upon a causation is evidently distinct from the Poetical Reason. To illustrate: In the stanza beginning "The blue lotus—" (§710 *a*), the sentences forming the first three lines are *indispensably* wanted for the *completion of the sense*, inasmuch as, without them, the sentence constituting the fourth line would be incomplete in its signification and therefore absurd. Whilst in the stanza beginning "One ought not to perform an act rashly" (§709 *d*) the prohibition of heedlessly acting is fully intelligible in itself as being complete in its signification, just in the manner of a counsel such as—"Never ought any one to associate, I tell your honour the truth, with the wicked, who are busy in working harm to their fellow creatures. The circumstance, *added in the stanza*, of Prosperity's choosing the discreet, only confirms or justifies *the prohibition, without being needed to be mentioned in order to the completion of its sense* So the Transition resting upon a causation is clearly distinct from the Poetical Reason

*e.* "Hara (Mahádeva), for fear of the immense weight, bears not the Ganges on his head: for it is muddy with the heaps of dust raised by the multitude of thy horses".

Here, we have not the ornament in question, since the reason is made as clear, by the use of the particle '*hi*' (for), as if we were to employ the formal expression *panǩilatvát* (from its being muddy), and it is strikingness that is the essence of ornament.

TEXT.

No. 711 The notion, expressed in a peculiarly striking manner, of a thing established by proof, is termed Inference

COMMENTARY.

*a.* For example:—

"I believe, in the heart of this fair lady shines the moon-face of her beloved for in the diffusive beams burst out, all her limbs look pale, and those lotuses, her eyes, are closed"

Here the strikingness has its origin in the metaphor.

*b.* Or we may take the following example —

"Wherever falls the sight of women, there fall sharpened arrows; hence, I infer, Cupid runs before them with his bow furnished with shafts"

Here the strikingness rests upon the boldness of the poet's speech In the figure of Poetical Fancy, the notion is attended with uncertainty, whilst in the present ornament it is attended with certainty: this is what makes their difference.

TEXT.

No. 712 When a cause is represented in identity with the effect, it is *termed* the Cause *(hetu)*.

COMMENTARY

*a.* As in my couplet beginning "She is the ecstasy of youthfulness"* (Chap. III §131 *a.*) the heroine, the cause of subjugation, is represented as the very subjugation *of the minds of young men.* In the expressions 'ecstasy' and 'laugh,' however, the ornament rests upon an introsusception (see §693 and 694).†

TEXT.

No. 713. The Favourable *(anukúla)* is when unfavourableness turns into a favour.

COMMENTARY.

*a.* For example:—

"When thou art angry, lady of the slender frame, wound him with thy nails, and tie his neck tight, with those *fair* cords, thy hands."

The peculiar strikingness *of such a mode of speech* is properly counted as a distinct ornament, since it is perceived altogether different from all other figures.

TEXT.

No. 714 When something, really intended to be said, is apparently suppressed or denied, for the purpose of conveying a particular meaning, it is termed Hint (ákshepa), ‡ and is two-fold, as pertaining to what is about to be said or what has been said.

COMMENTARY.

*a.* Of these *two cases*, that pertaining to what is about to be said, has two varieties, inasmuch as something, wholly and summarily hinted at, may be suppressed, or something may be partially mentioned and partially omitted. The case pertaining to what has been

* "She is the ecstasy of youthfulness—the laugh of the abundance of excessive beauty—the ornament of the face of the earth—the subjugation of the minds of the young men"

† The sentence is obscure in the original, and the scholiast, who mistakes even the name—*hetu*—of the figure to be *abhidhá-hetu*, gives an absurd interpretation of it.

‡ *Paralipsis* in Greek Rhetoric.

said, admits of two sub-divisions, inasmuch as the very character of a thing may be denied, or as the speaker may pretend to negative or cancel what he has already spoken Thus the Hint has four varieties.

*b.* For examples in their order —

"I would say something for the sake of my dear lady pierced with a bunch of shafts of Cupid—do thou, friend, stay here for a moment—nay, nay, what shall I say to one whose heart is devoid of compassion!"

Here the *pangs of* separation, felt by the female friend *of the speaker*, are hinted at in general, but the particulars, which were about to be spoken of, are suppressed

*c* "In separation from thee the stag-eyed lady, beholding now the new jasmine expanded, is, of a certainty, alas!—but oh, enough of such a cursed discourse."

Here the portion 'to die' is omitted.

*d.* "My boy, I am no go-between, my business is not to say that thou art beloved. She dies and thine will be the disgrace—these words of righteousness are what I have to say"

Here the character of a thing, or *rather a person*, is denied—that of the go-between.

*e.* "How can she of the slender frame pass the night in separation from thee—nay what is the use of talking to thee who art of so cruel a purpose"

Here the very fact of speaking is, as it were, negatived

*f* In the first example, the particular meaning conveyed (see text) is 'My friend is sure to die,' in the second, what is particularly intimated, is the impossibility of speaking further or the like; in the third, speaking the truth in spite of being a go-between; and in the fourth, excess of misery It is not to be supposed that a PROPER negation of what has been, *or is about to be,* said is what constitutes the present figure, for the SEMBLANCE of a denial is the essence of it.

TEXT.

No. 715. Another figure, *also termed Hint*, is held, likewise, to be an apparent permission of something, *really* unwished for.

COMMENTARY.

*a.* 'Likewise'—for the purpose of conveying a particular meaning, as in the preceding *ornament*

*b.* For example :—

"Depart, my love, if thou art resolved to go—auspicious be thy paths, and may I be born again in the place where thou hast gone!"

Here the permission of going, which is so much unwished for, failing as it does, terminates in prohibition; and the particular meaning conveyed, is that the addressee ought ENTIRELY to desist from going

TEXT.

No 716. When an effect is said to arise without a cause, it is Peculiar Causation, and is two-fold, according as the occasion is, or is not, mentioned.

COMMENTARY.

*a* The production of an effect, though represented as being without the *supposed sole* cause, must depend upon some other cause This distinct cause, or occasion, as it is sometimes mentioned and sometimes omitted, makes the figure two-fold For example:—

"In youth, the waist of the fair-browed lady is slender, though she has never toiled, her eyes are tremulous, but she is not affrighted, her body is heart-ravishing, yet it is not ornamented"

Here the occasion, viz youth, is mentioned. In this very example, *if we leave out 'in youth'* by reading *vapur bháti mrigí-drisah* (the body of the deer-eyed lady shines) instead of *'vapur vayasi subhruvah'* (in youth the body of the fair-browed lady), we should have the case of the Occasion being omitted.

TEXT.

No. 717. When, in spite of the existence of a cause, there is an absence of the effect, it is Peculiar Allegation, and is likewise two-fold.

COMMENTARY.

*a.* 'Likewise'—that is to say, as the Occasion is, or is not, mentioned. Of these, the case in which the Occasion is mentioned; as—

"Truly great are they, who though rich, are free from haughtiness, though young, are not fickle, and though possessed of power, do not give way to heedlessness *in the exercise of it.*"

Here the Occasion, *viz.* true greatness, is mentioned In this *very stanza* if, for the fourth line *mahá-mahima-sálinah* (truly great are they), we read *kiyantah santi bhútale* (few there are on earth), the Occasion would be omitted.

*b.* The case in which the occasion or cause is inconceivable, being only a variety of that in which the occasion is omitted, is not separately mentioned. The following is an example :—

"He of the flowery bow conquers the three worlds, alone, whose power was not destroyed by Mahádeva, though he destroyed his body"

Here, the cause of his power not being destroyed, notwithstanding the destruction of the body of *Káma*, is inconceivable.

*c.* In the present *figure*, an effect is also intimated to be absent, by means of representing something as present, which is opposed to it. So also in the Peculiar Causation (§ 716), a cause is represented to be absent through speaking of something, opposed to it, as present

अभ्युपगम्यान्तःकरणस्यादर्शनमनैकान्तिकं परिहरति ।

(१३) तत्रापि प्रेरको ज्ञाता शर्वेन्तस्यामिनो यतः ।

कार्यत्वात् तस्यापि घटादेरिव चेतनेन प्रेरकेण भवितव्यम्, इतीश्वरसिद्धिः, तथा च श्रुतिः, "धियो यो नः प्रचोदयात्,, इति, "नैयायिका अणुमनसोराद्यं कर्मादृष्टकारितम्,, इति, अत एवेश्वराधीनः पुमान् भोगेऽपि पठ्यते, तथा चाहुः,

"न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्,, ॥

इति ॥

अत्र चोदयति ।

(१४) पितरौ ननु पुत्रादेः कुरुतो भोगसाधनम् ।

माता च पिता च, तावेव यतः पुत्रस्य दुहितुर्वा शरीरमुत्पादयन्तौ दृष्टौ, अतः कथं नात्र पुंसः कर्तृत्वमिति ॥

एतत् प्रतिक्षिपति ।

(१५) न देहमात्रतः स्थूलाद् व्यतिरिक्तं कलादिकम् ।
तद्योगं वृत्तिलाभं वा नित्यव्यापकयत्नयोः ॥
अयोनिजौ च नाकार्यं कुर्यातां नो परस्य हि ।

स्थूलमेव देहं तावुत्पादयन्तौ सिद्धौ, नतु व्यतिरिक्तमिन्द्रियादि, नापि शरीरेन्द्रियाभ्यां पुंसो योगम्, नापि च नित्यत्वाद् व्यापकत्वाच्चात्मनः सर्वशरीरयोगेऽपि विशिष्टेनैव शरीरेण तज्ज्ञानक्रिययोर्वृत्तिलाभं कुरुतः, नाप्ययोनिजं मषकमत्कुणादिशरीरं तौ कर्तुं संभाव्येते, "हि,, इति, यस्मात् तस्माच्च युष्मत्परिकल्पितस्यास्य बुद्ध्यादेः परस्य पुत्रकर्तृत्वमित्यध्याहारः, अतः कर्त्रन्तरसिद्धिः ॥

एवं स्थूलशरीरकर्तृत्वमभ्युपगम्यैतदुक्तम्, तदेव तु नोपपद्यते, इति दर्शयितुं पराशङ्कामाह ।

(१६) पितरौ किं नु कुर्वाते शरीरोत्पत्तये बुधाः ।
बीजसंबन्धमात्रं चेत्,

यथा बीजसंबन्धमात्रेणैव तयोः शरीरकर्तृत्वम्, एवमिन्द्रियादावपि भविष्यतीति कुतः कर्त्रन्तरसिद्धिः ॥

कारिकाभागेनैतत् प्रतिक्षिपति ।

(१७) तावता नैव तत्कृतम् ।

कायादेः कार्यादन्यत्वात् तत्कारकबीजसंनिधानात्मनः कार्यस्य, तथाहि,

"मृच्चक्रमात्रयोगेन कलशो न कृतो भवेत्,, ।
नह्यन्यस्मिन् कृतेऽन्यत् कृतं भवति ॥

तदेवानयोरन्यत्वमाह ।

(१८) रचना तत्र कर्तव्या नानार्थाराधनक्षमा ।
मृदोऽन्यदेवोदकधारणाद्यर्थकारिघटस्य स्वरूपं यतः ॥

दार्ष्टान्तिकेऽप्यन्यत्वं योजयति ।

(१९) तथा कायेऽपि रचना पुमर्थाराधनक्षमा ।
दृष्टा सा तः परिच्छेद्या कर्तृतः कुशलाद्बुधैः ॥

एवं बीजसंयोगरूपात् कार्यादन्यदेवं नानाभोगसमापनं कार्यम्, इति तस्यान्येनैव सातिशयेन कर्त्रा भवितव्यम्, इति ॥

अत्र कारिकाभागेन पराभिप्रायः ।

(२०) बिम्बात् सा चेत्,

"शुक्रशोणितयोः कललावस्थात्यागेन घनावस्था बिम्बमुच्यते, तस्मादेवाहाराद्युपकृतात् सा रचना न कर्त्रन्तरादिति परः,, ॥

एतत् प्रतिक्षिपति ।

(२१) न, तत्रैव ह्यन्यादृगपि दृश्यते,

न बिम्बमात्रात्,तस्याविशेषादेकरूपैव पुत्रादेः सर्वस्य रचना स्यात्, इति दृष्टविरोधः ॥

पुनः कारिकाभागेन परः ।

(२२) मरुतश्चेत्,

"पवनस्यैव सर्वत्र रचनाकर्तृत्वसिद्धेः,, ॥

आचार्य आह ।

(२३) न, तस्यापि स्वातन्त्र्यं चितिहानितः ।
पूर्वचापोदितं सम्यक् स्वातन्त्र्यं बीजकर्मणोः ॥

यथा बीजस्योपादानकारणस्य कर्मणश्चाचैतन्यात् कर्तृत्वं निषिद्धं द्वितीयस्मिन् काण्डे,तथा पवनस्यापि निषेद्धव्यमेव ॥

किंच ।

(२४) नचाप्येवंविधं कार्यं प्रकृष्टज्ञानवद्विना ।
तेषु तेषु प्रदेशेषु त्वगादेर्येन न स्थितिः ॥
येषु येषु स्थितं तत् स्यादवर्थकृतये क्षमम् ।

नह्येवंविधलक्षणं शरीरादि कार्यं प्रकृष्टतरज्ञानादियुक्तकर्त्रा विना संभवति, येन तेषु तेष्वत्र शरीरे श्रोत्रनेत्रादिषु नवद्वारेषु त्वगादेरपि ग्रहणान्नेत्रादेः पादतलादिषु स्थितिर्न दृश्यते, येष्ववस्थितं पुरुषार्थसाधनाय समर्थं भवेत्, इति न किंचिज्ज्ञयोः पित्रोरत्र कर्तृत्वम् ॥

अत्र पुनः परः ।

(२५) स्वर्गाद्युद्देशतः कर्म कुर्वतैव नरेण तत् ।
प्रयुक्तं तच्च देहादेर्न विना फलसाधकम् ॥
अतोऽभिसंधिमात्रेण पुंसां सर्वं कृतं त्विति ।

"न वयं साक्षात् पुरुषस्य शरीरादिसर्वकर्तृत्वं ब्रूमो येनैष दोषः स्यात्, अपितु "ज्योतिष्टोमेन यजेत,, इत्यादिश्रुतिसिद्धं स्वर्गादि कर्म कुर्वता तदपूर्वाख्यसंस्कारद्वारेण प्रयुक्तम्,,तत्तु हरीतक्यादिविशिष्टपरिणामाक्षेपेण विरेकादिफलमिव शरीराद्याक्षेपेण स्वफलं स्वर्गादि साधयति. इति फलाभिसंधानेन ज्योतिष्टोमादिमात्रमेव कुर्वता पुरुषेण तदाक्षिप्तं सर्वमेव तनुकरणादि कृतमुच्यते, न पुनः साक्षात् कर्मणीव तत्रास्य कर्तृत्वं प्रमाणाभावात्, इत्यदोषः ॥

न, उद्देशस्यानैकान्तित्वात्, इत्याह ।

(२६) न व्यापकमिदं यस्मान्निरयादौ न विद्यते ।

नहि नरकदुःखाद्युद्देशेन ब्रह्महत्यादि कर्म पुरुषैः क्रियते, अपितु दृष्टफलानुसंधानेन, कामादिरिव. इति नरकफलाद्यनुपपत्तिस्तेषाम् ॥

"अथाघवीचौ नरके कल्पं वसेयुर्ब्रह्मघातकाः,,इति श्रुत्यन्तरेण तत्कर्तुस्तद्भवतीत्युच्यते,, भवतूत्पादकसत्वस्य न पुरुषः,अभिसंधानेन विना कर्तृत्वासिद्धेः, इति ततोऽन्यश्चौरस्य निग्रहादौ नृपतिवदीश्वरोऽभ्युपगन्तव्यः, तथाहि,

(२७) व्याप्तं यच्चापि कुम्भादि दृष्टं यद्धीमता कृतम् ।
तत् तावतैव तद्वच्च निरयादि भविष्यति ॥

यत् कार्यत्वेन व्याप्तं घटादि तद्धीमता कृतं सिद्धम्,अतस्तदपि तस्य नरकादिकार्यत्वेनैव घटादिवद्धीमता कृतमिति गम्यते, ॥

"नच व्यवहितफलोद्देशेनानुष्ठितानामपि कर्मणां कर्तृव्यापारान्तरानपेक्षया फलजनकत्वेन व्याप्तिः सिद्धा,, इत्याह ।

(२८) नवाप्युद्देशमात्रेण तृप्तिः स्यात् कर्षणादितः ।
क्रियान्तरं विना तस्मात् सामग्र्यन्तरतो भवेत् ॥
तद्वद्धर्मादपि कृतात् स्वर्गादि स्यात् क्रियान्तरात् ।
तच्चेश्वरं विना नेति संसिद्धः परमेश्वरः ॥

आहारफलाद्यर्थत्वेन हि कृष्यादीनि लोकः करोति न व्यसनितया, नच कृष्टिमात्रादेव तत् तेषां फलम्,अपितु तद्धनरक्षणादेर्भोजनान्तात् कर्त्रन्तरव्यापारादपि. तद्वत् स्वर्गाद्युद्देशेनानुष्ठिताच्च ज्योतिष्टोमादेः कर्ममात्रात् स्वर्गः,अपितु तद्भोगयोग्यशरीरादिजननकर्मान्तरसापेक्षात्. इति तस्यापि कर्मान्तरकर्त्रा सातिशयेन भाव्यम्, इतीश्वरसिद्धिः ॥

"ननु सोऽपि पुरुष एव भविष्यति, यदाहुः, "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः,, इत्यत्राप्याह ।

(२६) पुंभिश्चापेक्ष्यमाणत्वात् स चानावृतदृक्क्रियः ।
ततश्चापास्तपुंभावस्तद्वैधर्म्याद्विनिश्चितः ॥

पुरुषाद्याविद्यावृतत्वात् किंचिज्ज्ञाः किंचित् कर्तारश्चोच्यन्ते. पुरुषाशक्यशरीरावरणादिकार्यान्यथानुपपत्त्या त्वीश्वरः कल्प्यमानस्तल्लिलक्षणोऽनावृतदृक्क्रियः सिध्यति, न पुरुषविशेष एव, तस्यापि पुरुषत्वात् तत्रासामर्थ्यात्, सामर्थ्ये वा न पुरुषत्वं यतः ॥

पुरुषेश्वरवादी सिद्धान्तवादिनं प्रत्याह ।

(३०) पुंस्त्वाद् ये कल्पयन्तीशं सर्वज्ञानक्रियोज्झितात् ।
असिद्धहेतुतस्तेऽतः स्थिता ह्यात्मनि दर्शनात् ॥

पुंसः सर्वज्ञत्वादिविरहात् तनुकरणनिर्माणासामर्थ्यमित्यवश्यं तन्निर्माणसमर्थेन सर्वविदान्येन भवितव्यम्,इति यैः पुरुषविशेषवादिनामस्मदसिद्धादेव हेतोरीश्वरोऽन्यः साध्यते, तेऽपीश्वरबुद्ध्यात्मन्येव पुरुषविशेषे व्यवस्थिताः ॥

कथमित्याह ।

(३१) पुमानेव हि कस्मात् तैर्नेष्टोऽनावृतदृक्क्रियः ।
महतापि प्रयत्नेन यदीशः परिकल्प्यते ॥

तनुकरणादिकार्यान्यथानुपपत्त्या हि तैः सर्वज्ञत्वादियुक्तः कर्ता कश्चित् कल्पनीयः, स च पुरुषविशेष एव कल्प्यो नान्यः, एवं हि न धर्म्यन्तरमपि कल्पितं भवतीति ॥

सिद्धान्तवादीत्वाह ।

(३२) प्रमाणाभावतो नेष्टः सर्वसर्वज्ञदोषतः ।

भवेदसिद्धोहेतुर्यदि पुरुषविशेषस्येश्वरतायां प्रमाणं स्यात्, तत् तु नास्ति,अस्मदादिवत् तस्यापि बुद्ध्यादियुक्तत्वेन भवद्भिरभ्युपगमात्, तदयुक्तत्वे हि मुक्त एवेश्वरः स्यात्, तत् तु पुरुषविशेष एवेत्यस्मत्पक्ष एव, बुद्ध्यादियोगाच्च सर्वज्ञत्वम्, तत् पुरुषान्तरेऽपि स्यादिति सर्वस्य सर्वज्ञताप्रसङ्गः ॥

किमत इत्याह ।

(३३) न स्युस्ततश्च शास्त्राणि लोके चोत्साहकादयः ।
स्वात्मना पापकर्तृत्वं नहि सर्वार्थदर्शिनः ॥
युज्यते दृश्यते चास्य दुःखं नानाप्रकारजम् ।

ततः सर्वेषां सर्वज्ञत्वात् सर्वस्य शास्त्रपरोक्षाभिधानादेः स्वयमनर्थहेतूपसेवाया नानाप्रकारदुःखवेदनस्य चाभावप्रसङ्गः; तदप्रसङ्गे ह्यसर्वज्ञा एव पुमांसोऽभ्युपगन्तव्याः, ततो नासिद्धो हेतुः, इति पुरुषव्यतिरिक्तेश्वरसिद्धिः,"कथं तर्हि,, "पुरुषाच्च परं किंचित्,, इत्यादिश्रुतयः, तदुपकारायैव प्रवृत्तेरीश्वरादेरपि सर्वस्येत्यदोषः,

"शास्त्रमेवाकृतकं वेदाख्यं विधिनिषेधात्मकस्वाज्ञाख्याति-

क्रमेण पुंसः प्रत्यवायफलं विदधदीश्वरो नान्यः,, इति जैमिनीयः,

( ३४ ) शास्त्रतः कर्मनिष्पत्तिः कर्मतश्च कृतात् फलम्।
शास्त्रं चाकृतकं तेन किं हरेणेति, ॥

एतत् कारिकाभागेन प्रतिक्षिपति।

( ३५ ) नार्थवत्,

नैतद्युक्तम् ॥

कुत इत्याह।

( ३६ ) कर्मणाकल्पकरणमुक्तं शंभोः प्रयोजनम्।
उपरिष्टात् प्रवक्ष्यामः पुंमुक्तिकरणं परम् ॥

उक्तमेव यतो व्यवहितफलं कर्म कृष्यादिवच्चिदनधिष्ठितं न कार्यं कर्तुं समर्थमिति, वक्ष्यामश्च ॥

"ननु दृष्टे सति नादृष्टकल्पना युक्ता,, इत्यत्राप्याह।

( ३७ ) स्वर्गादिसिद्धये यद्वत् स्थैर्यं क्लृप्तं तु कर्मणः।
महेशः कल्प्यतां तद्वत् तं विना नापि तद्यतः ॥

यद्येवं दृष्टदेवतोद्देशाद्द्रव्यत्यागरूपयागे सोमं प्रक्षेपाद्यात्मनो ज्योतिष्टोमादेः पुरुषकर्मणोऽपवृत्तत्वादामुष्मिकफलस्य स्वर्गादिफलस्यान्यथानुपपत्त्या तददृष्टेन संस्काररूपेणानपवृत्तमिति कल्प्यते, तर्ह्यदृष्टस्यापि कल्पनासंभवादीश्वरोऽपि कल्पनीयः, तेन विना तस्यापि फलजनकत्वासिद्धेरुक्तत्वात् ॥

अधुना रचनारूपत्वाच्छास्त्रस्याकृतकत्वं न संभवतीति तत्प्रामाण्यान्यथानुपपत्त्यावश्यं भवद्भिस्तत्प्रणेतेश्वरोऽभ्युपगन्तव्य इति दर्शयितुं शब्दनित्यत्वं तावत् प्रतिक्षेप्तुमाह।

( ३८ ) नित्यं चेद्वर्णजातं स्यात् सर्वदा किं न गृह्यते।

उपलभ्यस्वभावस्य हि नित्यत्वे स्वभावाविनाशात् सर्वदैवोपलभ्यताप्रसङ्गः ॥

कारिकाभागेन परः।

( ३९ ) अव्यक्तत्वात् तु,

"न गृह्यते,, इत्यनुवर्तते, व्यक्तस्य हि तस्य सर्वदोपलभ्यस्वभावता, नाव्यक्तस्य, तेनाव्यक्तत्वान्न गृह्यत इति ॥

आचार्य आह।

( ४० ) तद्व्यक्तेर्नित्यत्वे दोषनित्यता,

शब्दस्य व्यक्तिरपि यदि नित्या, ततः "सर्वदा किं न गृह्यते,, इत्यस्य दोषस्य नित्यतानुपपत्तिरेव ॥

कारिकाभागेन पराभिप्रायः।

( ४१ ) अनित्या चेत्,

"अथैतद्दोषभयादनित्या व्यक्तिः शब्दस्येत्युच्यते,, ॥

आचार्य आह।

( ४२ ) कुतो हेतोः,

केन प्रमाणेन भवद्भिरनित्यत्वमवगतम् ॥

परः प्रमाणमाह।

( ४३ ) कदाचिद्भवतस्त्विति,

कादाचित्कत्वात् सा व्यक्तिरनित्या, विद्युदादिवत् ॥

अत्राप्याह।

( ४४ ) शब्देऽपि तत्समानत्वादनित्यत्वं न वार्यते।

यद्येवं स्थानकरणाभिघातादेः स्वकारणस्य भावे शब्दः कदाचिदुपलभ्यते, तदभावे च नोपलभ्यते, इति विद्युदादिवदनित्योऽस्तु, किमन्यया तद्व्यक्त्या परिकल्पितयेति ॥

"ननु तदभावेऽनुपलम्भः स्तिमितवायुपरुद्धश्रोत्रत्वात् पुंसो वधिरस्येव शब्दविषयोऽन्यथा सिद्धस्तत्र वर्णनित्यत्वसाधनाय पर्याप्त इति,, ॥

तदयुक्तम्, यतः।

( ४५ ) मरुति स्तिमिते मानं न वर्णावरके क्वचित्।

स्थानकरणाभिघाताभावकाले विद्यमाना अपि वर्णाः स्तिमितवायुपरुद्धत्वाच्छ्रोत्रेण न गृह्यन्ते, इत्यत्र प्रमाणं नास्त्येव, उद्रिक्ते हि वायौ तत्र शूलादयः स्युः, इति स्तिमितग्रहणम्, किंच, श्रोत्रोपरोधस्याविशेषात् स्थानकरणाभिघातकालेऽपि वर्णा न श्रूयेरन् ॥

"ननु तज्जेन मरुता तदानीमभिव्यक्तत्वात् श्रूयन्ते, इति,, न, असिद्धत्वादित्याह।

( ४६ ) पृष्ठस्थार्णग्रहान्नापि वर्णानां व्यञ्जको मरुत्।

प्रकाशको हि व्यञ्जको नावरको विरुद्धत्वात्, वायुश्च वर्णानामावरको दृष्टो यतः, तत्पृष्ठस्थानां वाय्वनुगतानामर्णानां ग्रहणं नास्ति, निवाते हि शब्दग्रहणात्, ततो न वायोर्व्यञ्जकत्वसिद्धिः ॥

"अथ स्थानकरणाभिघातजेन मरुता येनैष दोषः स्यात्, अपितु श्रोत्राभ्यासमागत्य श्रोत्रस्तैमित्यं निवर्तते,' ततो वर्णोपलब्धिः,, इत्यत्राप्याह।

( ४७ ) कम्पाद्यभावतो नासावायात इति गम्यते।

स्पर्शशब्दधृतिकम्पलिङ्गो हि वायुः, लिङ्गाभावे च वक्तृमुखाद्धेतुः श्रोत्राभ्यासमागच्छतीति कुतोऽवगम्यताम् ॥

किंच।

( ४८ ) कर्णच्छिद्रे हि संपूर्णे सर्वार्णग्रहणं भवेत्।

व्यञ्जकेन तेन श्रोत्ररन्ध्रे व्याप्ते सत्यावरणस्य निवृत्तत्वात् सर्वशब्दग्रहणप्रसङ्गः ॥

अत्र परः ।

(४९) सामर्थ्यं व्यञ्जकस्येदृग्गम्यते कार्यतः किल ।
संश्लिष्टमपि नो वर्णान् व्यनक्त्येकस्य दर्शनात् ॥

नित्यत्वे हि शब्दस्य कदाचिद्ग्रहणान्यथानुपपत्त्या स्थानकरणाभिघातजस्य पवनस्य श्रोत्रोपकारद्वारेण व्यञ्जकत्वं यथा कल्प्यते तथैवैकैकवर्णोपलम्भात् प्रतिनियतश्रोत्रशक्त्युपकारेण प्रतिनियतस्थानकरणाभिघातजस्य वायोः प्रतिनियतवर्णव्यञ्जकशक्तिकल्पनाप्रसङ्ग इति ॥

एतत् प्रतिक्षिपति ।

(५०) संसिद्धे व्यक्तिकर्तृत्वे तस्येदं युक्तिमद्भवेत् ।

व्यक्तिकर्तृत्वे व्यञ्जकत्वे तस्य वायोः सिद्धे कदाचित् तस्य विशेषस्य वर्णविशेषव्यञ्जकत्वमुच्यमानं शोभते, तदेव त्वसिद्धमित्युक्तम् ॥

अभ्युपगम्याप्याह ।

(५१) नचायं व्यञ्जको धर्मः प्रदीपादौ प्रदृश्यते ।

युक्तश्चक्षुःश्रोत्रादीनां व्यञ्जकानां रूपशब्दादौ व्यङ्ग्ये शक्तिभेदो विषयभेदात्, अस्य तु प्रदीपादे रूपादिवदेक एव शब्दो विषय इति, तदवान्तरभेदेन शक्तिभेदकल्पनमयुक्तमेव ॥

किंच ।

(५२) सिद्धे स्थैर्ये तु वर्णानां व्यञ्जकं परिकल्प्यते ।
स्थैर्यं तेषां कुतो हेतोः,

संतमसे हि स्पर्शादिना घटादीनां सत्त्वे सिद्धे प्रदीपादिर्व्यञ्जकः सिध्यति, तदसिद्धौ हि मृच्चक्रदण्डादिः कारक एवोक्तः, तदिहापि स्थानकरणाभिघातादीनामभावेऽपि वर्णजातस्य सत्त्वसिद्धौ यदि प्रमाणं भवेद्,भवेदेव तेषां तद्व्यञ्जकत्वम्, तदभावे तु तत्कारकतैव युक्तेति ॥

परः कारिकाभागेनात्र प्रमाणमाह ।

(५३) प्रत्यभिज्ञानतस्त्विति,

स एवायं वर्ण इति स्थिरवस्तुविषयात् प्रत्यभिज्ञानाख्यात् प्रत्यक्षादेव तेषां स्थैर्यमिति ॥

एतत् पराकरोति ।

संदिग्धं प्रत्यभिज्ञानं तदतद्भावदर्शनात् ।
शब्दे सम्यक्त्वमस्येति नैतद्धेत्वन्तरं विना ॥

तदिति स्थैर्यम्, अतदित्यस्थैर्यम्, तयोर्द्वयोरपि भावे तस्य प्रत्यभिज्ञानस्य दर्शनाच्च विरमः, किमत्र पर्वतादाविव स्थैर्यविषयमेव तत्, उत धाराज्वालादाविवा स्थैर्यविषयत्वाद्भ्रान्तम्, इति संदेहाच्च साधनम्, अतः स्थैर्यसिद्धये प्रमाणान्तरमेव वक्तव्यम्, ॥

अथ क्वचिद् भ्रान्तदर्शनेऽपि प्रत्यभिज्ञानस्य न सर्वत्र भ्रान्तता, अनुभूयमानार्थविषयत्वात्, आलोचनवत्, तदुक्तम्,

"स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यताम् ।
नहि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते,, ॥

इति, अपितु बाधकसद्भावादेव, इत्यत्रापि बाधकं प्रमाणमाह ।

(५४) अनेकत्वमवर्णस्य गम्यते कपगादिवत् ।
समकालमनेकैस्तु नरैरुच्चार्यते यतः ॥

प्रतिपुरुषमकारादयो वर्णा भिन्नाः, युगपद् बहुभिरुच्चार्यमाणत्वात्, कचटतपादिवर्णवत्, "ननु व्यञ्जकत्वादेषां कारकत्वमसिद्धमेव,, सत्यम्, यदि तेषामभावेऽपि वर्णसत्त्वे प्रमाणं स्यात्, तदभावे त्वभावसिद्धौ नैषां व्यञ्जकत्वम्, अपितु, कारकतैवेत्युक्तम्, तत्रासिद्धता ॥

---

## ॥ अथ प्रसन्नराघवनामकनाटकस्य ॥

॥ तृतीयोऽङ्कः ॥

॥ ततः प्रविशति वामनकः ॥

वामनकः । आत्मानं विलोक्य सविस्मयम् । अहो अङ्गाणं मे तुङ्गत्तणम् । अवि णाम ईरिसेहिं अङ्गेहिं एत्थ संचरन्तेण मए दुआरसिहरं भज्जीअदि ता खुज्जो भविअ संचरिस्सम् * । तथा करोति ।

प्रविश्य कुब्जकः । वअस्स वामणअ दाणिं सअलगुणसंजुत्तोसि तुमम् † ।

वामनकः । कहं विअ ‡ ।

कुब्जकः । पढमं जेव्व वामणो दाणिं उण खुज्जत्तणं पत्तो § ।

वामनकः । सक्रोधम् । अए मुक्ख कहं अत्तणो खुज्जत्तणं परम्मि आरोवेसि णं तुमं जेव्व खुज्जओ मए उण दुआरसिहरभङ्गसङ्किदेण अप्पम्मि खुज्जत्तणमारोविदम् ‖ ।

कुब्जकः । विहस्य । कहं विअत्थिमेत्तएण तुह अङ्गेण दुआरसिहरं भज्जिस्सदि । पुनः सक्रोधम् । अरे अलीअवाआल केण तुह कहिदं अहं खुज्जओत्ति ¶ ।

---

* अङ्गानां मे तुङ्गत्वम् । अपि नामेदृशैरङ्गैरत्र संचरता मया द्वारशिखरं भज्यते तत् कुब्जो भूत्वा संचरिष्यामि ।

† वयस्य वामनकेदानीं सकलगुणसंयुक्तोऽसि त्वम् ।

‡ कथमिव ।

§ प्रथममेव वामन इदानीं पुनः कुब्जत्वं प्राप्तः ।

‖ अये मूर्ख कथमात्मनः कुब्जत्वं परस्मिन् आरोपयसि ननु त्वमेव कुब्जको मया पुनर्द्वारशिखरभङ्गशङ्कितेनात्मनि कुब्जत्वमारोपितम् ।

¶ कथं वितस्तिमात्रेण तवाङ्गेन द्वारशिखरं भङ्क्ष्यते । अरे अलीकवाचाल केन तव कथितमहं कुब्ज इति ।

वामनकः । णं इमिणा जेव्व दरिअवुसहककुदसरिसेण पुट्ठट्ठिदेण मंसत्थवएण उव्वाहिएण * ।

कुब्जकः । विहस्य । अए मदिसुण्ण कहं इमो मंसत्थवओ अवि उण सोहग्गलच्छीए उवहाणगण्डओ † ।

वामनकः । साशङ्कम् । अरे सणिअं जप्प । अम्हारिसाणं अन्तेउरचारिणं सोहग्गवुत्तन्तमाअण्णिअ भट्टा कुविस्सदि ‡ ।

कुब्जकः । अलं भीरुत्तणेण दाणिं धाणघरम्मि वट्टदि भट्टा § ।

वामनकः । णहुणाहु अज्ज किर कस्सावि पाहुणस्स महेसिणो आगमणं परिवालअन्तो बाहिरमण्डवे वट्टदि ‖ ।

कुब्जकः । हा हदम्ह ¶ ।

वामनकः । किंति ** ।

कुब्जकः । णं पढमं जेव्व एक्केण महेसिणा जण्णवक्केण उवदिट्ठो इमो राआ अच्छिमीलणेहिं रत्तिओ गमेदि । दाणिं उण इमिणा उवदिट्ठो अन्तेउरं जेव्व परिहरिस्सदि । तदो किं इमो अम्हेहिं खवणोव्व कप्पडपेडएहिं करिस्सदि †† ।

वामनकः । सच्चं एदं जइ इमो महेसी अम्हाणं रण्णो उवदेसत्थं आअदो भवे । इमो उण हरधणुद्दंसणत्थं ‡‡ ।

कुब्जकः । किं इमस्स महेसिणो होमग्गिधूमसामलिअलोअणस्स हरचावदंसणेण तो तक्केमि खत्तिअबह्मणो इमोत्ति §§ ।

वामनकः । विहस्य । कहं तणुव्व मदीवि तुह वङ्कुणी जं एव्वं तक्केसि सच्चं खत्तिअबह्मणो इमोत्ति ‖‖ ।

* नन्वनेनैव दृप्तवृषभककुदसदृशेन पृष्ठस्थितेन मांसस्तबकेनोद्वाहितेन ।

† अये मतिशून्य कथमयं मांसस्तबकोऽपि पुनः सौभाग्यलक्ष्म्या उपधानगेन्दुकः ।

‡ अरे शनैर्जल्पास्मादृशानामन्तःपुरचारिणां सौभाग्यवृत्तान्तमाकर्ण्य भट्टः कोपिष्यति ।

§ अलं भीरुत्वेनेदानीं ध्यानगृहे वर्तते भट्टः ।

‖ नहिनह्यद्य किल कस्याप्यतिथेर्महर्षेरागमनं परिपालयन् ब्राह्ममण्डपे वर्तते ।

¶ हा हतास्मः ।

** किमिति ।

†† ननु प्रथममेवैकेन महर्षिणा याज्ञवल्क्येनोपदिष्टोऽयं राजा अक्षिमीलनै रात्रीर्गमयति । इदानीं पुनरनेनोपदिष्टोऽन्तःपुरमेव परिहरिष्यति । ततः किमयमस्माभिः क्षपणक इव कर्पटपेटकैः करिष्यति ।

‡‡ सत्यमेतत् । यद्ययं महर्षिरस्माकं राज्ञ उपदेशार्थमागतो भवेत् । अयं पुनर्हरधनुर्दर्शनार्थम् ।

§§ किमस्य होमाग्निधूमश्यामलितलोचनस्य हरचापदर्शनेन तत् तर्कयामि क्षत्रियब्राह्मणोयमिति ।

‖‖ कथं तनुरिव मतिरपि ते वक्रा यदेवं तर्कयसि सत्यं क्षत्रियब्राह्मणोऽयमिति ।

कुब्जकः । ता कोवि अणत्थो सम्भाविअदि जं किर चिरतवस्साकरिसिदो इमो तिव्वं पेक्खमाणो खत्तिअबह्मणो रज्जुमद्दिणो अम्हाणं राएसिणो रज्जं गहीदुं आअदोत्ति * ।

वामनकः । सन्तं पावं । ईरिसं मा जप्प । अअं हि चिरतवस्सापरितोसिदस्स बह्मणो वाआए खत्तिअत्तणं परिहरिअ बह्मणत्तणं पत्तो † ।

कुब्जकः । कहं तणुव्व मदीवि तुह वामणी जं णरिसअलीअलोअवुत्तन्तेवि पत्तिआअदि । जइ कस्सवि वाआए खत्तिओ बह्मणो होइ ता मह वाआए तुमंवि बह्मणो होसि ‡ ।

वामनकः । अरे बालिस कहं तुह गोमुहस्स भअवदो चउम्मुहस्सवि णत्थि अन्तरम् § ।

कुब्जकः । जइ इमो सुध्धबह्मणो ता किं इमस्स चावचिन्ताए ‖ ।

वामनकः । अत्थि कारणं तस्स पासम्मि तदो जेव्व गहिअचावविज्जा दोण्णि खत्तिअकुमारा वट्टन्ति ताणं दंसइस्सदि चावन्ति ¶ ।

कुब्जकः । ता सुध्धासओ इमो ** ।

वामनकः । अह इम् †† ।

कुब्जकः । ता कहेहि दाव इमस्सिं अलीअदूसणारोवेण णं मह पावं उप्पण्णं ण वेत्ति ‡‡ ।

वामनकः । पावन्ति किं भणीअदि णं महापावं उप्पण्णम् §§ ।

कुब्जकः । अरे मुरुख [illegible] आणासि धम्मस्स तत्तम् । सम्बन्धिअणे परिहासवअणाइं ण हु पावकरणाइं ‖‖ ।

* तत् कोऽप्यनर्थः सम्भाव्यते यत् किल चिरतपस्याकर्षितोऽयं तीव्रं प्रेक्षमाणः क्षत्रियब्राह्मण ऋजुमतेरस्माकं राज्ञो राज्यं ग्रहीतुमायात इति ।

† शान्तं पापं । ईदृशं मा जल्प । अयं हि चिरतपस्यापरितोषितस्य ब्रह्मणो वाचा क्षत्रियत्वं परिहृत्य ब्राह्मणत्वं प्राप्तः ।

‡ कथं तनुरिव मतिरपि ते वामनी यद् ईदृशालीकं,लोकवृत्तान्तेऽपि प्रत्याय्यते । यदि कस्यापि वाचा क्षत्रियो ब्राह्मणो भवति तर्हि मम वाचा त्वमपि ब्राह्मणो भवसि ।

§ अरे बालिश कथं तव गोमुखस्य भगवतश्चतुर्मुखस्यापि नास्त्यन्तरम् ।

‖ यद्ययं शुध्धब्राह्मणस्तर्हि किमस्य चापचिन्तया ।

¶ अस्ति कारणं तस्य पार्श्वे तत एव गृहीतचापविद्यौ द्वौ क्षत्रियकुमारौ वर्तेते ताभ्यां दर्शयिष्यति चापमिति ।

** तत् शुध्धाशयोऽयम् ।

†† अथ किम् ।

‡‡ तत् कथय तावदस्मिन्नलीकदूषणारोपेण ननु मम पापमुत्पन्नं नवेति ।

§§ पापमिति किं भण्यते ननु महापापमुत्पन्नम् ।

‖‖ अरे मूर्ख न जानासि धर्मस्य तत्त्वम् । सम्बन्धिजने परिहासवचनानि न खलु पापकारणानि ।

वामनकः । कहं उण इमो तुह सम्बन्धिअणो * ।

कुब्जकः । अरे ण आणासि अस्सवि दोणि कुमारा अह्माणं विदोणि कुमारीओ ता तक्केमि सम्बन्धिअणो हविस्सदित्ति † ।

वामनकः । विहस्य कहं अह्माणं एरिसं पुण्णम् ‡ ।

नेपथ्ये ।

ताटङ्किना झटिति ताडितताटकेन
रामेण पद्मरमणीयविलोचनेन ।
क्रीडाशिखण्डकधरेण सलक्ष्मणेन
साकं मुनिः कुशिकसूनुरितोऽयमेति ॥

वामनकः । सहर्षविस्मयम् । अहो जा किर सअललोअभीसणा रक्खसी ताडएत्ति सुणीअदि सा इमिणा जइ ताडिदा ता इमस्सिं हरचावारोवणं वि सम्भावीअदि । ता एहि इमं कण्णसुहारहं भट्टिणीणं समप्पम्ह § ॥ इति निष्क्रान्तौ ॥

॥ प्रवेशकः ॥

ततः प्रविशति रामलक्ष्मणानुगतो विश्वामित्रः । अङ्गुल्या दर्शयन् वत्स रामभद्र ।

एतत् तर्कय चक्रवाकहृदयाश्वासाय तारागण-
ग्रासाय स्फुरदिन्दुमण्डलपरीहासाय भासां निधिः ।
दिक्कान्ताकुचकुम्भकुङ्कुमरसन्यासाय पङ्केरुहो-
ल्लासाय स्फुटवैरिकैरववनत्रासाय विद्योतते ॥

रामः । अञ्जलिं बद्ध्वा ।

लालयन्तमरविन्दवनानि
द्यालयन्तमभितो भुवनानि ।
पालयन्तमथ कोककुलानि
ज्योतिषां पतिमहं महयामि ॥

विश्वामित्रः । स्वगतम् । अपि नाम मयोपनीयमानं वत्स-रामभद्रमचिरादेव जनकस्तनूजया सम्भावयिष्यति ।

लक्ष्मणः । आर्य पश्य ।

यावन् नीरनिधेः प्रभातसमयः प्रोद्धृत्य लोकत्रयी-
माणिक्यं रविबिम्बमम्बरवणिग्वीथीपथे न्यस्यति ।
तावत् कर्तुमिवास्य मूल्यमुचितं पद्माकरेण स्वयं
लक्ष्मीर्लब्धविकाशपङ्कजकरन्यस्ता पुरः स्थाप्यते ॥

विश्वामित्रः । सहर्षमात्मगतम् । अये वत्स लक्ष्मणेनैव दत्त-मुत्तरम् । दैवताधिष्ठितानि हि मुग्धवचनानि भवन्ति ।

रामः । मुनिं प्रति भगवन् कथमियं बहुनरकरितुरङ्गमतर-ङ्गितापि राजधानी तपोवनभूमिरिव प्रशान्तपावनी विभाव्यते ।

विश्वामित्रः । क इह विस्मयः । नन्विह जनकः प्रतिव-सति यस्यायं भगवान् याज्ञवल्क्यो गुरुः ।

रामः । सोऽयं भगवानस्य गुरुर्यः किल योगीश्वर इति ख्यायते ।

विश्वामित्रः । वत्स स एवायम् ।

पादोपजीवनाद्भानोः प्रबोधमुपलभ्य यः ।
अभूद्योगीश्वरख्यातेः सद्म पद्ममिव श्रियः ॥

तदेहि राजभवनमुपसर्पाम इति निष्क्रान्तः । नेपथ्ये

पयोभिः सिच्यन्तां बहलविलसत्कुङ्कुमरसैः
प्रसूनैः कीर्यन्तां परिमलमिलल्लोलमधुपैः ।
चतुष्कैः पूर्यन्तामविरललसन्मौक्तिकगणै-
र्मुदा पौरस्त्रीभिर्नगरपथरथ्याङ्गणभुवः ॥

विश्वामित्रः । नूनमस्मदभ्यागमनसानन्दस्य शतानन्दस्य वाक्यपरिस्पन्दः । विलोक्य । अहो अस्य रभसातिशयो यदयं कृतमपि नगरपरिष्कारं पुनरादिशति ।

प्रविश्य शतानन्दः । भगवन् अभिवादये ।

विश्वामित्रः । सौम्यायुष्मान् भूयाः ।

शतानन्दः । भगवन् अयमसौ जनको राजा भगवन्तं प्रतीक्षते ।

विश्वामित्रः । विलोक्याये स एष जनकः ।

अङ्गैरङ्गीकृता यत्र षड्भिः सप्तभिरष्टभिः ।
त्रयी च राज्यलक्ष्मीश्च योगविद्या च दीव्यति * ॥

ततः प्रविशति जनकः ।

जनकः । कृताञ्जलिर्भूत्वा

यः काञ्चनमिवात्मानं निक्षिप्याग्नौ तपोमये ।
वर्णोत्कर्षं गतः सोऽयं विश्वामित्रो मुनीश्वरः ॥

उपसृत्य । भगवन् अयं ते समीहितसम्पल्लतासमुद्गमा-रामः प्रणामः ।

विश्वामित्रः । राजर्षे वसुन्धरासुनासीर सीरध्वजाप्रतिह-तमनोरथो भूयाः । इति यथोचितमुपविशन्ति ।

जनकः । भगवन् अधुना सुनासीरसाधारणत्वमधःकरणं मे ।

---

* कथं पुनरयं तव सम्बन्धिजनः ।

† अरे न जानास्यस्यापि द्वौ कुमारावस्माकमपि द्वे कुमार्यौ तत् तर्कयामि सम्बन्धिजनो भविष्यतीति ।

‡ कथमस्माकमीदृशं पुण्यम् ।

§ या खलु सकललोकभीषणा राक्षसी ताटकेति श्रूयते सा अनेन यदि ताडिता तर्ह्यस्मिन् हरचापारोपणमपि सम्भाव्यते । तदेहीमं कर्णसुधारसं भट्टिनीभ्यः समर्पयामः ।

* शिक्षा कल्पो व्याकरणं निरुक्तं ज्यौतिषं तथा । छन्दश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः॥ स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि चेति षड् राज्याङ्गानि । यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयश्चेत्यष्टौ योगाङ्गानि ।

विश्वामित्रः । कथमिव ।

जनकः । सम्प्रति तदीयामपि पदवीमतीत्य वर्ते ।

गाधिनन्दन न नन्दनजन्मा
तादृशः स हरिचन्दनशाखी ।
यादृशो मम भवत्पदपद्म-
द्वन्द्ववन्दनविधिः सुखहेतुः ॥

विश्वामित्रः । अहो ते प्रणयातिशयो यः सहजप्रमोदसुखाम्बुधिनिमग्नोऽप्यस्मत्समागमजन्मनः सुखशीकरान् बहु मन्यसे ।

जनकः । भगवन् अस्मद्विधानां राज्यरागोपरक्तचेतश्चन्द्रमसां कुतस्त्योऽयं सहजानन्दचन्द्रिकोद्भेदः ।

विश्वामित्रः । मैवं भोः ।

ज्याघातः कार्मुकस्य श्रयति
करतलं कण्ठमोंकारनाद-
स्तेजो भाति प्रतापाभिधमवनि-
तले ज्योतिरात्मीयमन्तः ।
राज्यं सिंहासनश्रीः शममपि
परमं वक्ति पद्मासनश्री-
र्येषां ते यूयमेते निमिकुल-
कुमुदानन्दचन्द्रा नरेन्द्राः ॥

शतानन्दः । सत्यमेतत् । एते हि

वाराङ्गनाकरतरङ्गितचामरोर्मि-
श्वेतातपत्रशतपत्रिणि राजहंसाः ।
क्रीडन्ति राज्यसरसि स्वरसं च धीरा
योगीन्द्रचन्द्रसुगमे पथि संचरन्ति ॥

लक्ष्मणः । अपवार्य । आर्य राजानोऽप्यमी ब्रह्मविद्याचतुरा इति चित्रीयते मे चेतः ।

रामः । वत्स किमिह चित्रं ननु

छत्रच्छाया तिरयति न यद् यत् न च स्प्रष्टुमीष्टे
दृप्यद्गन्धद्विपमदमषीपङ्कनामा कलङ्कः ।
लीलालोलः शमयति न यच् चामराणां समीरः
स्फीतं ज्योतिः किमपि तदमी भूभुजः शीलयन्ति ॥

विश्वामित्रः । आङ्गिरसोचितमात्थ राजहंसा इति । सकलकुवलयोत्तंसा राजहंसा अमी ।

जनकः । भगवन् इदमस्मत्प्राचीनेषु शोभते ननु मयि कतिपयग्रामटिकास्वामिनि ।

विश्वामित्रः । मैवं भोः ।

अवनिमवनिपालाः सन्तुशः पालयन्ता-
मवनिपतियशस्तु त्वां विना नापरस्य ।
जनक कनकगौरीं यत् प्रसूता तनूजां
जगति दुहितृमन्तं भूभवन्तं वितेने ॥

जनकः । भगवन् नूतनशतभुवननिर्माणनिपुणस्य भगवतः कियतीयमभिनववचनचातुरी नाम । स खलु भवान् यस्य

शलाकीकृत्य स्वां दृशमसमकोपारुणरुचिं
सुरश्रेणीचित्रं गगनतलभित्तौ रचयतः ।
सुधांशोर्भानोश्च प्रथमरचितं बिम्बयुगलं
सुधालाक्षासान्द्रद्रवभरितपात्रद्वयमभूत् ॥

शतानन्दः । राजर्षे सत्यमात्थ । किमुच्यतेऽसौ भगवान् ।

त्रिशङ्कोः स्वर्लोकादवनितलपातं रचयितुं
सुनासीरे कोपाद्विकसितपदाब्जे विकसितः ।
यदीयोऽसौ नव्यत्रिदशनगरारम्भरभसः
सुरस्तोमे भक्त्या मुकुलितकराब्जे मुकुलितः ॥

लक्ष्मणः । अपवार्य । आर्य कथमेवंविधं भगवतः प्रतापितभुवनत्रयं तपोभिधानं तेजः ।

रामः । अपि न विदितं ते राजर्षेरिदम् ।

रोषाभिभूतपुरुहूतपदाभिभूतं
दृष्ट्वा त्रिशङ्कुमथ कोपविपाटलश्रीः ।
आकुड्मलीकृतकराम्बुजराजिरम्या
सन्ध्येव दृष्टिरमरैर्यदुपासितास्य ॥

विश्वामित्रः । राजर्षे । अपि तावद् रत्नगर्भागर्भसम्भवं कन्यारत्नमलङ्कुरुते त्वाम् ।

जनकः । भगवन् भवत्प्रसादादधुना जामातृरत्नमप्यलङ्करिष्यते । राममवलोक्य सकौतुकं भगवन्

सकलजनविलोकनोत्सवाना-
मयमयनं कतरः पुरः कुमारः ।
हरितमणिमयूखहारिणो यः
कलयति कल्पतरोः प्ररोहलीलाम् ॥

शतानन्दः । भगवन् अयं च कतरो यः खल्वस्यैव

नीलनीरजदलोज्ज्वलकान्ते-
रन्तिके स्फुरति काञ्चनगौरः ।
लोचनस्य सुदृशः श्रवणाग्रे
सन्निविष्ट इव चम्पकगुच्छः ॥

विश्वामित्रः । नाम्ना तावद्रामलक्ष्मणावेतौ ।

जनकः । अहो कर्णामृतम् ।

शतानन्दः । निर्वर्ण्य भगवन्

एतयोरहमुदाररूपयो-
रुल्लसत्सहजसौहृदश्रियोः ।

कामपि स्वजनतां विभावये
कौस्तुभामृतमयूखयोरिव ॥

जनकः ।

एतयोः प्रकृतिरम्यरूपयो-
रुल्लसत्सहजसौहृदश्रियोः ।
आन्तरः स्फुरति कोऽपि सन्निधिः
प्रत्यगात्मपरमात्मनोरिव ॥

विश्वामित्रः । अयि योगीश्वरशिष्येदृशेषु गभीरेष्वभिनवोदन्तपीयूषवेशन्तेषु भवत एव मनो निमज्जति स्वजनभावे पुनरनयोर्वयमपि साक्षिणः ।

जनकः । तत् किं भ्रातरावेतौ ।

विश्वामित्रः । अथ किम् ।

जनकः । सहर्षं निर्वर्ण्य

तनुश्रिया निर्जितचम्पकोत्पलौ
सुवर्णनीलोत्पलकोशकोमलौ ।
अहो दृशामुत्सवदानदक्षिणौ
सुलक्षणौ लक्ष्मणलक्ष्मणाग्रजौ ॥

पुना रामं विलोक्य । सकौतुकं भगवन् किमेतत् ।

यथाहं निःसीमोत्सवसुभगभोगे भवकथा-
पथातीते चेतःप्रणयिनि रमे पुंसि परमे ।
तथैवास्मिन् बाले दलदमलनीलोत्पलदलो-
दरश्यामे रामे नयनपदवीमागतवति ॥

विश्वामित्रः । स्वगतम् । उचितमेतत् । न खलु सकललोकलोचनानन्दकरः शीतकरः । शङ्करशिरःशयालोः कलानिधेरपरं तत्त्वम् । प्रकाशं राजर्षे स एष सौन्दर्यातिशयस्य महिमा ।

जनकः । कः पुनराभ्यां पुत्रवतां मौलिमाणिक्यमारोपितः ।

विश्वामित्रः ।

किं शीतांशुमरीचयः किमु
सुरस्रोतस्विनीवीचयः
किंवा केतकसूचयः किमथवा
चन्द्रोपलानां चयः ।
इत्थं जातकुतूहलाभिरभितः
सानन्दमालोकिताः
कान्ताभिस्त्रिदिवौकसां दिशि-
दिशि क्रीडन्ति यत्कीर्तयः ॥

रामः । वत्स नूनमयं सकलगुणावदातस्तातः प्रस्तूयते ।

लक्ष्मणः । अपि नाम भूयोऽपि प्रस्तोष्यते ।

विश्वामित्रः । अपिच

यस्योद्यद्भुजदण्डचण्डिमवलत्कोदण्डलीलायिते-
र्निष्पीते दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे ।
लक्ष्मीमखविपाटलक्षतमयीमालम्बते केवलं
पौलोमीकरजाङ्कुरव्यतिकरादाखण्डलीयं वपुः ॥

अपिच

तस्य पद्मवनबान्धववंशो-
त्तंसमांसलमहामणिमौलेः ।
कायकान्तिपरिभूतमनोजौ
ताविमौ दशरथस्य कुमारौ ॥

जनकः । सहर्षम्

यद्बाहू वहतः पराक्रमकृतां प्रत्यर्थिसीमन्तिनी-
चक्षुःकज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकाम् ।
यद्दोर्दुर्मदकर्मकार्मुकगुणप्रोत्तालकोलाहलै-
र्वैरिस्त्रीकलमेखलाकलकलाः पीता इवास्तं गताः ॥

अपिच

यस्येन्द्रारिजयश्रिया सह झगित्याकृष्य मौर्वीलतां
साकं भूवलयेन चापवलयं दोर्मण्डले बिभ्रति ।
पौलोमीकुचकुम्भसीमनि रहः पश्यन् नखाङ्कं नवं
धत्ते चेतसि केवलं ननु करे कोदण्डमाखण्डलः ॥

तपनकुलशिरःकिरीटकोटि-
स्फुरदरुणोत्पलकुड्मलस्य * तस्य ।
दशरथनृपतेरिमौ मृगाङ्क-
प्रतिमसुरेखमुखाम्बुजौ तनूजौ ॥

विश्वामित्रः । अथ किम् ।

जनकः । अहो धन्यता दशरथस्य यस्य द्वे अपि तनयावलोकनशीतले दृशौ ।

शतानन्दः । दिशौ च ।

विश्वामित्रः । ननु दिश इति वक्तव्यम् ।

शतानन्दः । तत् किमन्यावपि कुमारौ दशरथस्याङ्कं भूषयतः ।

विश्वामित्रः । अथ किम् । यौ खलु भरतशत्रुघ्नौ प्रतिबिम्बाविवरामलक्ष्मणयोः ।

शतानन्दः । नूनममी ऋष्यशृङ्गचरुभागानां विलासाः ।

जनकः । दशरथभागधेयानां च ।

विश्वामित्रः । एवमेतत् । अवधिः खलु भाग्यवतां राजा दशरथः ।

जनकः । महात्मवतां च ।

---

* एतेन पूर्वं राजकिरीटकोटिष्विन्दुविकास्यरुणोत्पलनिवेशनस्य संप्रदाय आसीदिति स्फुटं प्रतीयते ।

विश्वामित्रः। तत् किमस्माभिरुच्यतां। भवतोर्महिम्नि भवन्तावेव साक्षिणौ।

जनकः। कतरोऽहं दशरथस्य महिमाभोगमनुभवितुं कासार इव सागरस्य।

विश्वामित्रः। शोभन्त एव विनयमधुराणामधरीकृतात्ममहिमानः कामं सत्यविधुरा अपि वाचः। अथवा समुचितमेवैतत्। यतः

अजनिवान् दशरथः स हि राजा
राममिन्दुमिव सुन्दरमूर्तिम्*।
लोकलोचनविगाहनशीलां
त्वं पुनः कुमुदिनीमिव सीताम्†॥

लक्ष्मणः। अपवार्य आर्येन्दुकुमुदिनीदृष्टान्तेन किमपि संविधानं सूचितं भगवता।

रामः। सप्रणयकोपम्। अलमलीकालापितया।

जनकः। स्वगतम्। कथमनया भङ्ग्या किमपि सूचितं मुनिना तत् किमनेन रभसवशंवदेन विस्मृतमेव शाम्भवं धनुः। प्रकाशम्। भगवद्वचनेन भगवतो वक्रकमनीयेन वाग्विलासेन द्वितीयेनेव हरकार्मुकेण किमपि कौतुकितोऽस्मि।

विश्वामित्रः। स्वगतम्। कथमनया परिपाट्या हरचापारोपणमुद्भावयति। भवतु प्रकाशम्। राजर्षे साधु स्मारितोऽस्म्यतीव मे कौतुकं वृषभकेतुकार्मुकावलोकने। तेन तदानयनायादिश्यन्तां पुरुषाः। अथवा किमन्यै रामभद्र एवादिश्यताम्।

जनकः। सविस्मयम्। भगवन् कथं मुग्ध इव दुग्धमुखमपि राममिन्दुकिरीटकार्मुकानयनार्थमादिशसि। न जानासि किम्

एतत् तद् दुर्विगाहं तुहिनगिरिमयं कार्मुकं यत्र जज्ञे
मौर्वी दर्वीकराणां पतिरुदधिसुतानायकः सायकश्च।
दोर्दण्डेश्चन्द्रमौलेर्नतमपि यदभूदुन्नतं कार्मुकाणां
बाष्पाम्भोवृष्टये च त्रिपुरमृगदृशामैशमप्यैन्द्रमासीत्॥

विश्वामित्रः। जानामि।

सेवायातसमस्तखेचरकरक्रीडाचलच्चामर-
श्रेणीमारुतपानपीननिबिडज्यापन्नगाकर्षिणा।
गाढाकुञ्चनजृम्भमाणतुहिनस्यन्दैर्यदीयैः श्रमः
संत्यक्तः पुरवैरिणाऽपि तदिदं शैलेन्द्रसारं धनुः॥

जनकः। तत् कथमस्यानयनाय रामायादिशसि।

विश्वामित्रः। न केवलमानयनाय किन्त्वानमनाय। रामं प्रति वत्स बध्यतां परिकरः इदं च

मारीचमारीचतुरं सुबाहोरपवारणम्।
न्यस्यन्तां लक्ष्मणकरे ताटकाताडनं धनुः॥

जनकः। कथमसम्भावनीयमेवोद्भावयसि।

विश्वामित्रः। कथमिदं न विदितं ते। अनेन हि

प्राप्यचापनिगमानितः क्रमात्
संप्रताप्य विशिखैर्निशाचरान्।
अस्मदीयमखरक्षणक्रिया-
दत्तेव* गुरुदक्षिणीकृता॥

जनकः। विमृश्य निश्वस्य च भगवन् अस्त्येतत् किन्तु

मारीचमुख्यरजनीचरचक्रचूडा-
चञ्चन्मरीचिचयचुम्बितपादपीठः।
अत्राभवद्विफलबाहुबलावलेपो
वीरः शशाङ्कमुकुटाचलचालनोऽपि॥

विश्वामित्रः। किमेतावता। नन्वतएव राममादिशामि। रामं प्रति वत्सोत्तिष्ठ कुमुदिनीकान्तकलाकिरीटकार्मुकारोपणप्रवीणतया संप्रीणयास्मान्।

जनकः। स्वगतं।

यस्य ख्याता जगति सकले निस्तमिस्रा तपश्री-
र्मिथ्योत्कण्ठः कथमिह भवेदेष गाधेस्तनूजः।
बालो रामः किमपि गहनं कार्मुकं चन्द्रमौले-
र्दोलारोहं कलयति मुहुस्तेन मे चित्तवृत्तिः॥

पुनः पृथिवीमालोक्य।

रतिरिव जननेत्रानन्दिनी नन्दिनी ते
कुसुमशर इवायं रूपसारः कुमारः।
यदि तु धनुरपीदं प्राप्तमेतस्य हस्तं
कुसुममयमिव स्यात्संभृतः सम्प्रदायः॥

शतानन्दः। राजर्षे किमेतत् मूढ इव मुहुर्मुहुरालोकसे। अनुवर्तस्व महर्षेर्वचनम्।

जनकः। प्रकाशम्। अनुवृत्तमेव। रामं प्रति वत्सानुष्ठीयतां गुरुवचनम्।

रामः। उत्थाय परिकरं बध्नाति।

प्रविश्य प्रतीहारी। जेदु जेदु देवो कोवि बह्मणो देवस्स दंसणत्थी दुआरदेसम्मि चिट्ठदि ता किं पवेसीअदु†।

* गात्रमिति पाठान्तरम्।

† भगवान् त्रिकालदर्शी विश्वामित्रः श्रीरामचन्द्रसीतयोर्भाविविवाहं मनसि कृत्वैव समुचितमिदं दशरथमाहात्म्योत्कीर्तनं जनकस्येति दृढीकुर्वन् इमं श्लोकमधिजगौ। यतो वरवधूपक्षयोर्वरपक्ष एव श्रेष्ठ इतीदानीमपि लोके प्रसिद्धिः।

* दक्षिणेनेति पाठान्तरम्।

† जयतुजयतु देवः कोऽपि ब्राह्मणो देवस्य दर्शनार्थी द्वारदेशे तिष्ठति तत् किं प्रवेश्यताम्।

जनकः । आः इदमपि किं जनकः प्रष्टव्यः ।

प्रतीहारी । तथेति निर्गत्य तेन सह प्रविशति ।

जनकः । ब्रह्मन् प्रणम्यसे ।

मुनिः । राजन् सुमतिर्भूयाः ।

जनकः । स्वगतम् । अन्यादृशीयमाशीःपरिपाटी । भवतु प्रकाशं मुने इहास्यताम् ।

मुनिः । संदेशहरः खल्वस्मि ।

जनकः । कस्यायं कीदृशो वा संदेशः ।

मुनिः ।

पीत्वा कज्जलकालिमानमखिलं क्ष्मापालनारीदृशां
नीत्वा स्फीतयशोट्टहासमहसा लोकत्रयं शुभ्रताम् ।
चण्डीशं चरितैरनेकविभवैरद्यापि यः सेवते
हे वैदेह स जामदग्न्यपरशुस्त्वामेतदाभाषते ॥

जनकः । स्वगतम् । अहो गर्वाङ्कुरस्य वक्रता । भवतु प्रकाशं किं तत् ।

मुनिः ।

कस्मैचिद् देहि कन्यां नर-
पतिशिशवे दीर्घमायुर्लभस्व
व्यावर्तस्वाप्रियाच्चः पुरमथन-
धनुःकर्षणालापपापात् ।
नोचेदन्योऽस्त्युपायस्तव-
कलुषमषीपङ्कसंक्षालनाया-
मस्मद्विस्तारिधाराञ्चलब-
हलपयःपूरदूरावगाहः ॥

जनकः । विहस्य । तन् मयापि प्रतिसंदेशः कथनीयस्तस्य ।

मुनिः । कीदृशोऽसौ ।

जनकः ।

त्वं मित्रं मम जामदग्न्यपरशो तेनैतदाभाष्यसे
सम्प्रत्येव यथाप्रतिश्रुतमियं कन्या मया दीयते ।
तेनेह स्वयमेत्य धूर्जटिधनुर्धारयेदो;सम्पदो
जामातुः पुरतश्चिराय भवता धाराजलं त्यज्यताम् ॥

मुनिः । तथास्त्विति निष्क्रान्तः ।

जनकः । आङ्गिरसोपक्षिप्तप्रस्तावदयं जामदग्न्येन निजकोपानलस्फुलिङ्गः ।

शतानन्दः । किमेतावता । अतिगम्भीरभुजसारकासारकैरवारामः खलु रामः ।

विश्वामित्रः । राजर्षे के पुनरमी परितः स्फुरन्मणिमौलयः परःसहस्रा दृश्यन्ते ।

जनकः ।

श्रीकण्ठकार्मुकनिरस्तभुजावलेपा
नानादिगन्तजगतीपतयः किलामी ।
अभ्यर्थनां मम किमप्यभिवर्तमाना
गृह्णन्ति कानिचिदहानि नरेन्द्रपूजाम् ॥

विश्वामित्रः । वत्स रामभद्र तदेषामेव पश्यतां कौतुकमस्माकं पूरय ।

रामः । विश्वामित्रं प्रणम्य निष्क्रान्तः ।

जनकः । आङ्गिरसापरिशीलितसंनिवेशस्य वत्सरामस्य भवता प्रत्यनन्तरीभूयताम् । आदिश्यतां कञ्चुकी च करकलितकमलमालाया जानक्याः स्वयम्वराङ्गणावतरणाय ।

शतानन्दः । तथास्त्विति निष्क्रान्तः ।

प्रविश्य कञ्चुकी । जयतु देवोऽनुष्ठित एव देवादेशः ।

विश्वामित्रः । विलोक्य सहर्षम् । आः कथमुद्गतमेव रामचन्द्रयशःपताकाकेतुदण्डेन * हरकोदण्डेन । पुनः सविस्मयम् । अये

राघवेण शिशुनापि किलायं
लीलयैव नमितो हरचापः ।
दूरमुल्लसति यस्य समन्ता-
दम्बरेऽपि गमितो गुणघोषः ॥

लक्ष्मणः । भगवन् एवमेतत् । तथाहि

पूर्णा एव पुरारिचापकपटक्ष्माचलग्रामणी-
गूढानेकगुहागभीरकुहरस्फारप्रतिध्वानिभिः ।
मौर्वीभूतभुजङ्गराजवदनश्रेणीविसर्पद्वचः-
प्रारब्धार्ययशःप्रशस्तिसदृशैर्ज्याघातघोषैर्दिशः ॥

जनकः । आः किमुच्यते दिशः पूर्णा इति । ननु

एतैः श्रीकण्ठकोदण्डचञ्चन्मौर्वीभवै रवैः ।
चिरात् प्रतिज्ञया साकं पूर्णो मम मनोरथः ॥

प्रतीहारी । कञ्चुकिनं प्रति । अज्ज पेक्खपेक्ख कोदूहलं । सीदारामेहिं मिलिअ उण हरचावारोवणं समग्गीकरीअदि † ।

कञ्चुकी । सकौतुकं कथमिव । विमृश्य विहस्य च । आ ज्ञातम् ।

करकिसलयलीलाचारु चण्डीशचापे
दशरथतनयेन स्वैरमाकृष्यमाणे ।
रससरसविकासी सीतया पुङ्खितोऽसौ
कुवलयदलदामश्यामकान्तिः कटाक्षः ॥

* केतुमण्डलेनेति पाठान्तरम् ।

† आर्य पश्यपश्य कौतुकं सीतारामाभ्यां मिलित्वा हरचापारोपणं समग्रीक्रियते ।

लक्ष्मणः । भगवन् अत्यद्भुतं वर्तते । नन्वयम्

भिन्दन् निद्रां मुरारेः सकल-
भुजभृतां ग्लानयन् शौर्यदर्पं
छिन्दन् दिक्कुम्भिकर्णाञ्चलचल-
नकलां कम्पयन् कूर्मराजम् ।
आर्यश्लाघागभीरः प्रलय-
जलधरध्वानधिक्कारधीर-
ष्टाङ्कारः क्षुभ्यमाणत्रिपुर-
हरधनुर्भङ्गभूराविरस्ति ॥

प्रतीहारी ।

तेल्लोक्कं लङ्घअन्तो गिरिगहिरगुहा*सुत्तजग्गन्तसीह-
प्फारुम्मिल्लन्तकण्ठत्थणिदपडिरवुग्गारपूरिज्जमाणे ।
बह्मण्डे भज्जमाणे कडुविडअकडक्कारपब्भारभीमो
अम्मो भज्जन्तचण्डीसरधणुहटणक्कारओ उग्गमेइ †

कञ्चुकी । पश्य कौतुकम् ।

क्रीडाभग्नमृगाङ्कमौलिधनुषं सीतार्पितां बिभ्रतं
बिभ्राणं कमलस्रजं निजगृहं शृङ्गारवीरश्रियोः ।
रामं व्रीडवशादवाञ्चितमुखं भूमीभुजां पश्यतां
चेतः क्रोधविषादविस्मयमुदामूर्मीः समालिङ्गति ॥

प्रविश्य शतानन्दः । राजर्षे विषीद वा प्रसीद वा इदं यथादृष्टमुपवर्ण्यते ।

ज्यावल्लीं ललिताङ्गुलीकिसलयैराकर्णमाकर्षतो
न भ्रूभङ्गुरतां गता रघुशिशोर्भग्नं धनुर्धूर्जटेः ।
नाहङ्कारतरङ्गितो ध्वनिरभूत् कण्ठेऽस्य दीर्घद्रुन-
ष्टाङ्कारस्तु चकार तारतरलः शब्दाद्वितीयं जगत् ॥

जनकः । कथं पुनरेतावतीमतिभूमिमवगाहमानोऽपि वत्सो रामभद्रो भवता न निवारितः ।

शतानन्दः । कथंकारं वारयामः ।

यावत् कन्दुकलाञ्छनाञ्चितकरः शोणाब्जनालाकृतिः
कौशल्यार्पितमङ्गलप्रतिसरो वत्सस्य दोःकन्दलः ।
किञ्चिच् चञ्चति तावदेव हि दलच्चण्डीशचापोच्छल-
च्छब्दैकार्णवमग्नमेतदखिलं जातं त्रिलोकीतलम् ॥

जनकः । तदलं कालातिपातेन याच्यतामनुमतिर्भगवतो विश्वामित्रस्य जानकीरामभद्रयोः पाणिसंघट्टनाय ।

शतानन्दः ।

सद्यो* विघट्टमानेन धनुषैव पिनाकिनः ।
ननु संघट्टितौ पाणी जानकीरामभद्रयोः ॥

तदूर्मिलालक्ष्मणयोरेव पाणिसंघट्टनाय भगवानभ्यर्थनीयः ।

विश्वामित्रः । विहस्य । अस्त्वेतत् परन्तु

पाणीन् जनककन्यानां पीडयन्तु सहानुजैः ।
सीताया रामभद्रो मे पाणिपीडन† मिच्छति ॥

जनकः । सहर्षम् । कथं माण्डवीश्रुतकीर्तिभ्यां भरतशत्रुघ्नयोरपि परिणयमनुसंधत्ते भगवान् ।

विश्वामित्रः । अथ किम् ।

जनकः । तद् गृहीतमिदमधिशेखरमाज्ञाकुसुमं भगवतस्तदागच्छत समीहितं निष्पादयामः ॥ इति निष्क्रान्ताः सर्वे ॥

॥ तृतीयोऽङ्कः ॥

* गुहासुत्तगज्जन्त इति पाठान्तरम्

† त्रैलोक्यं लङ्घयन् गिरिगभीरगुहासुप्तजाग्रत्सिंहस्फारोन्मीलत्कण्ठस्तनितप्रतिरवोद्गारपूर्यमाणे । ब्रह्माण्डे भज्यमाने बहुविकटकटत्कारप्राग्भारभीमः अहो भज्यच्चण्डीश्वरधनुष्टणत्कार उद्गच्छति ।

* सम्यक्संघट्टमानेनेत्यपि पाठान्तरम् ।

† पाणिग्रहणमित्यपि पाठान्तरम् ।

## THE SA'HITYA-DARPAṆA,

OR

## MIRROR OF COMPOSITION.

(*Continued from page 160*)

TEXT.

No 718 When there is an apparent incongruity between a genus and *any of* the four beginning with genus (i e genus, quality, action and substance); between a quality and *any of* the three beginning with quality; between an action and another action or a substance, or between two substances—it is Contradiction, *occurring* in *these* ten forms.

COMMENTARY.

*a* For examples in their order.—

"Separated from thee, the wind of the Malaya mountain is to her a conflagration; the beams of the moon are impregnated with heat; even the hum of the bee pierces her heart; even the lotus-leaf is to her the summer sun."

*b.* "O king, the hands of the wives of the Twice-born (Bráhmans) hardened by the constant rub of the pestle and by manifold household work are, whilst thou reignest, soft like the lake-born flower (lotus)."*

*c.* "Though Self-existent, yet Thou art born, though devoid of passion, Thou destroyest thy foes (the Demons), though in Thy *deepest* sleep, Thou art awake—is there the being who knows Thee in truth?"

* The Miltonic representation of the Deity "Dark with excessive light" should, perhaps, be ranked under this variety of the figure, i. e. the Contradiction of Qualities.

*d.* "To the deer-eyed lady, separated as she was from the lap of her beloved, the Lord of Night (moon), in his complete glory, was full of burning poison"

*e.* "O! this form, ecstatic to my eyes but hard to obtain even through imagination,—O! the one with drunken eyes gladdens my heart yet torments it."

*f.* "Śiva, afraid of the immense weight," &c.

*g.* In the stanza beginning "To the deer-eyed lady,' if, in the fourth line, *instead of 'full of burning poison,'* we read 'the mid-day sun,' we shall have the Contradiction of Substances.

*h.* In the example beginning 'Separated from thee,—' 'the wind' &c., which, as denoting many individuals, are generic terms, seem, at first sight, to contradict 'a conflagration,' 'heat,' 'piercing the heart' and 'the sun,' which, respectively, signify a genus, a quality, an action and a substance. The apparent contradiction is explained by the fact that the state of things was caused by separation.

*i.* In the example beginning 'Though Self-existent,—' the quality of self-existence &c. is opposed to the action of being born &c., *and the seeming contradiction* is explained by the greatness of the power of God, *who, though unborn, can manifest himself as a human being born.*

*j.* In the verses commencing "Śiva, afraid of the immense weight,' the contradiction may be expressed thus: Śiva himself, who ever bears the Ganges on his head, ceases to bear it &c.'; and the boldness with which poets are priviledged to speak is the explanation of it. The other *illustrations* are clear.

*k.* In the Peculiar Causation, an effect only, as represented without a cause, is seemingly nullified; in the Peculiar Allegation, a cause only, without an effect; and in the present figure, both the things *represented* are apparently nullified by eath other. Such is the difference.

TEXT.

No 719. When a cause and the effect are represented as locally separated, it is Disconnection.

COMMENTARY.

*a.* For example:—

"She is a girl, but it is our minds that want manly boldness; she is a woman, but it is we that are timid; she bears a couple of plump and lofty breasts, but it is we that are oppressed; she is charged with the weight of fleshy thighs, but it is we that are unable to move—marvellous it is that the faults belonging to another have deprived us of power."

*b.* This figure being counted as an exception, the ornament of Contradiction (§718) is left to rest in the mutual inconsistency of two things residing in the same place.

TEXT.

No. 720. When the *respective* qualities or actions of a cause and its effect are opposed to each other; or when an endeavour becomes fruitless and brings an evil result; or when there is an association of two incongruous things—it is held Incongruity.

COMMENTARY.

*a* For examples in their order:—

"His sword, wonderful to say, dark as it is like the Tamála tree, in every battle, having obtained contact with his hand, engenders, at the very moment, a fame white as the autumnal moon, glorifying the triple world!"

Here, we have white fame arising from the dark sword, figured as the cause,—in opposition to the rule or theory that the qualities of the effect conform to those of the cause.

*b* "O thou with eyes like the blue lotus-leaf, how ecstatic is the joy thou givest, yet Separation which has its origin in thyself—how fiercely it burns my frame!"

Here we have burning Separation originating in a joy-existing cause, *viz*, a woman.

*c.* "A store-house, as it is, of treasures, I resorted to this ocean, eager to obtain riches. But far from obtaining riches, I had my mouth filled with salt-water."

Here, not only is the desired wealth not obtained, but, on the contrary, the mouth is filled with salt-water.

*d.* "The woods with barks of trees for ornament, and the glory of royalty admired even by Indra—how vast the disparity. Ah! how hard it is to bear the dealings of Fate, evil-disposed as he ever is."*

We have, here, the association of the woods and royal glory. The stanza is mine.

*e.* Or for example:—

"He, the Sleeper on the Ocean (Vishṇu), whose vast belly drank up the worlds at the consummation of the ages—that Deity was drunk in by one of the fair ones of the city, with a corner of one of her eyes, languid in love!"†

TEXT.

No. 721. The Equal is the commendation of an object fitly united *with another.*

COMMENTARY.

*a.* For example:—

"'The moon-light has been wedded to the deer-marked luminary (moon), freed from clouds; Jahnu's daughter (Gangá) has come down to meet worthy Ocean'—such

* The commentator does not admit this as a proper example of the fourth variety of the figure, contending that Ráma, the subject of the stanza, was not a king when he went to the woods. The author, however, perhaps means to intimate that majesty was the hero's by nature, though he was not, at the time, inaugurated a king.

† Mallinátha, in commenting on this stanza (Mágha, xiii, 40), characterizes the figure as the Exceeding (see §723), and in so doing differs with the author of the Kávya-prakáśa as well as with that of the present work.

were the words—harsh to the ear of the other monarchs—that the citizens, with one voice, spoke, glad at the union of that couple of equal worth."

TEXT.

No. 722 The Strange is, when, for the attainment of an object, one acts contrarily *to it*

COMMENTARY.

*a.* For example:—

"For the purpose of being elevated, he bows down; for the sake of his life, he parts with it altogether; for the sake of happiness, he subjects himself to misery—who is there a greater fool than the servant?"

TEXT.

No. 723 When of the container and the contained, one is represented as vaster than the other, it is termed the Exceeding.

COMMENTARY.

*a.* The case when the Container is vaster; as:—

"How shall we better describe the vastness of the Ocean than by saying that Vishṇu sleeps upon him obscure, having thrown the worlds into his belly."

The case when the Contained is vaster; as:—

*b.* "The Foe of Kaiṭabha (Vishṇu) could not contain within himself the flood of joy caused by the advent of the holy saint—He in whose *divine* person the worlds did freely abide, when, at the consummation of a cosmic cycle, He had withdrawn within Himself all the created souls."

TEXT.

No. 724. The Reciprocal is when two things do the same act to each other.

COMMENTARY.

*a.* For example:—

"She of the slender frame is graced by thee and thou art graced by her: The night gives glory to the moon and the moon lends lustre to the night."

TEXT.

No. 725 When something that depends on another is represented as existing without it; or when one object is spoken of as being present in many places simultaneously; or when somebody, in doing an act, unexpectedly does another act, either unconnected with the subject, or otherwise; it is the Extraordinary, and is thus three-fold.

COMMENTARY.

*a.* For examples in their order:—

"Who would not glorify the poets, whose discourse—though they have gone to heaven—graced with infinite beauties—delights the world, generation after generation, until the end of creation?"

*b.* "In the forest, by the river's side, in the mountain cave,—*every where* do thy foemen see thee standing in front, terrible like Death!"

*c.* "Wife, minister, confident, beloved disciple in the charming arts,—say, what has not merciless Death deprived me of, in depriving me of thee?" *Raghuvanśa.*

TEXT

No 726 The Frustration is when by the same means that one employed in bringing a thing to a particular state, another brings it to an opposite state.

COMMENTARY

*a.* For example, the stanza beginning 'Them, who with a look.'* (§636 *a.*)

TEXT

No. 727. Or when the contrary of a certain act is justified *by the same reason*, with facility.

COMMENTARY.

*a.* *Supply* 'It is the same Frustration.'

*b.* *For example:*—

"'Stay here, my love; after but a few days I shall speed to be here again—*stay here*, for thou art tender and canst not bear toil'—'Tenderness, fair youth, is rather a reason for my going with thee, for tender, as I am, I shall not endure the terrible pangs of separation'."

Here, the hero mentions the tenderness of the heroine as a reason against her accompanying him, and the heroine, on the other hand, makes it, with still more facility, a reason for the same.

TEXT.

No 728. When something mentioned first is spoken of as the cause of what follows, and this again of what comes next, and so on, it is the Garland of Causes.

COMMENTARY.

*a.* For example:—

"Knowledge is acquired from association with the learned; meekness from knowledge; the affection of the people from meekness; and what *is it that is* not *obtainable* from the affection of the people?"

TEXT.

No. 729. The Serial Illuminator, again, is when a number of objects is, in succession, connected with the same attribute.

COMMENTARY.

*a.* For example:—

"When thou didst come to fight, the bow obtained the arrows; the arrows, the foeman's head; the foeman's head, the earth; she again, thee; and thou, *immortal* fame."

Here the action of obtaining is the attribute.

TEXT.

No. 730. When what is mentioned first is qualified, (1) affirmatively, or (2) negatively, by what follows and this again by what comes next, and so on, it is the Necklace, and is thus two-fold.

* "Them, who, with a look, recall to life the Mind-born God, who was burnt by a look—we glorify the fair-eyed *women*, the conquerors of the Fierce-eyed Divinity (Śiva)."

COMMENTARY.

*a* For examples in their order :—

"—When (in Autumn) the lake *is adorned* with the expanded lotus, and the lotus *is* associated with the bee, the bee *is perpetually* humming and the humming is attended with the excitement of love"

*b* "There was not a lake that was not graced with fair lotuses, there was not a lotus in which there reposed not a bee, there was not a bee which hummed not melodiously, there was not a hum that ravished not the heart"

*c* Sometimes the qualified, too, is found successively to be affirmed or denied as qualification;* as—

"The lakes are pure, the lotuses bloom in the lakes, the bees fly to the lotuses, the musical hum is now uttered by the bees"

So also in the case of a denial.

TEXT

No 731. A succession of things, gradually rising in excellence, is termed the Climax (*sára*)

COMMENTARY.

*a* For example :—

"The most important thing in the requisites of royalty is a kingdom; in a kingdom, a capital; in a capital, a palace"—&c

TEXT.

No 732 The Relative Order is when a reference is made respectively to what have been mentioned.

COMMENTARY.

*a* For example.—

"'They bloom'. 'Pluck them with thy nails.' 'It blows': 'Hedge it with the skirts of thy garment.' 'They enter the garden'. 'Scare them away with the tinkling of thy bracelets'—thus, fortunate youth, do the female friends of thy love separated from thee, talk to each other by hints, touching the *vanjula* flowers, the southern breeze and the *kokila*."

TEXT.

No 733. When the same object (1) is, or (2) is made to be, in many places, in succession; or when many objects (3) are, or (4) are made to be, in the same place, in succession,—it is termed the Sequence (*paryáya*).

COMMENTARY.

*a*. For examples in their order :—

"Reposing for a moment on the *thick* eye-lashes, striking the *delicate* lips, split by the fall upon the breasts, rolling down the dimples in the skin—thus gradually did the first rain-drops reach the navel of Umá."

* The reader will observe that the term 'qualified' (विशेष्य) is here used in the sense of *subject* and 'qualification' to denote a member of the predicate.

*b* "Wolves, crows and jackals run in thy foeman's city, where walked gay women once, languid with the weight of hips"

*c* "That hand, the fingers of which were cut by the handling of the *sharp-edged* sprouts of the sacred grass (kuśa), she made a friend to the rosary—kept off from the under-lip which she had ceased to colour, *kept off* from the play-ball reddened by the unguent of her breasts"

*d* 'Thy foemen's wives now let fall thick drops of tears on those breasts where rolled the pure pearl-necklace"

*e* In these varieties, the Place or Places is either one or are several, and so also the Placed To illustrate In the stanza beginning 'Reposing for a moment,' the rain-drops are gradually in the places—eye-lashes &c.—which are several. In the example commencing 'Wolves, crows and jackals,' the 'wolves' &c, the placed, were successively in the foeman's city, which is one place. So of the rest

*f* Since in the present figure one object is *represented to be* in many places only in consecution, it is distinct from the Extraordinary (§725), and it is different from the Return (§734), because of the absence of an exchange.

*(To be continued.)*

THE MESSENGER CLOUD.

I

Dark are the shadows of the trees that wave
Their pendent branches upon Rama's Hill,
Veiling the stream where Sita loved to lave
Sweet limbs that hallowed as they touched the rill:
There a sad Spirit, whom his master's will,
Wroth for a service he had rendered ill,
An exile from his happy home had torn,
Was sternly doomed for twelve long months to mourn
Of all his glories reft, of his dear love forlorn.

II

Some weary days, intolerably slow,
The listless exile all alone had passed:
The bracelet clung not to the arm that woe
Had withered, and the weeping and the fast;
When on a day of June he upward cast
His aching eyes, lo! on the mountain lay
A glorious cloud embracing it, as vast
As some huge elephant that stoops in play
To trample down the bank that bars his onward way.

III

Once and again his wistful eyes he raised,
Checking the tear-drop in her secret springs,
And on the jasmine's sweet restorer gazed
The mournful servant of the King of Kings—
Mournful, for if the first seen rain-cloud brings
Trouble and doubt to him whose arms are pressed

येनोपदिष्टमद्यापि पुरस्त्रीविरहव्रतम् ।
न भग्नं तत् त्वया भग्नं जगद्गुरुशरासनम् ॥

रामः । भगवन् अलीकलोकवार्तया निरपराधे मयि मुधा कोपकलङ्कितोऽसि ।

भार्गवः । तत् किं स्वस्ति हरकार्मुकाय ।

रामः । नहिनहि ।

भार्गवः । तत् कथं निरपराधोऽसि ।

रामः ।

मया स्पृष्टं नवा स्पृष्टं कार्मुकं पुरवैरिणः ।
भगवन्नात्मनैवेदमभज्यत करोमि किम् ॥

भार्गवः । आः कथं रे चन्दनदिग्धं नाराचं निधाय हृदयं मे शीतलयसि । तदलमनेन कुठारमुद्यम्य ।

हे राम कामरिपुकार्मुकमर्मघात-
संजातपातक तवैष कठोरधारः ।
सीताकरव्यतिकरप्रतिकूलबन्धुः
कण्ठं पुरा विशतु निष्करुणः कुठारः ॥

तत् प्रवीरो भव ।

रामः ।

हारः कण्ठं विशतु यदिवा तीक्ष्णधारः कुठारः
स्त्रीणां नेत्राण्यधिवसतु नः कज्जलं वा जलं वा ।
संपश्यामो ध्रुवमिह मुखं प्रेतभर्तुर्मुखं वा
यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः ॥

जामदग्न्यः । आः कथं मामपि प्रणतिपात्रं ब्राह्मणमात्रमिव मन्यसे ।

पुनः सामर्षम् ।

जानीषे नहि जामदग्न्यमपि रे यद्दीर्घदोःकन्दल-
द्वन्द्वास्कन्दितबाहुना रणभुविस्कन्देन मन्दौजसा ।
नासादीद्गुरुसंपदं मम कथं वक्रानुसारादिति
क्रुद्धेनोद्धृतमैक्षि शङ्करकरन्यस्तं विधातुः शिरः ॥

पुनः सामर्षम् । किमात्थ रे किमात्थ न वयं ब्राह्मणेषु प्रवीरा इति । कथं क्षत्रियजातिगर्वितो ब्राह्मणजातिं तृणाय मन्यसे । तदिदानीमावयोः का गरीयसीति संग्रामतुलैव निर्णेष्यते ।

रामः ।

भो ब्रह्मन् भवता समं न घटते संग्रामवार्तापि नः
सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्धनि ।

लक्ष्मणः । जामदग्न्य एवमेतत् ।

यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुजा-
मस्माकं भवतां पुनर्नवगुणं यज्ञोपवीतं बलम् ॥

रामः । वत्सालमिह माननीये मुनौ दुर्विनयवैदग्ध्येन ।

जामदग्न्यः । अस्य को दोषः ।

दारैर्मुक्तकुचाङ्कुशैः परिवृतं प्राचीनमेषां नृपं
नाहिंसीद्यदसौ कुठारहतकस्तस्यैतदुज्जृम्भितम् ।
यन्नारीकवचान्वयप्रणयिनां क्षत्राधमानामिमा
दुर्वाचः प्रविशन्ति मे श्रवणयोर्धिक् क्षत्रगोत्रे कृपाम् ॥

रामः । अलमिह नीरकण्ठे कठोरकोपतया । तत् क्षम्यताम् ।

जामदग्न्यः । आः किमुच्यते नीरकण्ठ इति । विषकण्ठः खल्वसौ ।

लक्ष्मणः । भगवन् शितिकण्ठशिष्येण विशेषतः क्षन्तव्यम् ।

जामदग्न्यः । आः कथं विषकण्ठनामसाम्येन त्वमपि मे गुरुः ।

लक्ष्मणः । विहस्य । भगवन्नन्याभिसंधानेन मयेदमुक्तं यत् किल ।

किरीटमधिरूढेऽपि बाले प्रालेयरोचिषि ।
शितिकण्ठस्य किं चित्ते धत्ते कोपाङ्कुरः पदम् ॥

तद्भवान् तदन्तेवासीति विशेषतः क्षन्तुमर्हति ।

जामदग्न्यः । स्वगतम् । अहो अस्य क्षत्रियबटोर्वाक्परिपाटीपाटवम् । भवतु प्रकाशम् । तदिदं क्षान्तमेव मयायं तु न क्षमते प्रकृतिकठोरः कुठारः । शीलं न वेत्सि कथमस्य ।

क्रीडाविनिर्मितसुदुर्मददोर्विलास-
निःशेषराजकवधस्य परश्वधस्य ।
कीलालकीकसकचैः परितो विचिन्त्य
येन त्रिधापि विदधे पृथिवी त्रिवर्णा ॥

पुनः सामर्षम् । कथमस्य हरप्रसादपरशोः शीलमपरिशीलितं ते ।

यत्र क्रामति सङ्गराङ्गणभुवं दुर्वारधाराज्ज्वल-
क्षुण्णक्षत्रकिशोरकण्ठरुधिरैर्नीरेणुका भूरभूत् ।
तादृग्वीरवरस्वयंवरपरस्वर्लोककन्याकर-
क्रीडापुष्करदामरेणुभिरभूद् द्यौरेव रेणूत्कटा ॥

लक्ष्मणः । भगवन् एतत् सत्यं यत् किल भवत्कुठारधाराज्ज्वलविलसितेन नीरेणुका भूरभूदिति ।

जामदग्न्यः । स्वगतम् । आः कथं रेणुकावृत्तान्तेन मर्म विध्यति । भवतु प्रकाशम् । अये क्षत्रियपोतालमिह निरपराधे भवति मुधा परश्वधपातेन । तदयं मे प्रकृतिकठोरभाषिणं भवत्कण्ठमेव शातयति कुठारः ।

नेपथ्ये । अये जामदग्न्य कथमतिप्रगल्भसे । तदिदमिदानीं भवच्छासनाय शरासनमानीयते ।

जामदग्न्यः । विहस्य । कथमयं जनकः । उच्चैः अये या-

त्रवल्क्यशिष्य किं भवतः शरासनेन पद्मासनमेवावलम्बस्व ।
पुनः सोत्प्रासम् ।

युष्माकं भोः सुघटितबहुन्यस्तपद्मासनकण्ठा
मिथ्योत्कण्ठा किमिति समिति क्षत्रियश्रोत्रियाणाम् ।
तेऽन्ये वञ्चत्करतलचलच्चण्डनिस्त्रिंशधारा-
धौतारातिद्विपमदमषीपङ्कपूराः प्रवीराः ॥

तदलं भवता। एतावेव तावत् क्षत्रियस्फुलिङ्गौ निर्वापयामि।

पुनर्नेपथ्ये । अये जामदग्न्य कथं तथा शमधनसमृद्धस्य जमदग्नेस्तनयोऽपि शमदुर्गतोऽसि संवृत्तः ।

जामदग्न्यः । कथमयमाङ्गिरसः । उच्चैः अये शतानन्द कथय तावदिदमेवंविधं शमाभिधानं कस्मादुपात्तं भगवतो गौतमाद् वा गोत्रभिदो वा ।

नेपथ्ये । आः क्षत्रियापुत्र निजजननीकण्ठताण्डवितकुठार कुलाङ्गार कथं तपस्तुङ्गमाङ्गिरसमपि कुलं कलङ्कयसि ।

जामदग्न्यः। आः पाप कुलपांसन पांसुलापुत्र कथं भृगूणामग्ने तपस्ताण्डवं मण्डयसि ।

रामः । भगवन् सकललोकविख्यातमिदं भृगूणामाङ्गिरसां च कुलम् । तपोविशेषतस्तु भर्गशिष्यस्य । अत एव विज्ञापयामि

तपःशान्तं चेतः स्फटिकमणिमालापरिकरः
कुशाः कुण्डी दण्डः सततमुटजावासनिरतिः ।
मुनीनामेतद्वः समुचितमुदग्रं न वचनं
न वक्रभ्रूभङ्गो न शरधनुषी नापि परशुः ॥

पुनः सविस्मयम् । भवानेव तावत् विचारयतु ।

क्व परशुरशुभस्ते कुत्र गोत्रं पवित्रं
क्व नु धनुरिदमुग्रं निर्मलं कुत्र शीलम्
घनसमरकराला कुत्र नाराचहेला
कुशकिसलयलीला कुत्र वा पर्णशाला ॥

जामदग्न्यः । कथमन्यमिव मां प्रणतिपात्रं मुनिमात्रं मन्यसे । स एष जामदग्न्यः खल्वहम् ।

तुण्णत्तत्रकठोरकण्ठविगलत्कीलालधारासरित्-
निर्वृत्ताभिषवस्य कृत्तशिरसां केशान् कुशान् कुर्वतः ।
गृह्णन् रक्तजलाञ्जलीन् पितृगणो यस्य क्षणं विस्मितः
सन्तोषेण जुगुप्सया करुणया त्रासेन हासेन च ॥

तदलमिदानीमपि ।

कृत्वा त्रिःसप्तकृत्वः समिति विशसनं पूर्वमुर्वीपतीनां
कृत्वान्यत् सप्तकृत्वः पुनरपि कदनं दुर्मदानां नृपाणाम् ।
निर्माय क्ष्मापतीनां प्रतिसमरहृतैरुत्तमैरुत्तमाङ्गैः
कापालीमक्षमालां झटिति* भगवतो भैरवस्यार्पयामि ॥

* झगितीति वा पाठः ।

रामः ।

प्रसीद त्वं रोषाद्विरम कुरु मे चेतसि गिरं
चिरं यच्चायासैर्बहुभिरिह वारैर्जितमभूत् ।
यशोवित्तं वृत्तं कितव इव विक्षोभतरलं
तदेतस्मिन् वारे भृगुतिलक मा हारय मुधा ॥

जामदग्न्यः । कथं रे हारयिष्यामि । विमृश्य । अथवा ।

किं नाम वाग्डम्बरपण्डितेषु
युष्मासु वाणीः प्रचुराः प्रयुञ्जे ।
बाणान् रिपुप्राणहरान् मदीयान्
सर्वेऽपि यूयं सहिताः सहध्वम् ॥

रामः । किमन्यैरन्वहमेव हरशरासनारोपणोपनीतजानकीकरकिसलयलीलानिहितकमलमालिकामिलदलिपटलकोलाहलसंगीतयशःपरिमलेन वक्षस्थलेन सहिष्ये ।

जामदग्न्यः ।

ईशत्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रस्त्वं कतरः स मे तव गुरुः सोढुं न शक्तः शरान् ।
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात् सादरं
मद्बाणभयादयाचत किल ब्राह्मीं तनूं कौशिकः ॥

रामः । स्वगतम् । कथं भगवन्तं विश्वामित्रमधिक्षिपति । तदतःपरं न सहिष्ये । प्रकाशम् ।

ईशत्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रोऽहं कतरः स ते मम गुरुः सोढुं न शक्तः शरान् ॥
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात् सादरं
त्वद्बाणभयादयाचत किल ब्राह्मीं तनूं कौशिकः ॥

इति पदव्यत्यासेन पुनः श्लोकं पठति । पुनः साटोपम् । अये जामदग्न्य ।

तत् कोदण्डं कुलिशकठिनं भग्नमेतेन भग्नं
मग्नं शल्यं तव हृदि महद्भग्नमेतावता किम् ।
त्रैयक्षं वा भवतु यदि वा नाम नारायणीयं
नैतत् किञ्चिद्गणयति स मे दुर्मदो दोर्विलासः ॥

जामदग्न्यः । सहर्षम् । साधु रे क्षत्रियपोत साधु । यत् किल जामदग्न्यनामखण्डधाम्नः पुरतः खद्योत इव विद्योतसे । किमात्य रे किमात्य ।

रामः । तदेव पठति नन्विदं भूयोऽप्युच्यते । पुनस्तदेव पठति ।

जामदग्न्यः । साधु स्मारितोऽस्मि ।

रामः । किं तत् ।

जामदग्न्यः ।

करापातादिष्णोस्त्वरलवनमालापरिमल-
भ्रमद्भृङ्गध्वानद्विगुणितविकाशः समजनि ।
स यस्य ज्याघोषः सुररिपुवधूवर्गरुदित-
ध्वनिस्वाध्यायानां प्रणव इव तत् कार्मुकमिदम् ॥

रामः ।

करपङ्केरुहक्रोडे क्रीडितं येन शार्ङ्गिणः । तदेतत् ।

जामदग्न्यः ।

अथ किं यदि शक्तोऽसि गृहाण विगृहाण वा ॥

रामः । गृह्णामि ।

जामदग्न्यः । तदेहि बाष्पायमानभवद्बन्धुजनबन्धुरां वसुन्धरामतिक्रम्य समरक्षमां क्षमामवतराव इति निष्क्रान्तौ ।

लक्ष्मणः । विलोक्य सहर्षं सकौतुकं च ।

मा शाम्भवं धनुरिवेदमपि प्रयातु
भङ्गप्रसङ्गमिति मन्दचलद्भुजेन ।
आर्येण कार्मुकमपीदमहो सहेलं
चक्रीकृतं भगवतो गरुडध्वजस्य ॥

नेपथ्ये । अहो कौतुकम् ।

उद्भिन्नश्चापचक्रादमरपरिहृतव्योमरन्ध्रावगाही
बाणोऽयं राघवस्य त्रिदशपुरगतिच्छेदकृद्भार्गवस्य ।
हंसीभूतः सुरस्त्रीकरकमलगलत्पुष्पसौरभ्यलुभ्य-
द्भृङ्गीसङ्गीतभङ्गीपरिवलितयशाः स्वर्गपर्यङ्कमेति ॥

ततः प्रविशतो रामजामदग्न्यौ ।

जामदग्न्यः । रामं विलोक्य निर्वर्ण्य च । स्वगतम् ।

त्रिलोकी कोकीयं मुदमुदयतानेन लभते
विकाशं वा धत्ते मुनिजनमनःपङ्कजवनम् ।
अये कोऽयं बालः कुवलयदलश्यामलतनु-
र्जगद्योनिर्ज्योतिः कथमिदमहो तत् परिणतम् ॥

पुनर्विमृश्य ।

आपूरणाय पुरवैरिशरासनस्य
बाणात्मना परिणतः * किल लीलया यः ।
आरोपणाय पुनरस्य स एव शङ्के
बालात्मना परिणतः पुरुषः पुराणः ॥

प्रकाशम् । वत्स इतः ।

रामः । सलज्जमधोमुखस्तिष्ठति ।

जामदग्न्यः । उपसृत्य रामस्य चिबुकमुन्नमय्य किमिति लज्जास्थानम् ।

कमल† बन्धुविलोचन यस्त्वया

* परिणतः पुरुषः पुराण इति वा पाठः ।
† जलजबन्धुरिति वा पाठः ।

स्वमहिमोन्नमनैरधरीकृतः ।
न किमसावधरीकुरुते नर-
स्त्रिदशकोटिकिरीटमणीनपि ॥

रामः । अञ्जलिं बद्ध्वा भगवन्नलमनेन । दुर्विनयपङ्कमलिनीकृतमात्मानं तावद्भवच्चरणनखकिरणतरङ्गिणीजलेन क्षालयामि ।

चण्डमेव किल तिग्मरोचिषः
सौम्यमेव किल शीतरोचिषः ।
चण्डसौम्यमिति कौतुकावहं
नौमि तावकमहं महन्महः ॥

इति पादयोः पतति ।

जामदग्न्यः । अयि कल्याणनिधे आशीरुक्तिरपि त्वयि पुनरुक्तिरेव । तथापीदमाशास्महे ।

यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्राचण्डातप तप सहस्राणि शरदाम् ।
इयं चास्तां युष्मच्छरशमितलङ्केश्वरशिरः-
श्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा त्रिजगती ॥

तदनुजानीहि मामिति निष्क्रान्तः ।

रामो लक्ष्मणं प्रति । ननु कथं नयनपथमतिक्रान्त एव भगवान् तदेहि भृगुकुलतिलकवियोगखिन्नमात्मानं बन्धुजनविलोकनेन विनोदयावः ।

॥ इति निष्क्रान्ताः सर्वे ॥

॥ चतुर्थोऽङ्कः ॥

---

॥ श्रीः ॥

## ॥ सिद्धान्ततत्त्वविवेकपरीक्षा ॥

यत् खलु

स्थिरं प्रत्यक् चलं भाति खस्थं प्राग्भूभ्रमावृणाम् ।
प्रवहो व्यर्थ इत्यार्यभटोक्तेः खण्डिहोत्तरम् ॥
यत् सर्वतो निराधारं स्वोर्ध्वदेशागतं गुरु ।
स्वस्थान एव तन्नूनं पततीत्यपि निर्णयः ॥
असद्भूभ्रमणं चेन्द्राग्मनार्थं स्वीकृतं तु यत् ।
भूमावपि ध्रुवायोगात् तत् तुच्छं प्रवहे गते ॥

इत्येवं धरणेः स्वाक्षं परितो भ्रमणस्य निरासाय कमलाकरोऽभिहितवांस्तदावहवायुसहितायाः सर्वसङ्घाया आवर्तनमनवसायैव ।

एवं

अथात्र गोलपरिधेर्ज्ञानं व्यासावबोधतः ।
परिधिज्ञानतश्चैवं व्याससज्ञानं फलं तथा ॥

गणितादुच्यते सूक्ष्मं सूर्यसिद्धान्तसंमतम् ।
यन्मानतः परिच्छिन्ने व्यासे ज्ञाते ततः किल ॥
न ज्ञायते तत्परिधिश्चैवं परिधिबोधतः ।
नैव विज्ञायते व्यासस्तन्मानेन कथंचन ॥
सुसूक्ष्मरीतितः प्राज्ञैरवर्गपदवद्ध्रुम् ।
अतः कृपालुनात्र श्रीसूर्येणैवान्यथा कृतम् ॥
व्यासवर्गाद्दशगुणात् पदं भूपरिधिर्भवेत् ।
व्यासः स्यात् परिधेर्वर्गाद्दिग्भक्ताच्च पदं त्विह ॥
रुद्राहतव्यासदलोत्थवृत्ते
व्यासोत्क्रमज्या वशतः क्रमज्या ।
या तत्समोऽयं परिधिः सुसूक्ष्मो
व्यासैकमानाद्दशमूलरूपः ॥
दिक्संगुणा व्यासकृतिर्ययोः स्याद्-
घातस्तयोर्योगदलोत्थवृत्ते ।
तदल्पतुल्योत्क्रमशिञ्जिनीं च
दत्त्वा क्रमज्यामितरेखिका या ॥
स्यात् तत्समो वा परिधिस्त्वनेको-
त्क्रमज्ययाप्यत्र स एव बोध्यः ।
अनेकतद्वृत्तवशाद्बुधेन्द्रै-
स्तदेकघातोत्थपदप्रसिद्ध्या ॥
समश्रुतिस्तुल्यचतुर्भुजस्य
क्षेत्रस्य यस्यास्ति फलं खचन्द्राः ।
तद्बाहुरेखासम एव रूप-
व्यासेऽतिसूक्ष्मः परिधिर्मदिष्टः ॥
रूपव्यासे खङ्गतुल्यान् विभागान्
कृत्वा वृत्तं भास्करीयैर्विलेख्यम् ।
तत्र त्रिघ्नव्याससूत्रप्रमाणां
वृत्तं त्यक्त्वा शेषकं यच्च तत्र ॥
किंचिन्न्यूनैः सार्धनागै ८ । २९ । ४५ । ३६ विभागै-
र्नीतः सम्यग्भास्करोक्तः प्रकारः ।
व्यासाद्वृत्तस्योदितः सम्यगस्मा-
दार्षोक्तो दिग्रेखिकामूलरूपः ॥
चक्रलिप्तावृतौ केचिद्रसाभ्रष्टाङ्ग ६८७६ विस्तरम् ।
नियतं कल्पयित्वाज्ञाः सौरे स्थूलत्वदूषणम् ॥
वदन्ति शिल्पवित् प्रोक्तवृत्तसंमापनादिह ।
शुद्धसौरप्रतीत्यर्थं कुरु तन्मुखभञ्जनम् ॥
व्यासस्य वर्गवर्गाच्च पञ्चघ्नादष्टभाजितात् ।
पदं क्षेत्रफलं ज्ञेयं फलाद्व्यासो विलोमतः ॥
अथवा परिधेर्वर्गवर्गात् खाङ्केन्दुभाजितात् ।
पदं क्षेत्रफलं चास्मात् परिधिस्तु विलोमतः ॥
पदं रेखात्मकं ग्राह्यं वास्तवं यदि चान्तरात् ।
पदस्यानयनं स्वेष्टं तर्हि तद्गणितात् कुरु ॥
रामा नवाब्ध्यब्धयोऽर्का ३।९।४४।१२ दशानां मूलमुच्यते ।
रूपव्यासे तु परिधिर्दशमूलमितः स तु ॥
इष्टव्यासेन गुणितः स्वेष्टव्यासे प्रजायते ।
शून्यं सप्ताब्धयस्तर्कदस्रा रामाः ०।४७।२६।३ फलं भवेत् ॥
रूपव्यासे निजव्यासवर्गघ्नं स्वस्य तद्भवेत् ।
शून्यं रामेषवः शून्ययमा वेदेषवो ० । ५३ । २० । ५४ हताः ॥
व्यासेन तत्कृतिर्वात्र फलमेव मनेकधा ।
कथंचिन्नियतव्यासे परिधिर्नियतो नहि ॥

इत्यनेन व्यासवर्गाद्दशगुणात् पदं परिधिर्भवतीत्यस्यैव प्रकारस्य सूक्ष्मत्वमुक्तं तदसत् । अस्य त्वतिस्थूलत्वात् । तथाहि ।

महदयुतादि व्यासार्धं प्रकल्प्य वृत्तशतांशादपि सूक्ष्मविभागस्य ज्योत्पत्तिविधिना ज्या साध्या । यत्संख्याकस्य विभागस्य ज्या तत्संख्यया सा गुणिता सती परिधिर्भवति । यतः शतांशादपि सूक्ष्मोंऽशो वृत्ते समः स्यादिति युक्तियुक्तोऽतिस्पष्टः श्रीभास्कराचार्योक्तः पन्था एव व्यासात् परिध्यवगमाय शरणम् । तथाच कमलाकरेणैव तत्त्वविवेके स्पष्टाधिकारे संसाधिता षष्टित्रिज्यायामेकांशज्येयं १ । २ । ४९ । ४३ । १५ यावदयुतेन निहत्य षष्ट्या ह्रियते तावदयुतव्यासार्धे एकांशज्या १७४ । ३१ । २६ । ४८ । २० एतावती लभ्यते । इयमुक्तयुक्त्या षष्ट्यधिकशतत्रयाहता ६२८२८ । ४० । ५० अयुतद्वयव्यासे सूक्ष्मं परिधिमानं भवेत् । तदपि वास्तवपरिधिमानात् किंचिदल्पं स्यात् । जीवायाश्चापतोऽल्पत्वात् । व्यासवर्गाद्दशगुणादित्यादिरीत्या तस्मिन् व्यासे परिधिमानं ६३२४५ । ३३ । ११ । ३२ एतावल्लभ्यते । तदसत् । पूर्वलब्धपरिधिमानादत्यधिकत्वात् ।

ननु पूर्वलब्धपरिधिमानतोऽभ्यधिकं ६३२४५ । ३३ । ११ । ३२ एतद्वास्तवं परिधिमानं भवितुमर्हति । परिधेः षष्ट्यधिकशतत्रयतमस्याप्यंशस्य तज्ज्यकातः किंचिदधिकत्वाद्वास्तवपरिधिमानस्य खाङ्गत्रिहततज्ज्यकातः सुतरामधिकत्वादिति चेन्न । ६३२४५ । ३३ । ११ । ३२ एतन्मानस्य वास्तवपरिधिमानतोऽप्यत्यधिकत्वात् । तथाहि ।

चापस्यैकप्रान्त एव परिधिं स्पृशतः सूत्रस्य तस्मात् स्पर्शस्थानात् केन्द्रचापापरप्रान्तयोर्लग्नं सूत्रं यावत् खण्डं तच्चापच्छायाख्यं स्वचापतश्चापं च स्वजीवातो महद्भवतीति प्रथमं तावत् प्रदर्श्यते । तत्र त्रीणि त्र्यस्राणि भवन्ति । तेष्वाद्ये चापपूर्णज्या व्यासार्धं च भुजौ व्यासार्धं भूमिर्जीवा लम्बो व्यासार्धजीवयोर्घातार्धं च फलम् । द्वितीये वक्रत्रिभुजे व्यासार्धं

भुजैा चापं भूमिर्व्यासार्धमेव लम्बो व्यासार्धचापयोर्घाताधं फलम् । तृतीये च केन्द्राच्छायाग्रपर्यन्तं सूत्रं छाया च भुजैा व्यासार्धं भूश्छायैव लम्बो व्यासार्धच्छाययोर्घाताधं फलम् । एतानि फलानि यथोत्तरं महान्ति । उक्तत्र्यस्राणामुत्तरोत्तरं महत्त्वात् । अतस्तेषु फलेषु क्रमेण व्यासार्धदलेनापवर्तितेषु जीवातश्चापं महत् ततश्च तच्छाया महतीति स्फुटमवसीयते। एवं कोटिज्यया भुजज्या लभ्यते तदा त्रिज्यया केत्यनुपातेना-युतव्यासार्धे लब्धैकांशच्छाया १७४ । ३३ । २ । २६ । ३ इयं यावत् खाङ्कत्रिभिर्हन्यते तावत् फलमिदम् ६२८३८ । १४ । ३६ । ८ वास्तवपरिधिमानादधिकमेव स्यात् । छायायाश्चापतोऽधिक-त्वात् । अस्मादधिकमानादपि व्यासवर्गाद्दशगुणादित्यादिप्र-कारेणानीतस्य फलस्य ६३२४५ । ३३ । ११ । ३२ अत्यधिकत्वात् स प्रकारोऽत्यन्तं स्थूल इति कमलाकरोक्तप्रत्यशजीवाद्वारैव सिद्धम् ।

एवं वास्तवपरिधिमानात् किंचिदल्पस्यास्य ६२८२८ । ४० । ५० । किंचिदधिकस्यास्य च ६२८३८ । १४ । ३६ । १८ योगार्धं ६२८३३ । २७ । ४३ । ९ अयुतद्वयव्यासे वास्तवपरिधिमानासन्नं भवितुमर्हति । वस्तुतस्त्वयुतमितत्रिज्यायां ज्योत्पत्तिविधिनैककलायाः सूक्ष्मां जीवां संसाध्य तस्मादानीतं परिधिमानं द्विकाग्न्यष्टयमतु ६२८३२ मितमेव वास्तवमानात्यासन्नं सिद्ध्यति । तस्मात्

> व्यासे भनन्दाग्निहते विभक्ते
> खबाणसूर्यैः परिधिस्तु सूक्ष्मः ।

इति श्रीमद्भास्कराचार्योक्तः प्रकार एव सूक्ष्मतर इति गाणितिकैः सम्यग् विभावनीयम् ।

एतेन रुद्राहतव्यासदलेत्यादिपद्येष्वभिहिताः प्रकारा अप्यत्यन्तस्थूलत्वाच्चितरां निरस्ताः ।

एवं

> सार्धानि षट्सहस्राणि ६५०० योजनानि विवस्वतः ।
> विष्कम्भो मण्डलस्येन्दोः सहाशीत्या चतुःशती ४८० ॥
> क्षितिजस्याब्धिबाणाद्रिप्रमितस्त्रिलवान्वितः ७५४ । २० ।
> दिगंशोनेषुवेदेन्दुप्रमितः १४४ । ५४ शशिजस्य च ॥
> व्यङ्घ्रीषुदन्तवसवो ८३२४ । ४५ गुरोरथ भृगोस्तथा ।
> त्रिंशत्यंशोनसार्धाग्निनन्दाब्धि ४९३ । २७ प्रमितस्तथा ॥
> शनेः पञ्चगुणार्कांशरसाद्र्यद्रीन्द्रसंयुतिः १४७७६ । २५ ।
> विष्कम्भो योजनैरित्यमर्काद्युक्तिप्रमाणतः ॥

इत्यत्र ग्रहेन्द्रस्य भगवतो विवस्वतो बिम्बगोलादपि गुरोर्बिम्बगोलो महान् ततोऽपि मन्दस्येति प्रदर्शितम् ।

ननु रविबिम्बगोलाज्जीवबिम्बगोलेन शनिबिम्बगोलेन चावश्यमल्पेन भवितव्यम् । आकर्षणेऽल्पबिम्बगोलस्यैव बहूपकृष्टत्वादाकृष्टैव ग्रहफलोत्पत्तेः सिद्धान्तसंमतत्वाज्जीवफलस्य शनिफलस्य च सूर्यफलतोऽतिमहत्त्वात् । सूर्यसिद्धान्ते च ।

> महत्त्वान्मण्डलस्यार्कः स्वल्पमेवापकृष्यते ।
> मण्डलाल्पतया चन्द्रस्ततो बहूपकृष्यते ॥
> भौमादयोऽल्पमूर्तित्वाच्छीघ्रमन्दोच्चसंज्ञकैः ।
> दैवतैरपकृष्यन्ते सुदूरमतिवेगिताः ॥

इति जीवशन्योरल्पमूर्तित्वस्य स्पष्टमुक्तत्वादिति चेन्न । उक्तश्लोकस्थमूर्तिशब्दस्य भारवाचकत्वादल्पभारवतः पिण्डस्यैव बहूपकृष्टत्वादाकर्षणे परिमाणमहत्त्वस्याप्रयोजकत्वात् । इति कमलाकरपक्षीयाः समादध्युः ।

वस्तुतस्तु

> व्यासो भुवः खाद्रयहि ८७० योजनानि
> रवेः खखाभ्राद्रिनव ९७००० प्रमाणि ।
> सुधाकरस्याब्धिजिनैः २४० समानि
> खाक्षाब्धिसंख्यानि ४५० महीसुतस्य ॥
> चान्द्रेः खबाणानल ३५० योजनानि
> व्यासो गुरोः खेष्वियुगो ९५५० मितानि ।
> भृगोः खबाणेभ ८५० मितानि सौरेः
> खखाश्वनागप्रमितानि ८७०० नूनम् ॥

इत्येतावन्त्येव व्यासयोजनानि सन्तीति सूक्ष्मयन्त्रैरसकृद्द्वार्वाचीनैर्निरणायीत्यत्र सेयम्

एवम् ।

अथ सूर्यादिमते शाकल्यादिमुनिमते च ग्रहाणां योजनाद्यौ नीचोच्चकर्णौ ।

| | |
|---|---|
| चं॰ नी॰ ४६७०५ । २५ । ५५ । | चं॰ उ॰ ५५७५२ । ३४ । ५ । |
| बु॰ नी॰ १३४७०५ । ५ । | बु॰ उ॰ १६५१८४ । १८ । |
| शु॰ नी॰ २६९१७४ । ७ । | शु॰ उ॰ ५७३४५७ । ५३ । |
| र॰ नी॰ ६५८८५४ । २७ । ८ । | र॰ उ॰ ७१०८८५ । ३२ । ५२ । |
| भौ॰ नी॰ ८७३०७२ । | भौ॰ उ॰ १७०३२०६ । |
| गु॰ नी॰ ७३१०८६८ । ५४ । | गु॰ उ॰ ८६३५५४३ । ६ । |
| शौ॰ न॰ १९०६४६७१ ४३ । ३० । | श॰ उ॰ २१३०७५७४ । १६ । ३० । |

योजनाद्यान्त्यफलज्या च । मं. ८३०१३४ । बु. ६०४७९ । ५० । गु. १६२४६४४ । १२ । शु. ३०४२८३ । ४६ श. २२४२९०२ । ३३ । भौमादीनाम् । रवेः २६०१५ । ३२ । ५२ विधोश्च ४५२३ । ३४ । ५ ।

इति सर्वेषां ग्रहाणां नीचोच्चकर्णा अभिहिताः । तत्र भौमादीनां पञ्चानां प्रत्येकं मध्ययोजनकर्णस्य योजनात्मकान्त्यफलज्यर्धस्य चान्तरेण तुल्यं नीचकर्णमानं योगेन तुल्यमुच्चकर्णमानं च यत् कथितं तदपि युक्तिशून्यमेव ।

एवम् ।

अथ सिद्धान्तशिरोमणौ सार्वभौमे च योजनाद्यौ ग्रहाणां नीचोच्चकर्णौ

| | |
|---|---|
| चं. नी. ४६७०५ । २५ । ५५ | चं. उ. ५५७५२ । ३४ । ५ |
| बु. नी. १०४४६५ । १० | बु. उ. २२५४२४ । ५० |
| शु. नी. ११७०३२ । १४ | शु. उ. ७२५५९९ । ४६ |
| र. नी. ६५८८५४ । २७ । ८ । | र. उ. ७१०८८५ । ३२ । ५२ |
| भौ. नी ४५८००५ । | भौ. उ. २११८२७३ । |
| गु. नी. ६४९८५७६ । ४८ । | गु. उ. ९७४७८६५ । १२ |
| श. नी. १७९४३२२० । | श. उ. २२४२९०२५ । |

इति जल्पितं तदसत् । शिरोमणौ गोले स्फुटगतिवासनाध्याये

ग्रहस्य कक्षा चलकर्णनिघ्नी
स्फुटा भवेद्व्यासदलेन भक्ता ।
तद्व्यासखण्डान्तरितः कुमध्यात्
स भ्राम्यते हि प्रवहानिलेन ॥

इत्यनेन सूचितानां ग्रहनीचोच्चकर्णमानानां पूर्वजल्पितमानेतरत्वात् । शिरोमणिमतेन ग्रहनीचोच्चकर्णास्त्विमे

| | |
|---|---|
| चं. नी. ४७०३९ । ३९ । ४ । | चं. उ. ५६०९२ । २० । ५६ । |
| बु. नी. १०५१५३ । ३६ । | बु. उ. २२६९१० । २४ । |
| शु. नी. १२०१५८ । १६ । | शु. उ. ७२०१७ । ४४ । |
| र. नी. ६६३२०६ । ५५ । १७ । | र. उ. ७१५५४७ । ४ । ४३ । |
| भौ. नी. ४१९००० । १ । ४४ । | भौ. उ. २१७४२३७ । ५८ । १६ । |
| गु. नी. ६६३२०८० । ४२ । १४ । | गु. उ. ९७२०९९५ । १७ । ४६ । |
| श. नी. २००९३३०३ । १९ । २० । | श. उ. २०५४४८३८ । ४० । ४० । |

एतान्यपि कर्णमानानि युक्तिशून्यान्येव । इति वदति

बापूदेवशास्त्री ।

## THE MESSENGER CLOUD:

PARAPHRASED FROM KÁLIDÁSA.

(Continued from page 186.)

XXV

Now from the level of thine airy road
Glide gently down and amorously sink
Upon Nirvindhya's breast, which long has glowed
With love of thee: there cling, and kiss, and drink.
She, with the wild swans clamorous on her brink,
And their white wings around her for a zone,
From thy soft pressure will not coyly shrink.
Her trembling wavelets will her rapture own,
And testify her love by every gesture shown.

XXVI

Sail on, refresht, my messenger, and look
With pity on the woes of Sindhu, pale
With the sere leaves shaken upon the brook
From her own trees by the hot summer gale.
For her sad shrunken waters well-nigh fail,
Thin as the length of hair which women braid
When their dear husbands' absence they bewail
O, pity her, thou gentle Cloud, and aid
The longing of her love by each fond look betrayed.

XXVII

Near thee a bright imperial city stands,
The blest Avantí or Viśálá, pride
Of all the earth, famed for its minstrel band
Who with the magic of their verse have vied
To spread the tender story far and wide
Of King Udayana: a glorious town,
Brought, by the happy Saints unsatisfied
With all that Paradise can offer, down,
To be their best reward, their virtue's worthiest crown.

XXVIII

The sweet soft zephyr, laden with the scent
Which every lotus opening to the air
Of morning from its rifled stores has lent,
Plays woöingly around the loosened hair
And fevered cheek of every lady there,
Then as it blows o'er Sipra, fresh and strong,
Bids all the swans upon her banks prepare
To hail the sun-rise with their sweetest song,
And loves with its own voice the music to prolong.

XXIX

Rest on these flower-sweet-terraces, and feel,
From open casements where the women braid
Their long, soft locks, delicious odour steal.
Look on the polisht marble where the maid
Her small foot, blushing with the dye, has laid;
There will the peacock with a joyous dance
Spring forth to greet thee from the mango's shade,
And hail his dear friend with a loving glance:
O' rest in this sweet spot, nor lose this blessed chance.

XXX

Hence to the temple of the mighty lord
Whom CHANDÍ loves and all the worlds revere;
There for a moment shalt thou be adored
By those who serve him, when thy hues appear
Like Śiva's neck, as though their God were near.
Then through the garden pleasant gales shall stray
From Gandhavatí's fountain, crystal-clear,
Bearing the scent of lotus-blooms away
Shaken by lovely girls who in the water play.

XXXI

Stay till the hour of evening worship comes;
Stay while the Day-God lingers in the sky;
Then with low thunderings, for the call of drums,
Win precious guerdon from the Lord Most High.
Each dancing-girl, with rapture-beaming eye,
Shall thank thee as thy soft drops cool the ground,
While her faint hands the jewelled chowries ply,
And, as she moves her languid feet, around
Her slender waist the chimes of tinkling silver sound.

XXXII

Bhavánı's self, Śiva's imperial Queen,
With grateful glance thy service shall behold;
For when her lord thy dusky form has seen,
Enamoured of the purple and the gold,
He will not, in the dance of twilight, fold
The elephant's hide around his limbs, for, lo!
A mantle waits him fairer than of old;
Thy skirts shall seem the skin, the trees below,
The monster's limbs, his gore thy tints of roseate glow.

XXXIII

When the thick shadows of dark midnight fall
Blinding the maidens in the royal street
Who fain would fly where love and rapture call,
O, let thy flashes guide their erring feet
And lead them safely till their loves they meet.
But check thy rain and still thy thunder, lest
Their terrors force the maidens to retreat.
Then with thy lightning bride, play-wearied, rest
Where sleeps, high up the tower, the white dove in her nest.

XXXIV

Thence, with the rising sun, thy course pursue,
For loving envoys ever shun delay;
But hide him not, when mounting, from the view,
For the false lover comes with coming day
To the poor weeping girl, to kiss away
The water from her eyes. So comes the Sun
To cheer the lilies with his amorous ray,
And kiss their drooping heads, till, one by one,
They dry the dewy drops that down their petals run.

XXXV

Then will thy shadow for a moment sleep
On the white bosom of Gambhirá's stream,
And thy dear image in her crystal deep
Blend with the fancies of her maiden dream.
Then will she wake to win thee with the gleam
Of finny darters for the lore of eyes.
Steel not thy heart against her love nor deem
Her lilies smile but to allure the prize:
O, yield thee to her prayer, O, yield thee and be wise.

XXXVI

Ah, yes! I see thee in her loving arms—
The feathery branches of the tall bamboo—
And spread beneath thee are her yielded charms,
And her smooth sides uncovered to the view.
How could such loveliness unheeded woo?
Who could resist her softly pleading smile,
With heart all cold and dead, if e'er he knew
What joy it is to kiss each breast-like isle?
O, who would turn away, nor linger there a while?

XXXVII

Charged with the odours of the wakened earth
Whom thy fresh rain has left so pure and gay,
The wind of early morning, wild with mirth,
Amid the branches of the grove shall stray
And woo each tendril to responsive play:
Then waft thee on to Devagiri's height,
Charming the ear with music on the way,
Where languid elephants shall stay his flight
And drink his balmy breath with wonder and delight.

XXXVIII

There gleams the temple, loved and honoured most
By Skanda, Lord of War, who at the head
Of the bright legions of the heavenly host,
Embattled Gods to arms and conquest led—
A wondrous Child, in flames of glory bred—
O, crown the slayer of his demon foes!
Turn to a cloud of living flowers, and shed
O'er his young brows the lily and the rose
Bathed in the lucid stream through heavenly realms that flows.

XXXIX

Send forth thy thunder, till the glorious voice,
By rocky dell and cavern multiplied,
Bidding the peacock, in the shade, rejoice,
Calls him to dance along the mountain's side:
Majestic bird, whom Skanda loves to ride,
Whom Skanda's mother holds so wondrous dear
That when his moulted plumes, in all their pride
Of starry radiance, fall and glitter near,
She lifts them from the ground to grace her royal ear.

XL

Thy homage rendered to the Warrior-God
Whose infant steps amid the thickets strayed
Where the reeds wave over the holy sod,
Speed on, but let thy course a while be stayed
Till meet obeisance to that stream be made
That sprang in olden time from sacred gore
Of hecatombs by Rantideva paid,
And through the lands her author's glory bore
Enshrined within her waves, to spread for evermore.

XLI

In fear, each minstrel of the heavenly quire
Shall see thee stoop those watery stores to drain,
And fly thee trembling lest his darling lyre
Be robbed of music by thy threatened rain.
Then from his airy watch-tower will he strain
His eager eyes the wondrous sight to view,
As thy large lucid drops, in lustrous chain,
Hang their long pendants o'er thy borrowed blue,
A string of pearls that show the sapphire gleaming through.

XLII

That river past, to Dasapura fly,
And with the shadow of thy coming rouse
The beauties of the city till each eye
Glances its welcome - till each maid and spouse
Beneath the delicate bending of her brows
Shows her dark pupil flashing wild with glee
In her pure pearly eye-ball, and allows
Short glimpses of a sight as fair to see
As a white jasmine bud where sits the black wild bee.

XLIII

Then, speeding on to Brahmavartta's land,
Hover awhile o'er Kuru's fatal field
Rich with the blood of many a slaughtered band,
Where the proud banner waved, the war-cry pealed,
Where the sword smote upon the helm and shield,
When godlike Arjuna, with arrowy hail,
Laid low the heads of kings who scorned to yield,
As when the arrows of thy sleet assail
The golden lilies' heads and strew them down the vale.

XLIV

Now to Sarasvati, whose waters roll
Beside thy path, with due respect draw near,
And let her cleansing wave refresh thy soul.
When Balarama, filled with noble fear
Of kindred slaughter, could no longer cheer
His sorrowing spirit with the sparkling wine
That mocked the eyes of his own wife most dear,
Revati, shining as they loved to shine,
He sought this limpid flood and made the spot divine.

XLV

On to the place where infant Ganga leaps
From the dark woods that belt the Mountains King,
Hurling her torrent down the rugged steeps.
Those holy waters, as the sages sing,
To Sagar's children bliss and heaven could bring
Fresh from her native sky, a sportive maid,
On Siva's awful head she dared to cling,
And with the laughter of her foam repaid
His consort's jealous frown as with his hair she played.

XLVI

Drink, for the flood is living crystal; drink,
For the warm gale thy weary wings has dried:
Come, gently bend thee o'er her rocky brink
And tint her waves with azure as they glide:
So when dark Jumna's tributary tide
With kissing waves to blend with Ganga flows,
The mightier waters beautifully dyed
With borrowed azure to the sun disclose,
Mixt with their pearly light, the sapphire's darker glows.

XLVII

See! the proud parent of this heavenly child
Wooes thee to rest upon his breezy height,
Where herds of musk deer, as they wander wild,
Enrich with odour every crag. Alight,
And couched upon the summit robed in white
Enhance his snowy beauty, as one speck
Of sable shows more gloriously bright
The skin of Śiva's Bull, and serves to deck
The whiteness of his flank, the splendour of his neck.

XLVIII

Hark! the gales whistling through the woods of pine,
Urging to madness all the straining boughs
That twist and chafe and bend and intertwine,
The latent flame to wildest fury rouse,
Singeing the long hair of the mountain cows.
Quick! rain a thousand torrents on the crest
Of the kind hill and cool his burning brows.
With wealth of water thou art richly blest,
And fortune's sweetest fruit is aiding friends distrest.

XLIX

Should Gryphon hosts, by mad presumption led,
Vext by thy thunder, mount the realm of air
To ride thee down beneath their impious tread,
Laugh with thy rain to see them baffled there,
And with the dashing of thy hail stones scare
Thy scattered foes. So let them learn how vain
Is the wild enterprise they fain would dare,
That the fond strivings of ambition gain
No guerdon but disgrace, no recompense but pain.

L

But stoop a little from thy pride of place:
With circling motion reverently slow
Around the rock where pilgrims still may trace
The foot of Mahádeva, softly go
There saintly breasts with rapt devotion glow:
There holy hands the flames of worship feed.
There His good servants, saved from sin and woe,
From the sore weight of earthly life are freed,
Join his own heavenly band and gain a priceless meed.

LI

Hast thou no voice to laud Him? Be not dumb,
But let thy thunder round the caverned hill
Proclaim his glory like a mightier drum.
The gales with melody each reed shall fill:
The Maidens of the sky, whose bosoms thrill
With holy rapture, shall rejoice and sing,
And all shall swell the glorious concert till
Valley and mountain, earth and air shall ring
Hailing with jubilant hymns the great victorious king.

LII

Skirting the mansion of eternal snows
Compress thy form and winding round explore
Where Kraunchá's parted rocks a pass disclose
Traversed by swans—those rocks that burst before
The might of Ráma and the axe he bore.
Then show like Vishnu's darksome foot, whose tread
Measured the sky and earth's broad bosom o'er,
When Bali with his proud heart filled with dread
Confessed the Saviour God and bowed his impious head.

LIII

Now soaring upward, on Kailasa's crest—
The crystal mirror of each Heavenly Maid—
Linger a little as an honoured guest,
And let thine airy pilgrimage be stayed.
Once that high mountain shook and was afraid,
Loosened by Ravan, Lord of Lanka's isle;
Now cleaving heaven, to all the lands displayed,
The white peaks of the lily-radiant pile
Flash on the world below, like Śiva's glorious smile.

LIV

I see the summits of the hill, that shine
Like new-cut ivory so purely white,
Gleam with fresh lustre as that form of thine
Descends upon them, and thy tint of night
Tips with a sable pall the snowy height.
So Balaráma's limbs of silvery hue
Show fairer in their purple livery dight;
So from his chest and arms exposed to view
The heightened sheen beneath sets off the raiment too.

LV

High fate is thine should sportive Gauri list
In those sweet moments ere the close of day—
Untied the serpent-bracelet from her wrist—
Hand locked in hand, with Siva there to stray.
Come, aid with easy steps their upward way:
Thy stores of rain within thy breast confine,
And let the heavenly pair delighted lay
The blessing of their feet on stairs that shine
With gold caught from the sun, ruby and almandine.

LVI

Then will celestial maids with laugh and shout
Open their lovely arms thy form to seize,
And o'er their tresses force thy waters out
Which the light touch of kindred diamond frees.
But should too long restraint thy soul displease,
Send forth the thunder of thy voice, and they,
Fleeter through terror than the western breeze,
Will fly thee, e'en in their delicious play,
And seek their distant home in wonder and dismay.

LVII

Near is the goal, yet, ere thy course be run,
One sweet fresh draught of limpid water take
Where golden lilies opening to the sun
Stud the broad bosom of the Manas lake.
Deign for a while a friendly shade to make
For Indra's elephant, and, floating through,
With the soft fanning of thy pinions shake
The Heavenly Tree, and all her blooms renew
With the young morning's breath embalmed with silver dew.

*(To be continued.)*

## THE PANDITS AND THEIR MANNER OF TEACHING.

BY DR BALLANTYNE.

[From the Benares Magazine, March 1850.]

*(Continued from p. 116 of Vol. I.)*

We left the pandit and his pupil in the middle of the *Laghu Kaumudí*. Let us now suppose that they have finished it. If the pupil be an intelligent youth, his instructor will probably advise him to dispense with the perusal of the intermediate grammatical work—the *Madhya Kaumudí*,—and to enter at once upon the unabridged and sufficiently voluminous *Siddhánta Kaumudí*—the "Moonshine on Established Grammatical Doctrine:"—the title of *Kaumudí*,—moonlight—apparently implying that the work does not affect to shine by its own light, as an original authority, but only by the reflected beams of the prime luminary *Pánini.*

The pupil—a young bráhman of course—will probably at this time, if not before, have made up his mind whether he is to range at large through the fields of Sanskrit lore, or to confine himself to certain paths, or even to one alone. We shall suppose that his studious ambition (at starting) will permit him to contemplate, contentedly, nothing short of the whole range; and we shall accompany him as far as we conveniently can —not bargaining, by any means, to follow him everywhere through thick and thin—

"Through bog, through bush, through brake, through brier,"

but purposing to ride quietly round by the gate when we find him bent on taking a "rasper"—and so rejoin him if practicable on smoother ground.

Of all Pandits who confine their attention to a single branch of study, the most uninteresting, to our mind, is an Astrologer. Your mere astrologer makes a very perfunctory perusal of the grammar, if he looks into it at all before he devotes himself for life, and for a livelihood, to his own particular line of business. Dealing among the stars, he grows proud, and dealing among horoscopes and the old women who apply for them, he acquires a swaggering air of charlatanerie and bold forwardness, very different from the dignifiedly unpretending manner of the really learned. We speak of the mere astrologer—for there are pandits, versed in varied lore, with whom the mere astrologer can stand no comparison even in his own department. The mere astrologer we like not—even as the poet liked not "Dr. Fell"—though not perhaps quite so unreasonably.

Our desultory student is not, of course, deposed to undergo his eight or ten years of grammatical discipline—working his way through the long and thorny vista of treatises up to the "Great Commentary,"—without a glimpse of something more cheerful. With a view to understanding the poets, he will probably commit to memory large portions, if not the whole, of Pánini's Catalogue of verbal Roots *(the Dhátu-páṭha)* with their significations, and of the *Amara-kosha*—the "Immortal Treasury" of synonymes, versified by *Amara-singha* in order to facilitate recollection. With or without these appliances he may commence upon the *Raghuvanśa* of *Kálidása*—skipping, as "unlucky," the first Canto, at the recommendation of his teacher, lest the description of king *Dilípa's* distress, from the want of a son, should too painfully affect his juvenile sensibilities. In the second Canto he will read how well that pious king played the part of lackey to a cow—a subject so edifying that we suspect it furnishes a more influential motive than that alleged by the pandit for advising the pupil to skip Canto first, and to commence where he may learn "to whom honour is due," and how to render it—a lesson which, if he be a youth of virtuous tendencies, should make him burn with ambition to go and do likewise.

No inconsiderable portion of the poetical and dramatic literature of the Sanskrit has been rendered accessible to the occidental reader by the Latin versions of the Germans, the metrical English versions of Mr. Milman, and the fine rifacimenti of Professor H H. Wilson in his "Specimens of the Theatre of the Hindús." The native student has no translations to refer to, nor is he set down, like an English school boy to construe a passage with the aid of a dictionary—the native dictionaries being constructed, not with a view to consultation in this way, but with a view to being conveniently got by heart. In the case of any book that may be in hand, passage after passage is explained to the pupil by his teacher; and, in the interval between the lectures he cons over, again and again, the portion that formed the subject of the previous lecture. In the case of various books he has the aid of convenient commentaries, written in a very simple style of Sanskrit corresponding to what at school we used to call "dog-Latin" The texts of several poems, with commentaries of this kind, have been printed in Calcutta. These are much valued by Native students. We annex, as a sample of the simple style of commenting employed in these books, a verse from the *Raghu-vanśa* with its comment.

*V. 6th, Canto II*

"Stopping whenever she stopped—rising to follow when she went on—consistent in seating himself when she sat down—experiencing a desire for water when she drank water—like her shadow did this lord of the earth attend her."

*Commentary.*

"'*Stopping*' &c —'*lord of the earth*'—i e king —'*her*'—i e the cow —'*attend*'—as a shadow attends a body. Again—accordingly as the cow stopped—stopping —again—accordingly as she went on—rising to follow, [illegible] as the cow sat down—consistent in taking his seat [illegible] as she became a taker of water—becoming des

On the earlier verses the comment is still more full and explicit. As regards the wants of many readers, much of such a commentary must be superfluous:—but it is convenient to be able to refer to it for the recorded opinion of the republic of pandits as to the intended meaning of passages where the language chances to be ambiguous.

Among the poems generally read there is a curious one, by *Bhaṭṭi*, on the actions of *Ráma*, the design of which is to exercise the pupil in the rules of the grammar. With this view no part of the verb is employed throughout the first Canto except the 3rd preterite:—none in Canto second except the 2nd preterite—and so on. The work is accompanied by two commentaries, the one explaining the sense, and the other furnishing a synopsis of the grammatical rules employed in the formation of the words. It is noticeable that the tense to the exhibition of which the first Canto is devoted—the "praeteritum augmentatum multiforme" of Bopp—is, though far from the most useful, much the most troublesome of the tenses. Professor Monier Williams remarks on it (at p. 81 of his Grammar) as follows.—

"Fortunately for the study of Sanskrit the third preterite very rarely occurs in the earlier and better specimens of Hindu composition; and the student who contents himself with the Rámáyana, Mahábhárata, Hitopadesha, and Laws of Manu, and avoids the grammatical Poem of Bhaṭṭi and the extravagant writings of more modern authors, will lose nothing by an almost total ignorance of this tense, or, at least, may satisfy himself with a very cursory survey of its character and functions."

The placing of something so impressively alarming in the very portal, is as characteristic of the more recent pandits as the preliminary hot-poker process is of the Freemasons—with whom after the first dread ceremony of initiation, it is all plane-sailing and whiskey-punch. The same arrangement in each case, would seem to have been contemplated, as that which Nature, in the cocoa-nut, offers to the monkey—who, when he has managed to gnaw through the shell—finds for his practised teeth, the kernel no very hard matter, and the milk mere child's play.

After having read some of the poets, the student may feel some curiosity to know the principles on which the critics hold one set of verses to be a poem, and another set of verses to be no poem —but the professor of criticism (*Sáhitya*) will probably require that he shall come to this enquiry provided with some knowledge of the phraseology at least of the philosophical systems. He goes, therefore, through the *Tarka-Sangraha*, the text and a version of which were given some months ago in this Magazine; and then, finding that there is much which the meagreness of that compendium leaves without satisfactory explanation, he reads the memorial verses of the *Bháshá parichheda*—(the "discrimination of language" as employed by the *Naiyáyikas* in contradistinction to the followers of the *Mímánsa*, &c with the esteemed and popular commentary the *Siddhánta-Muktávalí* (the "Pearl-string of established truths"). With some notice of this standard work we shall conclude for the present.

The memorial verses, and the commentary, are the work of the same author, *Viśwanátha Panchánana Bhaṭṭa* who opens the commentary with the following invocation and announcement.—

"May that *Śiva* be auspicious, who, skilled in the sportive dance has made a crest gem of the Moon and a bracelet of the Sovereign of the Snakes!

Prompted by regard for my pupil *Rájíva*, let me, as a relaxation, illustrate, by the aid of the very succinct expressions of the ancients, my own work—the String of memorial verses."

In the *Dinakarí*, a commentary on our commentary, the propriety of each separate term in this benedictory invocation is voluminously (if not luminously) demonstrated. The writer there explains how the Moon, though no crest-gem, may yet without impropriety be spoken of as such—and the same of the snake-bracelet,—how the author whom he comments spoke of his work as a "relaxation" in order to soothe the apprehensions of the alarmed but yet possibly securable reader;—and how the mention of the "succinct" expressions of the ancients was designed to insinuate that the author, without compromising his character for modesty, might attempt to illustrate what the "succinctness" of his predecessors had left—to sight less keen than that of those predecessors—somewhat obscure. On the double meaning of the verses that follow, the *Dinakarí* expatiates satisfactorily but, our reader might think, tediously. We return to the *Muktávalí*, where the author makes not a few reflexions on the benedictory invocation with which he commences his own memorial verses. The benediction is as follows:—

"Salutation to *Krishna*—to him—lovely as a fresh cloud—the stealer of the raiment of the young milk-maids—the seed of the world-tree!"*

We should like to transcribe, as a curious specimen of Hindu reasoning, the author's reflexions on the importance of commencing with a Benediction *(mangala,)* but we are considerate enough to forbear.

On the expression "the seed of the world-tree," he remarks as follows:—

The world is here spoken of as a tree—what springs from the earth. By speaking of the *seed* of that tree, a proof of the existence of the Deity is exhibited. That is to say:—such productions as a water-jar are produced by a maker, and so also are such productions as the herbs of the field:—and, to make these is not possible for such as we are:—hence the existence of the Deity, as the Maker of these, is established."

After combating objections to this argument, he cites the *Veda* to the following effect:—

"There is One God—the Maker of Heaven and Earth—the Creator of all—the Preserver of all."

He then propounds the Categories,—intimating that the whole are primarily divisible into those of Existence and Non-existence. The latter will furnish abundant matter for consideration in the present paper. Like the foil of the *maitre d'armes*, it is far from being so small an affair as it may, at first sight, appear in the eyes of the inexperienced. One might as well engage to fence with the maitre d'armes without knowing the difference between quarte and tierce, as venture to chop logic with a pandit without some conversancy with the manipulation of Non-existence.

Non-existence is the darling of the Indian logician. Like Izaak Walton, impaling a frog upon his hook, "he handles it as though he loved it." Like an epicure with a beccafico,—instead of gulping it at a mouthful—he makes four bites of his cherry. He first divides it into two—Mutual and Universal. The Universal he cuts into three—Antecedent, Emergent, and Absolute. The last of the three is the Benjamin of the family—nor is his coat less curiously variegated than that of any of his brethren. He makes his appearance at every turn;—and, even when he cannot altogether eject the others, it is ruled that he shall go shares—as we shall see when we come to the *vexata questio* of the baking of a water-jar in a brick-kiln.

But it may be necessary to satisfy the reader that there is such a thing as Absolute Non-existence, and we shall take it for granted that he holds "Seeing is Believing." Place a jar, then, on the ground,—and you see† that there is a jar on the ground. Seeing "that there is a jar on the ground," is, in the language of our philosophy, seeing "the existence of a jar on the ground." Now, let the jar be removed—and what do you see then? Why, you see, or ought to see, that there is not a jar on the ground—or—by substitution, as an algebraist would express himself—you see the Non-existence of the jar on the ground.

But now comes the question—where was the Non-existence whilst the jar was there? On this point there exists—or existed—a difference of opinion. The generally received opinion now is, that of our author—viz. that the Non-existence was there all the time. The argument in support of this view runs thus. The Absolute Non-existence of the jar is *one* non-existence, and not a number of non-existences. In whatever spot of ground this may be, then, it cannot be destroyed even by the placing of the jar itself upon the spot—for, if it were thus destroyed, it could be found no where else—or, in other words, we should find the jar itself every where. That a jar should thus usurp the universe, being what neither gods, men, nor columns, could submit to, the hypothesis which would lead to such a state of things must needs be given up. The Non-existence, therefore, is not destroyed, but only *hidden*:—and this view of the matter may be summed up in the proposition that the Absolute non-existence of every thing is at all times present every where, and is only, for the time, there hidden where the thing itself happens to be. In proof of this, you have only to remove the jar, and you will find the Non-existence exactly as you left it. Moreover—our author contends—if you suppose another kind of non existence, which is to be destroyed every time that the thing is brought, and re-produced every time that the thing is removed, your hypothesis is an un-philosophically cumbrous one—which can stand no comparison with the one here propounded.

In the case of the baking of a water-jar in a brick kiln, an attempt, as we intimated before, was made to secure the entire right of occupancy, as a Non-existence, for the Antecedent with the Emergent as his successor, to the exclusion of the Absolute. The attempt is generally admitted to have been a failure. The case stood thus. Before the earthen jar is baked in the kiln, it is a black jar; but, by the process of baking, it become a red jar. Now, a black jar is not red,—neither is a red jar black. Hence—argued the claimants—the case involves the Antecedent non existence of the redness whilst it has not come into being, and the Emergent non-existence of the blackness when it has ceased to be;—and, the state of the case being thus completely accounted for, Absolute non-existence has no business here. To this it was replied, that there was no intention to eject the other parties, that there was room enough for all three, and that the respondent was entitled to be admitted as a joint occupant, seeing that all three ought to meet and shake hands fraternally at the turning point, the instant of change, when there is the Emergent non-existence (or Destruction) of the blackness, the Antecedent non-existence of the redness, and the Absolute non-existence of both—both colours being, at that instant, like a pair of Newtonian "prime and ultimate ratios," just equally predicable, and the simultaneous predication of both being absurd.

* Conf. the tree Igdrasil—Carlyle's "Heroes and Hero-worship" p. 31.

† Were we debating the point with an opposing pandit, we should take the precaution to specify th[illegible] that the sun, or some sufficient substitute, is [illegible]cles are properly wiped:—that your eye-sight is not particularly worse than usual;—and that you, bona fide, look at the jar.

* Universal non-existence, it is to be observed, is, in its first subdivision, of two [illegible]ne direction, and limited in no direction. The la[illegible] Absolute or Unlimited Non-existence (*atyantábháva*). The other may be limited by a definite beginning or by a definite ending. Thus the Antecedent non-existence of a jar, having had no beginning, ends when the jar is made. Its Emergent non existence (as a jar) commences its endless course from the moment when the jar is shivered into pot-sherds.

One of the nicest points in regard to absolute non-existence, is that involved in the question whether the Absolute non-existence of Absolute non-existence is a Non-existence or an Existence. Those who favour the latter view adopt the argument that two negatives make an affirmative. The opponents of this view contend that—as the non-existence of *x*, no matter what *x* may be, is the non-existence thereof—the non-existence of non-existence can be nothing else than a Non-existence Where there is such a "very pretty quarrel as it stands," it would be a pity to spoil sport by interfering with the settlement of it

A pandit, desirous to make acquaintance, called upon us one day—eager to display his dialectical subtlety, and (like the Irishman of easy conscience who, to the remonstrance—"good gracious—you're not going to take such an oath as that?"—replied—"I'd like to see the oath I would nt take") —prepared to take objection to any proposition however unimpeachable. Finding him no granter of propositions, we reverted. as a last resource, to Aristotle's fundamental position—that it is impossible for the same thing at once to be and not to be. Our visiter was disposed as little to grant this as anything else,—and he had made some way towards demonstrating the perfect compatibility of "being" and "non-being" under certain circumstances, when fortunately another pandit came in—and to him we resigned the conduct of the argument Quotations from all the most profound authorities on the subject of Non-existence were soon flying about our ears—each disputant screaming at the highest pitch of his voice—and, some other pandits having come in and seated themselves as spectators and judges, the contest raged so "fast and furious" that our little boy slunk out of the room in a state of alarm in which we ourself began rather to participate. At length the arguments on the side of Aristotle were found to be in accordance with the dicta of the authorities—whereupon the stranger gracefully gave in and was complimented on the vigour with which he had fought a losing battle.

It is but fair to observe that the pandits, except when regularly contending for victory, appear to be quite as capable of appreciating the whimsical side of such scholastic disquisitions as any European is They set store by them as furnishing occasion for admirable discipline in the rigidly correct employment of language It is a mode of mental gymnastics—an intellectual bout at fence. One—that is to say one decidedly practical and venerable—one who makes money and invests it judiciously—may question whether exercise in this kind of fencing is of any use. If fencing, bodily or mental, be of any use at all, the latter will not (by any one that we care to exchange words with,) be held the less useful of the two. The usefulness of the former, and of gymnastics in general, does not require to be demonstrated at this time of day.

For the present we quit our friend the student—hoping to meet him next in the field of "criticism."



*Communications of a literary nature should be addressed to the* EDITOR. *all letters on business, to the Proprietors,* MESSRS. E. J. LAZARUS & CO., *to whom Drafts should be made payable.* ADVERTISEMENTS *will be inserted at four annas per line.*

The PANDIT may be ordered of the Publishers, or through MESSRS. TRUBNER and Co., LONDON.

*Annual subscription, in advance, including postage, Rs.* 12.

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 22. Benares March 1st, 1868. Vol. II.

## ॥ नरेश्वरपरीक्षा ॥

### ॥ तृतीयं काण्डम् ॥

(१४०) अथ नैषां क्रियार्थत्वं देवतास्वपि तत् समम् ।

अथ जातेरेव नित्यायास्तत्राङ्गत्वमित्यभ्युपगमादनित्यानां खदिरादिविशेषाणां कारकत्वं नेष्यते, तर्हि देवतात्मनोऽनित्यस्यैवात्राङ्गत्वं नतु तच्छरीराणां परपुरप्रवेशन इवोपादेयपरित्याज्यत्वेनानित्यानामिति सर्वं समानम्, अत एव यागसाधनत्वान्यथानुपपत्त्या युगपद्विभिन्नदेशव्यवस्थितानेकाधिकार्यनुष्ठीयमानानेकक्रतुसाधनत्वं देवतायाः प्राकाम्यतोऽनेकनिर्माणकायरचनेन कल्प्यते, इत्यैश्वर्यसिद्धिः ॥

"नन्वत्र ब्रह्मेन्द्ररुद्रादीनां बहूनां देवतात्वेन श्रुतेर्मतिभेदसंभवादीश्वरासिद्धिः,, इत्याह ।

(१४१) ईश्वरे तु विशेषोऽसौ तज्ज्ञानादेव गम्यते ।

श्रुतित एवेश्वरविषयो विशेषोऽसौ प्रतीयते, यतः श्रूयते,

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः,, ॥

इति, एक एवेश्वरोऽधिष्ठेयभेदादनेकत्वेन राजा नियोगिभेदेनेव व्यपदिश्यते, स च रुद्र एव, यच्छ्रूयते, "एक एव रुद्रोऽवतस्थे न द्वितीयः शतं शता सहस्राणि ये रुद्रा अधिभूम्याम्,, इति, तस्यैव भगवतो रुद्रेषु वैश्वरूप्यप्रतिपादनात्, नच गुणत्वेन देवतायाः श्रुतेर्दध्यादीनामिव नेश्वरता, न, संप्रदानकारकत्वेन तस्याः प्रधानत्वात्, कर्तुरीप्सिततमेन कर्मणा यमभिप्रैति स संप्रदानं यतः । "यद्यप्येवं सर्वस्यैव कर्मणो दार्शपौर्णमासादेः, "ऐन्द्रं दध्यमावस्यायाम्,, इत्यादिश्रुतिसिद्धेन्द्रादिदेवतार्थत्वाद् गुणकर्मत्वेन न विधिविषयता,, तदुक्तम्, "यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत,, इति, न, आत्मन उपदेशवदातिथ्यवच्चोपपत्तेः, यथाहि" आत्मा ज्ञातव्यः,, इत्यात्मकर्मकोऽपि भावार्थः, यथा च "अतिथये समभ्यागताय महोक्षं महाजं वाऽऽलभेत,, इत्यतिथ्यर्थमपि कर्म चोदितत्वेनानुष्ठेयत्वाद्विधिविषयमिष्यते भवद्भिः, तद्वदेतदपि भविष्यतीत्यविरोधः, "कुतस्तर्हि फलम्,, देवतात एव, भवतामिव वा नियोगतः, यथाहि "ग्रामकामो राजपुत्रसेवां कुर्यात्,, इत्यादौ राजपुत्रसेवाविषयाद्राजनियोगतः फलम्, एवमत्रापि देवताराधनविषयान्नियोगत एव फलमिति, "ननु राजपुत्राद्यावाराधनसंपत्तिः प्रमाणान्तरसिद्धा भवतु,, इह तु शास्त्रसिद्धा तद्विकलक्रियाद्यनुष्ठानतः श्रद्धाप्रामाण्येन वा प्रतीयत इत्युक्तं महामतिभिर्देवताकाण्डे, त्रिकाण्डो हि वेदार्थविचारः क्रियाकाण्डदेवताकाण्डोपनिषत्काण्डभेदेन जैमिनिमुनिप्रभृतिभिः सूत्रकारैरारब्धः, स तु कर्मकाण्डमात्रदर्शिभिर्मीमांसकैरज्ञानतः कर्ममात्रविषयत्वेन नीतः, अत एव त आहुः,

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्,, ।

इति,,

आचार्यो देवताकाण्डसिद्धवाक्यार्थविरोधेन कर्मकाण्डस्यापि देवताप्रामाण्यं योजयितुमत्रोक्तवान्,

"ईश्वरे तु विशेषोऽसौ तज्ज्ञानादेव गम्यते,, ।

इति ॥

अत एवोपनिषत्काण्डदृष्ट्याप्याह ।

(१४२) धर्मशास्त्रे विशुद्धिर्या परमा पुरुषस्य हि ।
ईश्वरप्रणिधानात् तद् योगशास्त्रेऽपि पठ्यते ॥

वेदान्ते हीश्वराध्यासकृतप्राणविराड्भूतेन्द्रियेषु मध्वादीश्वरोपासनयैव मोक्षः श्रूयते, स्मृत्यादावप्यग्निहोत्रादीष्टापूर्तौ धर्मे ईश्वरसपर्यात्मकः ।

"पक्वेष्टकाचितं सम्यग्यः करोति शिवालयम्,, ।

इति च श्रूयते,

"पूर्ते मोक्षं विनिर्दिशेत्,,

इति च, वायुपुराणादौ च,

"अनुपास्येश्वरं मोक्षो बद्धस्येव कुतो भवेत्,, ।

इति, महाभारतादिष्वपीतिहासेषु कुण्डधारोपाख्यानादौ, गीतासु च,

"यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते,, ॥

इति, ईश्वरोपासनयैव पातञ्जलेष्वपि मोक्ष इति न तदभावोऽभ्युपगन्तव्यः, सर्वागमविरोधात् ॥

"ननु योगशास्त्रेष्वीश्वरप्रणिधानात् समाधिलाभः फलं पठ्यते, न मुक्तिः,, इत्याह ।

(१४३) क्लेशग्रामस्य तनुता समाधिस्तत्फलं फलम् ।

अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः, तत्समुदायस्यापचिततरत्वमुपशम एव, समाधिहेतुत्वात्, समाधियोगश्चित्तजयात्मक इतीश्वरस्य तत्, इति मोक्षफलमेव समाधिलक्षणं फलम्, न ततोऽन्यदित्यविरोधः ॥

"नन्वेवं सति सावयवात्मनां मूर्तिमत्त्वेन वेदवेदार्थयोरनित्यत्वादप्रामाण्यम्,, इत्याह ।

(१४४) स्थिता संततिरूपेण देवता तत्र चाकृतिः ।
शब्दार्थयोरनित्यत्वं मूर्तिमत्त्वेन बाध्यते ॥

यतः परपुरप्रवेशिशरीरवदुपादेयपरित्याज्यशरीरसंतत्यात्मना देवता वेदार्थभूता व्यवस्थितेत्युक्तम्, यतश्च तत्र शब्देऽर्थे च जातिः स्थिता, ततो मूर्तिमत्त्वेन यच्छब्दार्थयोरत्रानित्यत्वमप्रामाण्यसाधनायोक्तं तद्बाध्यते, जातेरिवात्र स्थिरायाः प्रमाणप्रमेयत्वव्यवस्थापनात्, यदाहुः, "जातिरेवाकृतिमिति,, मीमांसकाः ॥

उपसंहर्तुमाह ।

(१४५) एवं च कल्प्यमाने स्यात् को दोषो येन संश्रितम् ।
नास्तिक्यं देवताऽसत्त्वं गदद्भिः पण्डितैरपि ॥

एवं वेदस्य देवताप्रधानत्वेऽपि प्रामाण्यसिद्धेर्निष्प्रयोजनमेव देवताया अभावख्यापनेन मीमांसालोकैर्नास्तिकपक्षः संश्रित इत्याचार्यः प्रायेण मौर्ख्यान्मीमांसालोकैर्लोकायतीकृतांस्तानास्तिकपथे कर्तुमयं यत्नः कृतो मयेत्येतदपि दर्शयति, यद्येवमीश्वरप्रणीतत्वेन वेदः प्रमाणम्, वेदाच्चेश्वरसिद्धिः, इतीतरेतराश्रयदोषः, यदाहुः, "एवं वेदोऽपि तत्पूर्वः, तत्सद्भावादौ वचने साशङ्को न प्रमाणं स्यादिति,, ॥

एतत् प्रतिक्षिपति ।

(१४६) ईशोक्तत्वेन नैवेष्टा तत्कृतत्वेन मानता ।
अन्योन्याश्रयता तस्माद्दोषो नानित्यवादिनाम् ॥

नहीश्वरकृतत्वेन प्रमाणं वेदोऽस्माभिरिष्यते, तनुकरणादिभिरनैकान्तिकत्वात्, अपितु प्रमाणं सदीश्वरकृत इतीश्वरकृतत्वेऽपि शास्त्रस्य नान्योन्याश्रयदोषः ॥

"कथं तर्ह्यस्य प्रामाण्यम्,, इत्याह ।

(१४७) शास्त्रस्य मानता सिद्धा न्यायतः प्राक् प्रभाषितात् ।

तनुकरणभुवनादिवैलक्षण्येन प्रमाणशक्तिजनकत्वादेव प्रत्यक्षादेरिवास्य प्रामाण्यमित्युक्तम्,

"वाक्याद्धि सर्वतः पूर्वमर्थे धीरविशेषतः,, ।

इत्यादिना, प्रोक्तं च भवद्भिरपि,

"स्वतः सर्वप्रमाणानां प्रामाण्यम्,,

इति, नित्यत्वमनित्यत्वं च प्रामाण्येऽनुपकारकमेव ॥

किमेवमीश्वरप्रयुक्तत्वमपि शब्दस्यात्रानुपकारकमेव,, नेत्याह ।

(१४८) ईशोक्तत्वादमानत्वं जातुचिन्नोपपद्यते ।

कृतकत्वाद्रथ्यापुरुषवाक्यवदप्रामाण्यशङ्कास्य केवलमीश्वरप्रणीतत्वेन निवर्त्यते, रथ्यापुरुषाणां हि कामक्रोधादियोगेन दृष्टं विपरीताभिधानम्, ईश्वरस्य तु तदभावात् पित्रादेः पुत्रादाविव सर्वत्रोपकारायैव प्रवृत्तेर्न तथात्वमिति ॥

"ननु निष्प्रयोजनमत्र वेदस्येश्वरकर्तृकत्वसाधनम्,, इत्याह ।

(१४९) समानत्वे ततः कृत्ये परितुष्टः प्रवर्तते ।

यो हि मोहाद्वेदस्य नित्यत्वेन प्रामाण्यमबुद्ध्वा कृतकत्वेनात्राप्रामाण्यमध्यारोप्य न प्रवर्तते, प्रवर्तमानो वान्येन निषिध्यते, तं प्रति वेदस्यापि कृतकत्वं मतिशास्त्रसाम्यप्रतिपत्तये उदीरितानां प्रवृत्त्यर्थं प्रतिपाद्यते, इति न निष्प्रयोजनमेतदिति ॥

पुनः प्रयोगान्तरभ्रान्त्या कारिकाभागेन परः ।

(१५०) असर्ववित् कथं देवं जानाति,

यदाहुः,

"सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
नास्त्यतोऽनुपलभ्यत्वात् पुंसामश्वविषाणवत्,, ॥

इति ॥

एतदयुक्तमित्याह ।

(१५१) इत्युक्तमानतः ।

साक्षाच्चोत्सवनीयो हि योगस्तेनादरात् ततः ॥

अन्यवादादिसिद्धेन संस्कृताचोऽञ्जनादिना ।

यथा पश्यति सूक्ष्माद्यपीतरेषामतीन्द्रियम् ॥

संस्कृतात्मा तु योगेन तथा योगी प्रपश्यति ।

माहेश्वरेण वस्तूनि सर्वाणि परमेण तु ॥

आगमसिद्धवस्तुक्रमाभ्यासजेन परमेण योगेन समभिव्यक्तज्ञानातिशयो योगी सर्वाण्येवातीन्द्रियाणीश्वरादीनि वस्तूनि पश्यति, यथा सिद्धाञ्जनादिना संस्कृतनेत्रः पुरुषः पुरुषमात्रागोचराण्यत्यन्तव्यवहितानि निधानादीनि, इति योगिप्रत्यक्षसिद्धेश्वरेऽस्मदाद्यग्रहणमसिद्धत्वान्नाभावसाधनमिति ॥

"ननु योग एव तावन्न सिद्धः, कुतस्तेनेश्वरदर्शनादर्चासिद्धता,, नेत्याह ।

(१५२) दृष्टा च प्रातिभेनेह वाक्यार्थव्यापृतिं विना ।

मेये त्रिष्वपि कालेषु लिङ्गानि च विना मतिः ॥

प्रातिभस्य तथा योगी प्रकृष्टेन तु सर्वथा ।

मिनोति युगपत् सर्वं तत्सिद्धौ योगचोदना ॥

यथा श्वस्ते भ्राता गमिष्यतीत्यागमानुमानाभ्यां विना प्रातिभेनैव योगेन प्रातिभस्य पुंसस्त्रिकालाविसंवादिनी मतिर्दृष्टा, तथैव योगिनोऽपि योगेनैवेश्वरादिविषया भविष्यतीति संभावनानुमानसिद्धत्वाद्योगप्रतिक्षेपस्तावदयुक्तः, चोदनासिद्धत्वाच्च, वेदान्तेषु हि,

"आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।

ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत्,, ॥

इत्यादयो योगचोदनाः स्मृतीतिहासपुराणादिषु च सन्ति, इति योगिज्ञानमप्रतिक्षेप्यमेव ॥

नच तेषां चोदनावाक्यानामप्रामाण्यमित्याह ।

(१५३) व्यभिचारो न यस्य स्यादप्रमाणं कथं हि तत् ।

तच्चोदितक्रियाकर्ता तत्फलाप्ता च नो कथम् ॥

"अङ्गुल्यग्रे हस्तियूथशतमास्ते,, इत्यादौ व्यभिचारदर्शनाल्लौकिकं वाक्यमप्रमाणमित्युक्तम्, नच चोदनावाक्यस्य व्यभिचारः कश्चिदस्ति, इत्येतदपि प्रमाणमेव, चोदनासिद्धेश्वरादिप्रमितिक्रियाकर्तरि मोक्षफले विशिष्टे योगात्मनि स्वाभिधेय इति ॥

अन्यथा ।

(१५४) वेदोऽपि तत्समानत्वान्न मानं नापि भोगकृत् ।

विशेषाभावात् कर्मकाण्डप्रतिपादकस्यापि "ज्योतिष्टोमेन यजेत,, इत्यादेर्वेदभागस्याप्रामाण्यं स्वर्गादिफलकर्तृत्वाभावश्च प्रसज्यते, इति ॥

अत्र पराभिप्रायः ।

(१५५) इष्यतेऽचोभयं तच्चेत् ।

"अथास्मिन् भागे प्रामाण्यं स्वर्गादिफलकर्तृत्वं चेत्युभयमिष्यते,, ॥

आचार्य आह ।

(१५६) योगेऽप्येतत् तथेष्यताम् ।

न्यायस्य समानत्वाद्योगप्रतिपादकेऽपि वेदान्तादौ प्रामाण्यं मोक्षफलकर्तृत्वं च सिद्धमिति योगिनः प्रमाणसिद्धत्वात् तज्ज्ञानस्येश्वरे प्रवृत्तिसिद्धेरस्मदाद्यदर्शनमसिद्धत्वाच्च तदभावसाधनमिति ॥

उपसंहरति ।

(१५७) इत्थं सर्वप्रमाणानां गोचरो हर ईरितः ।

एवं चानुमानागमयोगिप्रत्यक्षैरीश्वरः सिद्ध इति तदभावाभिधानादज्ञतैव भवतामिति ॥

अधुनेश्वरस्वरूपं विप्रतिपत्तिनिराकरणेन प्रतिपादयति ।

(१५८) स च स्वभाववैमल्यात् कार्ममायीयवर्जितः ।

तत्कार्यस्य कार्ममायीयस्य प्रवाहतोऽनादित्वात् सोऽपि तत्कर्तृत्वादेवानादिसिद्धः स्वभावविमलत्वेनोक्तः, आदिसिद्धस्य हि मुक्तात्मनः प्राग्बन्धसद्भावतः स्वभाववैमल्यासंभवात्, ततश्च "ये कर्मविशेषानुष्ठानाच्छ्रुतक्रतुवदीश्वरं ये तु पातञ्जला बुद्ध्यादिसामर्थ्येन नैयायिकवैशेषिकाश्च मनोयोगादाहुः,, ते प्रतिक्षिप्ताः, तथाभूतस्य पुरुषवत् संसारित्वेनेश्वरत्वायोगात् ॥

"ननु मुक्तशिववत् तस्यापीश्वरान्तरादैश्वर्यमिति प्रवाहनित्येश्वरवादिनः,, तान् प्रतिक्षिपति ।

(१५९) परस्मात् तस्य वैमल्ये मुक्तात्मासौ ततश्च सः ।

कृत्यस्तु विमलो येन स्वभावविमलो ह्यसौ ॥

भवेदेतत्, यदीश्वरताया नाशः स्यात्, स तु नास्तीति वक्ष्यामः, ततश्चोत्पाद्योत्पादकयोर्द्वयोरपीश्वरयोः संनिधानात् पूर्वः पूर्वतरो वा स्वभावादिमलोऽभ्युपगन्तव्य इति कुतः प्रवाहनित्येश्वरवादः ॥

अत एव ।

(१६०) वैमल्यात् तस्य नो कर्म निर्मलः कर्मकृन्नहि ।

मलकर्मविहीनत्वान्मायीयं नो कलादिकम् ॥

आणवस्य बन्धस्याभावात् कार्मस्याप्यभावः, तयोरभावान्मायीयस्यापि, इति सर्वबन्धविहीनो भगवान् सिद्धः, कार्म-

भावेऽपि संस्कारतश्चक्रभ्रमवद् धृतशरीरत्वात् केषांचित् समलानामेव मायीयो बन्धोऽस्तीति द्वयोरत्रोपादानम्, तदुक्तं स्वायंभुववृत्तौ,"मलमायाख्ययुक्तानामप्यनुग्रहः संभवति,,इति॥

अत एव च,

(१६१) निष्कलत्वात् कलाद्युक्ता रागद्वेषादयः कुतः।

मायीयबन्धाभावादेव तदात्मकानां तस्य रागद्वेषादीनामभावः सिद्ध इति पुरुषकृतकर्मानुसारेण सुखदुःखादिप्रदत्वं न रागद्वेषादिभिरित्युक्तम्,

"येन यादृग्विधं कर्म,,

इत्यादि॥

"कथं तर्हि,

"सकलं चैव यो वेत्ति सदाशिवम्,

इत्यादावीश्वरः सकलः प्रोक्तः,, इत्याह।

(१६२) स लोकेशो महेशानो गीतः शक्तिकलान्वितः।

सकलो हि सशरीरः कथ्यते, शक्तय एव तस्य शरीरमित्युक्तम्,

"ज्ञानक्रिये शिवः प्रोक्तः सर्वार्थे निर्मले परे,,।

इति॥

किंच।

(१६३) सकलोऽपि च शक्त्यैव सर्वं वेत्ति करोति च।

सकलस्यात्मनोऽपि शक्तिरेव शरीरं तयैव सर्वत्रोपयोगात् तदुपकारकत्वाच्चेदं बाह्यमुपचारेण शरीरमित्युच्यते॥

ततः किमित्याह।

(१६४) शक्तिस्तेन कलापिण्डः सकलश्च महेश्वरः।

तेन शक्तिरेवानेककार्योपयोगात् कलापिण्डः शरीरं परमार्थतः कथ्यते, इतीश्वरः सकलः प्रोक्तः॥

स एव तु।

(१६५) शक्तिपिण्डकलावत्त्वाच्छक्तिमान्निष्कलः स्मृतः।

शक्तिशरीरत्वादेव तस्य बाह्यकलाद्यात्मकं शरीरं नास्तीति निष्कलः, यदुक्तं मोक्षकारिकासु,

"न कलादिकलापिण्डसंबद्धोऽसौ यथा पशुः।

कदाचिदपि देवेशस्तस्माद्गीतस्तु निष्कलः,,॥

ततश्च सकलनिष्कलयोर्न परमार्थतो भेद इत्युक्तं भवति, यदुक्तं तत्त्वसंग्रहे,

"अत्र च तत्त्वद्वितयं बोधध्यानादिसिद्धये गदितम्,,।

"अमूर्तिश्च तद्वांश्चेति च,,लेशादुक्तिश्च शक्तिशक्तिमतोः,, इति॥

अत्रैव मतान्तरमाह।

(१६६) चेष्टावान् सकलः केश्चित् तद्वियुक्तस्तु निष्कलः।

यदा स्थित्यादीनि कर्माणि विधत्ते तदा सकलः, समुपहृतक्रियस्तु निष्कलः,इति केश्चित् सकलनिष्कलयोरवस्थाभेदेन भेदः स्मृतो न वस्तुतः, तदिदमुक्तम्,

"ईशः सदाशिवः शान्तः कृत्यभेदाद्विभिद्यते,,।

"यद्येवं पुरुषस्याप्येवं सकलनिष्कलात्मत्वसंभवात् ततः को भेदोऽस्य,, इत्याह।

(१६७) विमलत्वाच्च सर्वार्थसंबद्धे तस्य दृक्क्रिये।

दृक्क्रियावरकस्य मलस्याप्यभावादेव युगपत् सर्वार्थसंबद्धे तस्य ज्ञानक्रिये, पुरुषस्य मलावृतत्वात् क्रमेणेति भेदः॥

अपिच।

(१६८) सर्वकर्तृत्वतश्चापि सर्वज्ञः सोऽधिगम्यते।

न केवलं विमलत्वात्, यावत् प्राक् प्रदर्शितात् सर्वकर्तृत्वादपीश्वरः सर्वज्ञः सिध्यति॥

"कथम्,, इत्याह।

(१६९) कुम्भकारो यथा वेत्ति सर्वं सफलकारकम्।

सर्वकर्ता तथा वेत्ति सर्वं सफलकारकम्॥

यथा प्रागगृहीतमूल्यसंशुद्धये मृदादिना तेन घटं करिष्यामीति कुम्भकारादिकर्ता स्वकार्ये सर्वज्ञः सन् कर्ता दृष्टस्तथैव भगवानपि सर्वकर्तृत्वात् सर्वस्मिन् स्वकार्ये ज्ञः सिध्यतीति सर्वज्ञः प्रोक्तः॥

"यद्येवं कर्तृत्वस्य क्रमेण दर्शनात् ततो विज्ञानमपि क्रमेण सिध्यतीति युगपत् सर्वज्ञत्वाभावस्तस्य,, इत्याह।

(१७०) मोच्योत्पाद्योपसंहार्यनिरोध्यप्रेर्यवस्तुषु।

एककालाभवेष्वेषु युगपत् कर्तृता मता॥

क्रिया हि क्रमिका न कारकत्वम्, कुम्भकारादावपि युगपदनेकभोजनगमनादिक्रियासु कर्तृत्वसिद्धेः, इत्येषु मोच्यादिषु कार्येषु निमित्तभूतेषु भवविषया भगवतो युगपत् कर्तृता यतः, अतश्च ज्ञानमपि युगपदेव सिध्यतीति न विरोधः॥

अत एव तस्य त्रिकालामलज्ञानसिद्धिरित्याह।

(१७१) तच्च त्रिकालकं तेन यदित्थं वेत्ति शंकरः।

अनेनेदं कृतं कर्म देयं चास्येदृशं फलम्॥

एवं हि सर्वकृत्येषु त्रिकालविषयं हि तत्।

बोद्धव्यं नान्यथा शंभोः स्याद्यतः कृतकृत्यता॥

तदिदमुक्तम्,

"कुम्भकारो यथा वेत्ति,,इत्यादिना॥

अत एव।

(१७२) प्रमाणं तच्च शैवाख्यं पशुमानविलक्षणम्।

द्वारद्वारिकया कृत्यं साक्षाच्चेष्टं तु तत्फलम् ॥

यथावस्थितं सर्वमेव वस्तु तेन प्रमीयते यतः, अतः पशुमानविलक्षणं तत् प्रमाणम्, प्रयोजनं तु तस्येश्वरज्ञानस्य विद्येश्वरादिद्वारेण पञ्चविधजगत्कृत्यसंपादनम्, साक्षाच्च विद्याविद्येश्वराद्यनुग्रह इति ॥

पशुप्रमाणस्यैतद्विलक्षणं स्वरूपमाह ।

(१७३) सदाचलिङ्गवाक्यैश्च व्यक्तं ज्ञानं तु पौद्गलम् ।
प्रत्यक्षमनुमानं च शाब्दं चेत्युदितं क्रमात् ॥

इन्द्रियाद्युपायत्रयभेदात् प्रत्यक्षानुमानागमभेदेन त्रिविधं परिमितिविषयं चेति ।

"अथ कथं तदेवोपायापेक्षं न पारमेशम्,, इत्याह ।

(१७४) शैवं न व्यञ्जकापेक्षं ज्ञानमावृतिहानितः ।
गुरुभिः पशुमानेभ्यो गीतं तेन विधर्मकम् ॥

मलादिपाशैरनावृतत्वात् पारमेशं नेन्द्रियाद्युपायापेक्षमर्थेषु प्रवर्तते, इति पशुप्रमाणविलक्षणमुक्तम् ॥

अत एव ।

(१७५) न संदेहविपर्यासरूपं तदनपेक्षणात् ।
ज्ञानमेतत् पशौ यस्माद्दुष्टं व्यञ्जकदोषतः ॥

पशुज्ञानवदिन्द्रियाद्युपायानपेक्षणात् तत्तत्संश्लेषदोषैर्मिथ्यात्वाज्ञानसंशयैर्युज्यते, इति तद्विलक्षणम् ॥

नापि गृहीतग्राहित्वे स्मृतिरूपं तदित्याह ।

(१७६) सर्वदैवोदितत्वाच्च स्मार्तं तदपि नो भवेत् ।

ग्राहकात्मनो ज्ञानस्य प्रथमकाण्ड एव नित्यत्वेनैकतया प्रतिपादितत्वाचाध्यवसायज्ञानस्येव स्मृत्यादिभेदः संभवतीति ॥

अतोऽपि तद्विलक्षणं किमत आह ।

(१७७) इत्थं च मानरूपेण विहीनं मानमेव तत् ।

अतश्च संशयादिरहितत्वे सत्यर्थसाक्षात्कारात्मकत्वादिन्द्रियप्रत्यक्षवत् तदपीश्वरप्रत्यक्षं प्रमाणमेव ॥

अत्र परः ।

(१७८) नन्वदेहस्य विज्ञानं न कर्तृत्वं च युक्तिमत् ।
शंकरस्य यतः पुंसां देहादौ सति दृश्यते ॥

विज्ञानस्य देहाविनाभावो देहपारतन्त्र्यमस्मदादिषु सिद्धम्, इत्यर्थाद्देहाभावेन सह विरोधसिद्धेन देवसर्वज्ञत्वं प्रयोगान्तरेणाच निषिध्यत इत्यपौनरुक्त्यम्, यदाह मण्डनः, "विधिविवेके परतन्त्रं बहिर्मनः,, इति ॥

एतत् प्रतिक्षिपति ।

(१७९) न युक्तिमच्छरीरादिनिषेधे मानमीरितम् ।
सर्वज्ञत्वादिसिद्धौ च महेशस्य यतः स्फुटम् ॥

नैतद्युक्तम्, यतो मध्यमकाण्डे,

"कुलालसमतां पत्युः,,

इत्यादिना तस्य शरीरादि प्रतिषिद्धम्,अत्र च सर्वज्ञत्वं प्रसाधितम्, इत्यशरीरत्वसर्वज्ञतयोर्विरोधाभावाच सहावस्थानानुपपत्तिः, इति न विरुद्धोपलम्भोऽयं सर्वज्ञत्वाभावसाधनः ॥

"ननु पारतन्त्र्यं बहिर्मनोदृष्टान्तसिद्धम्,, इत्याह ।

(१८०) संरुद्धत्वाच्च तत् पुंसां व्यक्तौ देहाद्यपेक्षते ।

यदत्र मनोऽन्तःकरणमभिप्रेतम्, तद्व्यधिकरणासिद्धो हेतुः, तस्य पारतन्त्र्यात् सर्वज्ञस्य कानुपपत्तिः, नहि मनोयोगात् तत्र सर्वज्ञत्वं पुरुष इवोपपद्यते, इत्याद्युक्तम्, प्रातिभयोगिनां च पूर्वनयेनेन्द्रियानपेक्षया स्वातन्त्र्येणैव मनसो बाह्यार्थे प्रवृत्तिसिद्धेरनैकान्तिकश्च, अथ मनो ग्राहकात्मैव विवक्षितम्, तदिन्द्रियादिपारतन्त्र्यं भवतां परमात्मादावदर्शनादविद्यापरुद्धत्वेन सिद्धम्, इतीश्वरे तदभावात् तस्याप्यभाव इत्यदोषः ॥

"ननु रूपादिग्रहणमिन्द्रियादिकरणकं पुरुषे सिद्धम्,, इतीश्वरे तदभावात् तस्याप्यभावः, इति कारणानुपलब्ध्या सर्वज्ञत्वनिषेधोऽयं भविष्यति,, इत्याह ।

(१८१) नचाप्येवंविधं कार्यं देहादौ सति दृश्यते ।

प्रतिपादितनयेन प्रातिभानां योगिनां चेन्द्रियं विना रूपादिग्रहणं मानसप्रत्यक्षेण चान्येषां दृष्टमिति न सर्वमेव रूपग्रहणमिन्द्रियादिकरणकं सिध्यति, अपितु विशिष्टमेव, यदाहुः,

"संबद्धं वर्तमानं च गृह्यते चक्षुरादिना,, ।

इति, ततश्चेन्द्रियाद्यभावात् तत्र तथाभूतस्यैव रूपादिग्रहणात्मनः कार्यस्याभावः सिध्यति, न तदकारणस्य त्रिकालामलानन्तविषयस्यापीत्यदोषः ॥

ये त्वाहुः ।

"नास्तीश्वरो बुद्धादिभिः सर्वज्ञैरदृष्टत्वाच्छशविषाणवदिति,, तान् प्रत्याह

(१८२) प्रसिद्धमानगम्यानि वस्तून्यप्यन्यथैव ये ।
कथयन्ति स्म बुद्धाद्यास्ते कथं सर्ववेदिनः ॥

भवेदेतत्, यदि सर्वज्ञत्वं तेषां सिद्धं स्यात्, तत्तु प्राक्प्रदर्शितप्रमाणसिद्धात्मादिवस्त्वदर्शनात् तेषामसिद्धमेवेत्यसाधनम् ॥

तथा ।

(१८३) महाज्ञानबलाद्योऽपि ध्रुवान्तं कथयन्ति हि ।
सर्वज्ञानक्रियायुक्तं पृष्टास्तेऽपि न शक्नुयुः ॥

निर्वक्तुं सर्वशब्दार्थमपवादविवर्जितम् ।
यावन्नः शैवसिद्धेशदृक्क्रियागोचरं बुधाः ॥

येऽपि महाव्रताः शैवाभिधानेन पृथिव्यादिध्रुवान्तार्नर्थान् सर्वमिति कथयन्ति, ते सर्वज्ञं पृष्टाः सन्तः सर्वशब्दार्थं निरपवादं वक्तुं नच शक्नुवन्त्येव, यतस्तैः प्रकृत्यादिकारणत्वेन कलैव ध्रुवपदेन प्रोक्ता, इति तदन्तस्यैव सर्वशब्दाभिधेयता, तावन्मात्रस्य ज्ञश्च सर्वज्ञो गीयते, न मायादेरपीति, ततो न यावदस्मद्दर्शनप्रसिद्धेश्वरगोचरं सर्वमेव शिवाद्यवनिप्रान्तं वस्तु पश्यतीत्युच्यते तावत् सर्वज्ञं प्रतिपादयितुं निरपवादं च सर्वशब्दार्थं व्यवस्थापयितुं न शक्यमेव, अतोऽस्मद्दर्शनप्रसिद्ध एव सर्वज्ञो न दर्शनान्तरप्रसिद्ध इत्यदोषः ॥

एवं सर्वकर्तापि स एवेत्याह ।

(१८४) मन्त्रमन्त्रेश्वरेभ्योऽपि महेशे महती क्रिया ।

मन्त्रमन्त्रेशानां सर्वज्ञत्वेऽपि मायाविषयसर्वकर्तृत्वयोगतः शुद्धेऽध्वनि कर्तृत्वासंभवाच्चेश्वरवत् सर्वकर्तृत्वमिति तेभ्योऽपि विशिष्ट एव ॥

किंच ।

(१८५) मुक्तेभ्योऽपि विशिष्टोऽसौ स्वभावविमलत्वतः ।

मुक्तशिवानां सर्वज्ञत्ववदीश्वरतुल्यसर्वकर्तृत्वयोगेऽप्यनादिसर्वज्ञत्वसर्वकर्तृत्वाभावाच्च तत्समत्वम् ॥

न केवलमनादिरेव ।

(१८६) विभुश्चासौ यतस्तस्य दृक्क्रियालक्षणो गुणः ।
सर्वार्थगो विना नो यद्गुणिनो गुणसंनिधिः ॥

सर्वत्र तच्छक्तिकार्यस्य स्थित्याद्यनुग्रहान्तस्य दर्शनाच्छक्तीनामिव तस्यापि व्यापकत्वम्, शक्तिमता विना शक्तेरसंभवो यतः ॥

किंच ।

(१८७) नित्यश्च तं विना कालः कश्चित् संभाव्यते न यत् ।

नहीश्वररहितः कश्चित् काललवोऽपि संभावयितुं शक्यः, तत्कार्यस्य स्थित्यादेरनुपपत्तितः संसारस्य सामञ्जस्यप्रसङ्गात्, इत्यविनश्वरेश्वरसिद्धिः ॥

"ननु तदैवान्यो भविष्यतीति प्रवाहनित्येश्वरवादिनः„ तान् प्रतिक्षिपति ।

(१८८) दृक्क्रियागुणवत्त्वाच्च कारणाभावतश्च सः ।

नित्य इत्यनुवर्तते, यो दृक्क्रियागुणयुक्तः स नित्यो यथात्मा, दृक्क्रियागुणयुक्तश्चेश्वरः, तस्मादविनश्वरः, यश्चाकारणः स नित्यो यथात्मादि, अकारणश्चेश्वरः प्रोक्तः, ततोऽप्यविनश्वर इति न प्रवाहनित्येश्वरवादः ॥

यदप्याहुः,

"जगच्च सृजतस्तस्य किं प्रयोजनमुच्यताम् ।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥
एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत्„ ।

इति, तत्राप्याह ।

(१८९) मलाद्यभावतस्तस्य चेष्टा न स्वात्मभूतये ।
युक्ता नापि स्वभोगाय सर्वज्ञत्वादियोगतः ॥

निर्मलत्वेन प्राप्तप्राप्तव्यस्य न तावत् तस्य पुरुषस्येव स्वात्मनो मोक्षार्था, सर्वज्ञत्वाच्च नापि भोगार्था प्रवृत्तिरुपपद्यते, भोगस्याज्ञानानुबन्धित्वेन सर्वज्ञेऽनुपपत्तेरुक्तत्वात् ॥

नापि क्रीडार्थेत्याह ।

(१९०) क्रीडार्था युज्यते चेष्टा सा नोक्तव्यतिरेकतः ।
वर्तते तन्निषेधेन तस्यास्तेन निषेधतः ॥

क्रीडाद्यर्थमपि न तस्य चेष्टा युज्यते, तद्धेतुत्वेनोक्तस्य मलादेर्व्यतिरेकादभावतः, मलादिहेतुका हि पुरुषेषु क्रीडा दृष्टा, इति मलादेस्तत्र निषेधादेव तस्या अपि निषेधः, तदुक्तं भवद्भिरपि,

"क्रीडार्थायां प्रवृत्तौ तु विहन्येताप्तकार्यता„ ।

इति ॥

इतश्च न तस्य स्वार्था क्रीडाद्यर्था वा चेष्टेत्याह ।

(१९१) किंचेशे व्यापृते पुंसां भुक्तिर्मुक्तिश्च दृश्यते ।
चेष्टातः पुंफलायैव स्वाभाव्यात् तस्य गम्यते ॥

प्रागुक्तक्रमेण च मोक्षस्येश्वरव्यापारं विनानुपपत्तेस्तस्य परार्थमेव चेष्टा परोपकारस्वाभाव्यादेव प्रतीयते, नान्यतः ॥

मुक्तेरीश्वरकर्तृत्वं प्रतिज्ञातं साधयितुं स्वरूपमाह ।

(१९२) मुक्तिः परेशतुल्यत्वं मन्त्रमन्त्रेशतापरा ।

सर्वज्ञत्वकर्तृत्वं स्वभावः पुरुषस्येत्युक्तम्, अतस्तत्स्वरूपावाप्तिः परमेशतुल्यत्वं परा मुक्तिः, अपरा तु वक्ष्यमाणमन्त्रमन्त्रेशतुल्यतेति ॥

सा चेश्वरेण क्रियते नतु ज्ञानमोक्षवादिनामिव पुरुषेणेत्याह ।

(१९३) स्वयं करोत्यणूनेतां पाशरुद्धबलत्वतः ।

"ननु ज्योतिष्टोमाद्यनुष्ठानेन स्वर्गादिभोगवदात्मा ज्ञातव्य इत्याद्यनुष्ठानात् पुरुष एव मोक्षं करिष्यतीति पाशरुद्धबलत्वस्य मोक्षकर्तृत्वेन सह विरोधासिद्धेरनैकान्तिकता„ "कः पुनरत्र पाशोऽभिमतो भवताम्„ "नन्वज्ञानमेव„ "तत् किं वस्त्ववस्तु वा„ अवस्तुत्वे तस्य शशविषाणादेरिव नित्यनिवृत्तत्वात् तन्निवर्तको ज्ञानानुष्ठानविधिरेषोऽनर्थक एव, वस्तुत्वे

यदि पुरुषस्वभाव एव, ततो नित्यत्वव्यापकत्ववदनिवर्त्यत्वादनिर्मोक्षः, व्यतिरेके त्वावरकस्वभावं चक्षुषः पाटलादिवदज्ञानहेतुत्वादज्ञानशब्दवाच्यं द्रव्यान्तरमेव तदभ्युपगन्तव्यम्, द्रव्यस्य चावरकस्य तमसः पटलादेरिव ज्ञाननिवर्त्यनिस्वभावसिद्धेः पाशरुद्धबलत्वस्य मोक्षकर्तृत्वेन सह विरोधः सिद्ध इति नात्रानैकान्तिकतेति, "तर्हि कृतप्रयोजनत्वात् पाशाः स्वयमेव पुरुषं मुञ्चन्तीति सांख्याः,, यदाहुः,

"रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः,, ॥

इति ॥

अत्राप्याह ।

(१६४) पाशा अपि न कुर्वन्ति यतस्ते तन्निरोधकाः ।
नचापि बन्धनं बन्ध्यं विमुञ्चद्दृश्यते यतः ॥

नह्यत्यन्तपरिपाकात् कृतप्रयोजनत्वेन निश्चितोऽपि पटलादिः स्वयमावरकत्वेन वा निवृत्तिस्वभावः सिद्धो येन मोक्षोऽप्येतत् कल्प्यमानमुपपद्यते ॥

यत एतत् तस्मात् ।

(१६५) बलीयान् पशुपाशेभ्यस्तन्मोचकतया हरः ।
स एव मोचकस्तस्मात् सर्वस्माद्भवबन्धनात् ॥

चक्षुरादेः पटलादिनिवृत्तावीश्वर एव हेतुः, नान्यः ॥

"ननु शुक्तिरजतादिभ्रमेषु ज्ञानस्याज्ञाननिवृत्तौ पुंसां सामर्थ्यं सिद्धम्,, अतो मोक्षेऽपि तथैव भविष्यतीत्याह ।

(१६६) पुंसां सापेक्षशक्तीनां स चानावृतशक्तिकः ।
युज्यते शक्त्यभिव्यक्तौ नेत्राणां भानुमानिव ॥

इह प्रथमकाण्डोक्तज्ञानवदज्ञानमपि द्विविधमध्यवसायात्मकमेव, विषयसादृश्याविवेकेन शुक्तिकारजतादिषु विपरीतज्ञानात्मकमुत्पद्यते, इति युक्तैव तस्य प्रतिपक्षभूतात् सम्यग्ज्ञानान्निवृत्तिः, यत् पुनरनध्यवसायात्मकं तद् द्रव्यान्तरादिष्टकाकारादेर्वाऽऽदित्यादेर्निवृत्तिस्वभावमिष्टम्, न प्रतिपक्षज्ञानात्, अनध्यवसायात्मकं च पौरुषमज्ञानं सुषुप्तावस्थास्विह पूर्वं प्रतिपादितम्, अध्यवसायात्मनो बौद्धत्वात्, अतस्तदपि स्वहेतुविपक्षभूतादीश्वरादेव वस्त्वन्तरान्निवृत्तिस्वभावमनुमीयते, इति स एव मोक्षे हेतुः सिध्यति, नत्वात्मानः, तज्ज्ञानस्य तत्र सामर्थ्यासिद्धेः, इत्यदोषः ॥

"कथं तर्हि "आत्मा ज्ञातव्यः,, इत्याद्याः श्रुतयः, इत्याह ।

(१६७) एष्टव्यं चेदृशं तत्त्वं नान्यथा मुक्तिसंभवः ।

ता अप्यत एवेश्वरप्रतिपत्तिकर्तव्यतानिष्ठा एवाभ्युपगन्तव्या इत्युक्तम्, अन्यथा मोक्षायोगात् ॥

"ननु वरममोक्षोऽस्तु नचेश्वरः,, इत्यनिर्मोक्षवादिनः, यदाहुः,

"अनादित्वाद्भवः पुंसां न कदाचिन्निवर्तते ।
ततः सुखासुखप्राप्तिनिवृत्ती शास्त्रतः स्मृते,, ॥

इति,

अत्राप्याह ।

(१६८) भवितव्यं तया पुंसां सर्वा व्याप्त्यर्हतां ध्रुवम् ।

सर्वावरणनिवृत्तिस्वभावाः पुरुषा आवरणप्रकर्षापकर्षाभ्यां मूढाद्यवस्थास्वपकृष्टप्रकृष्टतत्स्वरूपोपलम्भान्मेघावृतसवितृवदिति नानिर्मोक्षोऽभ्युपगन्तुं युक्तः, तत्रेश्वरासिद्धिः, नच भवस्यानादित्वं कर्महेतुत्वाद्ययुक्तम् ।

'कर्मतश्च शरीराणि विषयाकरणानि च,, ।

इति ॥

नचागमविरुद्धोऽयं पक्ष इत्याह ।

(१६९) ईशान्मोक्षोऽन्यथा नैव पुंसामेतन्निरूपितम् ।

तथा च श्रीपौष्करे,

"न मोक्षं याति पुरुषः स्वसामर्थ्यात् कदाचन,, ।

इति, श्रीमद्दीक्षोत्तरेऽपि,

"शिवादेवात्मनां मोक्षः,,

इति, ईश्वरव्यापारात्मकत्वाच्च दीक्षायाः श्रीमत्स्वायंभुवेऽपि निरूपितम्,

"दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यसौ,, ।

इति ॥

"नन्वेवमपि केषांचिदनिर्मोक्षदर्शनादीश्वरे रागद्वेषसंभावना,, इत्याह ।

(२००) न रागो नापि च द्वेषस्तस्येत्येतच्च युक्तितः ।

ईश्वरस्य रागद्वेषाद्यभाव इति निरूपितं मध्यमकाण्ड एवेत्ययमपि न दोषः ॥

नचापुरुषार्थभूतत्वाद्वैशेषिकादीनामिवायमपि मोक्षो न केनचिदाश्रीयत इत्याह ।

(२०१) वाञ्छा चाणोः सदैवास्ति सर्वस्यैवोत्तमे पदे ।
अतस्तद्धीयमानं तु न कदाचिन्न मन्यते ॥

नहि सर्वबन्धनिवृत्त्या सर्वैश्वर्यप्राप्तौ कश्चिन्निरभिलाषः संभवतीति ॥

"यद्येवमीश्वरस्य निरपेक्षत्वात् कथं न युगपत् सर्वेषां मुक्तिः,, इत्याह ।

(२०२) अस्त्यनुग्रहसामर्थ्यं सर्वथा चास्ति शंकरे ।
तथापि युगपन्मुक्तिर्नाणूनां तेन दृश्यते ॥

कुत इत्याह ।

(२०३) सृष्टौ योनेर्यथा कालं महेशानो व्यपेक्षते ।
प्रोत्सारणे तथा कालं मलस्यासावपेक्षते ॥

यथाहि मायातः सर्गनिमित्तं कर्मपरिपाककालापेक्षत्वेन भगवतो न युगपत् सर्वभोगप्रदत्वमित्युक्तं प्राक्, एवं मोक्षनिमित्तमलपरिपाकापेक्षित्वाच्च युगपत् सर्वेषां मोक्षप्रसङ्गो निरपेक्षत्वस्यैवासिद्धेः ॥

अत्र पराभिप्रायमाह ।

(२०४) अपरेऽपि स्वतन्त्रोऽसौ रोचते यो यथा यदा ।
तस्मै पुमांसो देवाय तेषां मुक्तिस्तदा तथा ॥

स्वतन्त्रो हि परमेश्वरः, शक्तत्वेनान्यानपेक्षणात् । अन्यापेक्षायां तु सापेक्षमसामर्थ्यं भवतीत्यसमर्थ एवेश्वरः स्यात्, अतो यो यथा परापरमुक्तिसंबन्धितया तस्मै रोचते तं तथैव योजयति, नतु मलपरिपाकाद्यपेक्षयेति ॥

एतत् प्रतिक्षिपति ।

(२०५) पुनर्भवप्रसङ्गः स्यात् स्वतन्त्रादिति नो यतः ।

नैतत्, यतो मोक्ष इव संसारेऽपि कर्तव्येऽसौ स्वतन्त्र एवेति मुक्तस्यापि पुनः संसारं कुर्यात्, दुष्कृतिनोऽपि स्वर्गं सुकृतिनश्च नरकमिति मोक्षशास्त्राणां सत्कर्मानुष्ठानानां चानर्थक्याल्लोकायत एवोपास्यो भवताम् ॥

"अथ तत्र कर्मविपाकापेक्षया नैष प्रसङ्ग इत्युच्यते,, यद्येवम् ।

(२०६) स्वभावस्तस्य नैतादृक् प्रमितः शंकरस्य हि ।

न तर्ह्यनपेक्षस्वभावः सिद्धोऽसाविति भोगेऽपि कर्मविपाकमिव मोक्षे मलविपाकमपेक्षिष्यते, इति को विरोधः, नच कर्माद्यपेक्षितैवास्वातन्त्र्यमपित्वीश्वरान्तरायत्तता, सा च तस्य परमेश्वरत्वादेव नास्तीत्युक्तं मध्यमकाण्डे ॥

किंच, आगमविरुद्धोऽयं पक्ष इत्याह ।

(२०७) उक्तं च तेन मत्तुल्यः प्राप्नोति न भवान्तरम् ।
प्रतिपादयितुं शक्यं नापि मिथ्येति तद्वचः ॥

तथाहि श्रीमत्स्वायंभुवादौ,

"अनाद्यशुद्धिशून्यत्वात् प्राप्नोति न भवान्तरम्,, ।

इति यदुक्तं तत् स्वतन्त्रशक्तिपातपक्षे नोपपद्यते, पुनर्भवप्रसङ्गस्य तत्रावश्यंभावात्, इत्युक्तं यतः, नच पारमेश्वरं वचनमप्रमाणमित्युक्तं प्रागेव, ततः पुनर्भवप्रसङ्गासिद्धेर्न स्वतन्त्रः शक्तिपातोऽपितु मलपरिपाकापेक्ष एवेति न युगपत् सर्वेषां मोक्षप्रसङ्गः, यथा च मलपरिणतेरपि नैष प्रसङ्गस्तथोक्तमाचार्येण तत्त्वत्रयनिर्णय एवेति, तत एवावधार्यम् ॥

रूपान्तरेण स्वातन्त्र्यं शक्तिपातस्य समर्थयितुमाक्षिपति ।

(२०८) पत्या पुमर्थसिद्ध्यर्थं सृष्टा मन्त्राः सनायकाः ।
तेषामेकोऽपि तत् कर्तुं शक्नोति बहुभिस्तु किम् ॥

सप्तकोटिसंख्याता मन्त्रा अष्टावनन्तेशादयो मन्त्रेशा भगवता पुरुषार्थसिद्धये निर्मिता इत्यागमार्थ एकेनैव तत्सिद्धेरयुक्त इति ॥

एतत् प्रतिक्षिपति ।

(२०९) अनुग्रहोऽपि संभूतिस्तेषां चानुग्रहादरः ।
कृत्ये नियोगः शैवोक्तो नोत्पत्तिः कृत्यसिद्धये ॥

बहूनां हि तदानीं तुल्ययोग्यतयादरोऽनुग्राह्यमन्त्रमन्त्रेश्वरत्वेन युगपदनुग्रहो न त्वधिकारार्थमेवोत्पत्तिरित्युत्पत्तौ तावन्न दोषः, "नन्वधिकारो भविष्यति,, न, अत एवात्र शक्तिपातस्य स्वातन्त्र्यासिद्धेरदोषः ॥

अत्र परः ।

(२१०) नन्वनुग्रहतः शैवाज्जातास्तुल्यबलास्तु ते ।
प्रेर्यप्रेरकभावो हि तेषां तेन न युज्यते ॥

मन्त्रमन्त्रेश्वराणां परमेश्वरानुग्रहान्मुक्तात्मनामिव शिवसमानत्वमेव, इति

तेऽधिकारं प्रकुर्वन्ति शिवेच्छाविधिचोदिताः ।

इत्यादिश्रुतिविरोधः ॥

तं परिहरति

(२११) सर्वज्ञानोदयस्तुल्यस्त्वाधिपत्यं विशिष्यते ।
नाभिव्यक्तं हि तत् तादृक् तेषां यादृङ्महेश्वरः ॥

अत एव शिवेच्छाविधिचोदितत्वश्रुत्यन्यथानुपपत्त्या न तेषां मुक्तशिववत् क्रियाशक्त्यापि शिवसमत्वमभिव्यक्तमिति प्रतीयते, अपितु "सर्वज्ञज्ञानसंयुता,, इति श्रुतेर्ज्ञानशक्त्यैवेत्यविरोधः ॥

अपिच ।

(२१२) अधिकारो हि संस्कारस्तेषां शैवे विगीयते ।
यतः कृताधिकारास्ते व्रजन्ति शिवतुल्यताम् ॥

यतः परमेश्वरेणासावधिकारात्मकः संस्कारस्तेषां सावधिरेव विहितः, यत् श्रूयते,

"अनन्तोपरमे तेषां महतां चक्रवर्तिनाम् ।
विहितं सर्वकर्तृत्वं कारणं परमं पदम्,, ॥

इति, ततोऽपि न शिवसमानत्वम् ॥

अत्र मतान्तरमाह ।

(२१३) तुल्यत्वेऽप्यर्थनिष्पत्तिर्नान्यथेत्यपरे जगुः ।
शिष्या इव गुरोः शंभोस्ते तच्चित्तनियोगिनः ॥

"शिवतुल्येऽपि" मन्त्रमन्त्रेश्वराणां तदीयाधिकारकारित्वमिव शिष्याणां भविष्यतीति,, केचित्, तैस्तु दृष्टान्तेन साम्यमत्र चिन्त्यम्, शिष्याणां हि गुरुसाम्येऽपि तदीयनियोगाकरणात् प्रत्यवाययोग्यता, न तु तेषां शिवसमत्वं यतः ॥

प्राक् शरीरानभ्युपगमेनेश्वरस्य कारकत्वं प्रतिपादितम्, अधुना तत्प्रतिक्षेपेणाह ।

(२१४) इच्छामात्रेण देवेशः कृत्यकृन्न प्रयासतः ।
इच्छा च तस्य कृत्येषु न प्रतीघातमश्नुते ॥

मात्रग्रहणमवधारणार्थम्, इच्छयैवाव्याहतप्रसरया भगवतः कर्तृत्वं न शरीरकरणादिप्रयासेनेति तेषामभावोऽनुपयोगात् ॥

"ननु यः कर्ता नासौ शरीरादिप्रयासानपेक्षः, अव्याहतेच्छो वा, यथा देवदत्तादिः, कर्ता चेश्वरः, अतस्तथाभूत एव,, इत्यत्राप्याह ।

(२१५) प्रयासकरणात् पुंसामिच्छा व्याघातधर्मिणी ।
पशुत्वात् तच्च देवस्य निषिद्धं न्यायवर्त्मना ॥

सर्वज्ञत्वसर्वकर्तृत्वसद्भावेऽपि पुंसां मलावृतत्वात् कार्ये शरीराद्यपेक्षित्वमनीश्वरत्वं चेत्युक्तम्, ईश्वरस्य तु तदभावात् तयोरप्यभावः ॥

"नन्विच्छामात्रेण पुंसां कर्तृत्वमदृष्टम्,, इत्याह ।

(२१६) स्तोभादिकर्मसंसिद्धिरिच्छामात्रेण दृश्यते ।
पुंसां प्रकृष्टमन्त्रादिस्वभावाविद्धचेतसाम् ॥

सिद्धमन्त्राणां हि विषादिकार्यमिच्छामात्रेण पुरुषाणामपि दृश्यत एव ॥

एतदेव दर्शयति ।

(२१७) पशुर्बन्धनबन्धी स प्रभावातिशयाद्धि तत् ।
इच्छयैव करोतीशः कुर्यान्नेति किमद्भुतम् ॥

बन्धनानां विषादीनां बन्धः स्तोभादिः प्रागुक्तः, स यस्यास्ति स पशुः कार्यकारणयुक्तः प्रागुक्त एव, पुरुषो मन्त्रप्रभावातिशयादिच्छामात्रेण तं स्तोभादिकं करोतीतीष्यते, नत्वीश्वरस्तथाभूतप्रभावातिशय इत्याश्चर्यम् ॥

यदप्याहुः केचित्,

"नचानिमित्तया युक्तमुत्पत्तुं ह्रीश्वरेच्छया ।
यद्वा तस्य निमित्तं वस्त्वद्भुतानां भविष्यति,, ॥

इति, तत्राप्याह ।

(२१८) इच्छायाः कारकयामस्पृष्टाः केचित् प्रचक्षते ।
निमित्तं वस्तु मोक्षादि तज्ज्ञानं करणं त्विति ॥

मोक्षोत्पाद्यादिवस्तुयोग्यतैवेच्छायाः समुत्पादे निमित्तम्, अस्मदादौ तथैव सिद्धेः, करणं तद्विषयं कर्तुर्ज्ञानम्, इतीश्वरेऽपि तथैवोपपत्तेर्न किंचिदेतत् ॥

एकानेकविभेदोऽपि तस्या नाहेतुक इत्याह ।

(२१९) एककालविनिष्पाद्येष्वेकरूपेषु वस्तुषु ।
एकैवेच्छा तथानेका कालरूपविभेदिषु ॥

स्थितिसंरक्षणादिविषयाकारभेदाभ्यां स्थित्यादावपि कालभेदाभ्यामस्या भेदाभेदाविति नाहेतुकौ ॥

सा च क्रियाशक्तेर्नान्येत्याह ।

(२२०) वामादिकः क्रियाशक्तेर्भेदो यः सोऽपि गम्यते ।
इच्छायाः सर्वकृत्यानि तयैवेशः करोति यत् ॥

यतः सर्वकार्येष्वस्मदादीनामपीच्छैवाविनाभाविनी कारकतया सिद्धेत्युक्तं मध्यकाण्डे, ततः सैव क्रियाशक्तिर्वामादिभेदैर्भिन्ना भगवतः शास्त्रे प्रतिपादितेत्यवगन्तव्यम्, न ततोऽन्येति, तस्या असिद्धेः ॥

सा च निरवयवत्वात्मस्वरूपाव्यतिरेकादात्मरूपाया ज्ञानशक्तेरप्यभिन्नेति दृष्टान्तेन दर्शयति ।

(२२१) गुरुभिः कमलाश्लिष्टा यथैवार्कस्य दीधितिः ।
तत्प्रकाशं विकासं च करोतीति द्विधोच्यते ॥
तथैव शक्तिरेकैव संश्लेषादेव वस्तुषु ।
विज्ञप्तिं तत्क्रियां चैव करोतीति द्विधोच्यते ॥

यथा हि सवितुर्दीधितिः कमलेष्वाश्लिष्टा प्रबोधप्रकाशौ विदधती द्विधोच्यते, तथैव भगवतः शक्तिर्वस्तुषु प्रकाशविकासौ विदधतीति द्विविधा, इति कार्यभेदाद्भेदेन व्यपदिश्यते, न तु परमार्थतो भेदोऽस्याः स्यादिति ॥

तथैव ।

(२२२) ज्ञेयाधिष्ठेयनिष्पाद्यभेदादेकापि भिद्यते ।
वामादिभिरनेकैस्तु भेदैः शक्तिर्न मुख्यतः ॥

ज्ञानशक्तेर्ज्ञेयभेदेनैव क्रियाशक्तेः कार्यभेदेन च भेद इत्युक्तं पुरुषपरीक्षायाम्, ततश्च वामादिभेदोऽपि तस्याः कार्यभेदोपाधिको न मुख्यत इति ॥

येनैवमिच्छैव क्रियाशक्तिः ।

(२२३) प्रयासेन विनेशानः कृत्यकृत् तेन गीयते ।

तेन कारणेन स्वदेहस्पन्दादौ कुम्भकारादिरिवेश्वरोऽपि शरीरान्तरप्रयासानपेक्षया जगति कर्ता प्रोक्तो नान्यथेति ॥

अत्र परः ।

(२२४) इच्छामात्रात् करोतीति नन्विच्छा नास्य विद्यते ।

युज्यत एतदुक्तं यदीच्छास्य संभवेत्, सा तु मनोवृत्तित्वादस्य च कार्यकारणानभ्युपगमेन मनसोऽसंभवान्न संभवतीति ॥

एतत् प्रतिविपति ।

(२२५) शक्तेः प्रवृत्तिः कृत्येषु विशिष्टा प्रोक्तलक्षणा ।
व्यापारः कारणस्येच्छा तन्नियोगाय चोच्यते ॥

नेच्छा मनोवृत्तिः, अपितु कर्तुः क्रियाशक्तेः कार्याय प्रवृत्तिरिच्छा प्रोच्यते, सर्वव्यापारेषु पूर्वभावित्वेनास्याः सिद्धत्वादित्युक्तं यतः, शास्त्रेष्वपीश्वरस्य व्यापारतया व्यापारनियोगाय विद्येश्वरेषु चोच्यते, यदुक्तम्,

"तेऽधिकारं प्रकुर्वन्ति शिवेच्छाविधिचोदिताः,, ।

इति ॥

"कथं तर्हीच्छा मनोवृत्तिः सांख्यादिभिर्गीयते., इत्याह ।

(२२६) तादृग्व्यापारसंगीता शक्तिरिच्छा क्वचिन्मता ।

यथाहि, अध्यवसायादिना बुद्धिव्यापारेणोपोद्बलितत्वाज्ज्ञानशक्तिरेव बुद्धिबोध इत्युच्यते, नतु बुद्धिर्जडतया वस्तुतो बोधः संभवत्येवं क्रियाशक्तिरेवेच्छात्मिका मनोव्यापारेण मनोराज्याद्यवस्थासु सिद्धेनापूर्वनिर्माणात्मनाभिव्यज्यमानत्वान्मनोवृत्तिरिति क्वचित् सांख्यादावुच्यते, नतु परमार्थतस्तस्यापूर्वनिर्माणशक्तिरूपपद्यते, निर्माणस्येश्वररूपत्वेन जडेऽनुपपत्तेरिति ॥

अस्मिंस्तु शास्त्रे ।

(२२७) अर्थान्तरं विना कृत्यं कुर्वती च प्रगीयते ।

मनोलक्षणार्थान्तरं विनेश्वरस्य कार्यं कुर्वतीच्छा गीयते, सकलस्य तु मनोलक्षणार्थान्तरानपेक्षयेति च शब्दार्थः ॥

उपसंहरति ।

(२२८) एका सर्वार्थगा शक्तिर्भिन्ना चेच्छा न जातुचित् ।

एवं च ज्ञानक्रियात्मिका शक्तिरेकैव, नैवेच्छा ततोऽन्येति सिद्धम् ॥

"ननु कार्यभेदादिच्छायास्ततः शक्त्यन्तरत्वमस्तु,, "यद्वेष्यमाणानां प्रकाशरूपत्वेन सुखादिप्रकाशानामिव बोधात्मकत्वाज्ज्ञानरूपत्वमेव न क्रियाशक्तिरूपता., इत्याह ।

(२२९) शक्तावुक्तं यतोऽस्तीदं तेन नाधिककल्पना ।

क्रियाशक्तिसिद्धनिमित्तं यत् साधनमुक्तं तदेवेच्छायां यतोऽस्ति, तेन कारणेन न ततोऽधिका काचिदिच्छा, नापि ज्ञानरूपतेति, एतदुक्तं भवति, स्वदेहस्पन्दादिक्रियाहेतुत्वेन स्वसंवेदनात्मकसाधनसिद्धा क्रियाशक्तिरिच्छैव, वस्तुतश्च पुत्रादेर्ज्ञानशक्त्यवभासितस्य ममेदं स्यादित्यात्मसंबन्धितानिर्माणस्वभावत्वाच्च ज्ञानरूपा, अपितु क्रियाशक्तिरेवेति, तदिदमुक्तं मन्त्रवार्तिके, "शक्तस्य हि तन्मनसस्त्विच्छा ह्येषा क्रियाशक्तिरिति,, तदेवम्,

"इच्छामात्रेण देवेशः कृत्यकृच्च प्रथासतः,, ।

इति सिद्धम् ॥

"ननु सिद्धसाधनमेतत्,, इत्याह ।

(२३०) नचापि विमतिर्नास्ति सर्वस्यैषा प्रसिद्धितः ।

नहि मीमांसकबौद्धलौकायतिकानामेतत् सिद्धमिति न सिद्धसाधनम् ॥

तर्ह्यसिद्ध एवायं पक्ष इत्याह ।

(२३१) तथापि विगतक्षान्ति ग्राह्यः पक्षो यथागमम् ।

यद्यपि विषयतामयं पक्षो भवद्भिर्नीतः, तथापि विगतक्षान्ति, क्षान्तिकं कृत्वा, अस्मदुपदर्शितस्याच्च हेतोरत्यन्तं परीक्षां विधाय ग्राह्यो नोपरोधेनेति, यदुक्तम्,

"परीक्ष्याक्षान्तितो ग्राह्यं मद्वचो नतु गौरवात्,, ।

इति ॥

"ननु सिद्धसाधनमेतत्, इति सांख्याः,, योगिनां सत्त्वात्मनः कर्मजैश्वर्यस्य तैरभ्युपगमात्, यदुक्तम्,

"धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण,, ।

"ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।

मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः,, ॥

इति ॥

अत्राप्याह ।

(२३२) सर्वाधिपत्यमैश्वर्यं कर्माभावान्न धर्मजम् ।

अपास्तातिशयाच्छंभोस्तेन स्वेच्छाविधाय्यसौ ॥

अन्यदेव तद्योगिनां परिमितमैश्वर्यम्, कर्मजत्वात् तत् सयातिशययुक्तं च तैरिष्यते, अन्यदेव त्विदं सर्वार्थविषयमाद्यन्तरहितत्वेन प्रतिपादितत्वादकर्मजमिच्छामात्रकारकत्वेन प्रतिपादितम्, इति न सिद्धसाधनता ॥

"ननु ततोऽपि प्रकृष्टैश्वर्ययुक्तोऽन्यो भविष्यति., इत्याह ।

(२३३) स्वात्मैश्वर्यप्रभावेण तद्येनास्यातिशय्यते ।

महेश्वरः स एव स्यादयं नैवेश्वरस्तदा ॥

तर्हि स एव परमेश्वरोऽस्माभिरिष्यत इत्यदोषः ॥

नच ततोऽप्यन्यो भविष्यतीत्यनवस्थेत्याह ।

(२३४) परिमाणवदैश्वर्यं सर्वचातिशयान्वितम् ।

क्वचिच्चातिशयापास्तं यच्च तत् स महेश्वरः ॥

योऽतिशयान्वितः स संभवन् क्वचित् प्रकर्षपर्यन्तावस्थितिः, नत्वनवस्थायुक्तः, यथा परमाणुतो महान् महत्त्वातिशयान्वितः क्वचिदेव स्थितः परममहत्त्वान्तपरिमाणैः, अतिशयान्वितश्चायमैश्वर्यविशेष इति सोऽपि संभवन् क्वचित् प्रकर्षपर्यन्तावस्थितिः, यत्र तथाभूतः स एव परमेश्वरः, इति नानवस्था ॥

प्रकरणमुपसंहर्तुं प्रयोजनमस्यादावाह ।

(२३५) एवं सर्वोत्तमं शंभुं ज्ञात्वा सर्वफलप्रदम् ।
यदालोकयतः श्रेयः सद्यः सर्वं नचान्यथा ॥

एवमत्र प्रदर्शितसाधकबाधकप्रमाणसदसत्तानिश्चयपूर्वं प्रोक्तनयेन दर्शनान्तरप्रसिद्धेभ्यः प्रकृतिपुरुषादिभ्य ईश्वरेभ्यः सातिशयमीश्वरमत एव सर्वफलप्रदं ज्ञात्वा तमेव भावयतस्तत एव दीक्षाक्रमेणाविलम्बतः परं श्रेयो मुक्तिः सिद्धिश्च भवतीति प्रयोजनसिद्धिरित्युक्तमस्माभिरन्यत्र ॥

"प्रणमत शिवनाथं शाश्वतं शर्महेतोः
इतरविषयसेवादुर्ग्रहं प्रोज्झ्य यत्नात् ।
न स भवति भवेऽस्मिन् नापि भूतो न भावी
तदितरनुतितो यः शर्मयुक्तः पुमान् स्यात्" ॥

इति ॥

अधुनोपसंहरति ।

(२३६) इत्थं शर्वपरीक्षां तु पुंपरीक्षापुरःसराम् ।
चकार मृदुबुद्धीनां हितायातिस्फुटामिमाम् ॥
सद्यो ज्योतिःसमानोऽयं शिवेन गुरुसत्तमः ।
कृपयैवानुजग्राह ह्यग्रज्योतिर्गुणाकरः ॥

एवं च पूर्वनयेनेश्वरपरीक्षाक्षिप्तैव नरपरीक्षेति तत्प्रयोजनेनैव सप्रयोजनेति सिद्धम् ॥

नरेश्वरपरीक्षणेऽतिगहनत्वतो नैव यद्
गतिर्जगति गम्यते विततबुद्धिवेगेष्वपि ।
इदं परहितेच्छया त्वतनु रामकण्ठस्ततः
कुतर्कतमसां नुदं विहितवान् प्रकाशात् स्फुटम् ॥ :: ॥

इति श्रीनारायणकण्ठसूनुभट्टभट्टरामकण्ठकृतौ नरेश्वरपरीक्षाप्रकाशे परदर्शनप्रसिद्धेश्वरप्रतिक्षेपाख्यं तृतीयं काण्डम् ॥ :: ॥

॥ समाप्तश्चायं ग्रन्थः ॥ :: ॥ :: ॥ :: ॥

---

## ॥ अथ प्रसन्नराघवनामकनाटकस्य ॥

॥ पञ्चमोऽङ्कः ॥

ततः प्रविशतो गङ्गायमुने ।

गङ्गा । सखि कालिन्दि किमिति दुर्मनायसे ।

यमुना । भअवदि भाईरहि अत्थि कारणम् * ।

गङ्गा । कीदृशं तत् ।

यमुना । एक्कं दाव अत्थि मह भादा सुग्गीवोत्ति † ।

* भगवति भागीरथ्यस्ति कारणम् ।

† एकं तावत् । अस्ति मम भ्राता सुग्रीव इति ।

गङ्गा । सकौतुकमात्मगतम् । अये कथमस्याः कपिकुलोत्पन्नोऽपि भ्राता । विमृश्य । उपपन्नमिदमनयोः खल्वेक एवायं सविता प्रसविता । प्रकाशम् । अथ किं तस्य ।

यमुना । सोतिबलिट्ठेण दुट्ठवलीमुहेण वालिणामहेएण परिहूदो एक्कदुग्गमत्तसरणो कइपअपरिवारो चिट्ठति * ।

गङ्गा । नन्विमावपि भ्रातरौ तत् किमनयोरीदृशं वैरायितमित्यर्धोक्त एव । अथवा

एकामिषाभिलाषो हि बीजं वैरमहातरोः † ।

इति ख्यातमेतत् तत् किमनेन । द्वितीयमपि कारणं कथय तावत् ।

यमुना । कस्सिंपि दिअहे गहीअतवस्सा विअ मम्महवसन्ता दोवि तरुणा जटाहरा एक्का चक्कवाअत्थणी चन्दवयणा मं उत्तरिअ दक्खिणं चलिदुं उवक्कन्ता ‡ ॥

गङ्गा । ततस्ततः ।

यमुना । तदो अ तीए खणं विलम्बिअ पणमिअ मुउलिअकरकमलजुअलाए अहमेरिसं विण्णत्ता । अयि देवि दिणअरणन्दिणि पुणोवि णिअकुटुम्बस्स दंसणप्पसादं करेसुत्ति § ।

गङ्गा । तत् कथं सम्भावयसि ।

यमुना । गङ्गायाः कथं एवमेवम् ।

गङ्गा । असम्भावनीयमिदम् । तन्नूनमावर्तशतभ्रमितहृदया किमप्यलीकमनुभूतवती । विमृश्य । अथवा को जानाति विधेः संविधानवैदग्ध्यम् ।

यमुना । जइ संवुत्तो ता कहं भअवदीए ण गोअरो इमो वुत्तन्तो ‖ ।

गङ्गा । न किंचिदेतत् । मया हि ब्रह्मलोकादागतायाः सरस्वत्याः समागमसुखव्यग्रचित्तया स्थितं तदिहीयमदूरे सरयूस्तेन हि तन्मुखादेव निरूपयाव इति परिक्रामतः ।

प्रविश्य सरयूः । देव्यौ नमो वाम् ।

उभे । आत्यविलयमङ्गला भव ।

* सोऽतिबलिष्ठेन दुष्टवलीमुखेन वालिनामधेयेन परिभूत एकदुर्गमात्रशरणः कतिपयपरिवारस्तिष्ठति ।

† तिलोत्तमाभिलाषो हि यथा सुन्दोपसुन्दयोरित्यथवैतदर्थबोधकं किमप्यन्यदेव श्लोकोत्तरार्धमत्रापेक्षितं पूर्णश्लोकलेखनस्यैव कविसंप्रदायस्य बहुत्र दर्शनात् । परं मदुपलब्धपुस्तकत्रयेऽपि केवलं श्लोकपूर्वार्धस्यैवोपलभ्यमानत्वात्तदेवाहं व्यलिखम् ।

‡ कस्मिंश्चापि दिवसे गृहीततपस्याविव मन्मथवसन्तौ द्वावपि तरुणौ जटाधरौ एका चक्रवाकस्तनी चन्द्रवदना मामुत्तीर्य दक्षिणां चलितुमुपक्रान्ताः ।

§ ततश्च तया क्षणं विलम्ब्य प्रणम्य मुकुलितकरकमलयुगलयाहमीदृशं विज्ञप्ता । अयि देवि दिनकरनन्दिनि पुनरपि निजकुटुम्बस्य दर्शनप्रसादं कुरुष्वेति ।

‖ यदि संवृत्तस्तत् कथं भगवत्या न गोचरोऽयं वृत्तान्तः ।

गङ्गा । सरयूं हस्ते गृहीत्वा सखि कथं तापनिमग्नमङ्गकं ते ।

सरयूः । भगवति प्रतीपमाभाषसे । ननु लज्जापङ्कनिमज्जनमनुभवन्त्या मेऽर्धावलम्बनोऽयमङ्गसंताप इति ।

गङ्गा । स्पष्टं तावदावेदय ।

सरयूः ।

बहलगलितैः संतापोष्णैस्तटान्तविहारिभि-
र्दशरथपुरीपौरस्त्रीणां विलोचनवारिभिः ।
उपचयवतीं संतापोष्णां निजां दधती तनू-
मिह मुहुरहं मातर्लज्जां वहामि जहामि च ॥

गङ्गा । सातङ्कम् । किं पुनरासामश्रुवृष्टेः कारणम् ।

सरयूः । गङ्गायाः कर्णे एवमेवम् ।

गङ्गा । हा इन्दुमतीनन्दन हा सकललोकहृदयानन्दनचन्दन हा महाकोदण्डपण्डित हा आखण्डलप्रियसख हा निजतनयनिर्विशेषप्रीतिपरिपालितसकललोक हा रामभद्रैकजीवितेति मूर्च्छति ।

सरयूः । स्वगतम् । अस्यैव विलसितमेतत् ।

गङ्गा । हा महाराज दशरथेति मूर्च्छिता पतति ।

यमुना । अंशुकाञ्चलेन वीजयन्ती भगवति समस्ससिहि समस्ससिहि णं इमेहिं जेव्व गुणेहिं असोअणिज्जो सो राआ * ।

गङ्गा । सरयूं प्रति सखि तवैव न केवलमयं तापः सर्वजनसाधारणः खल्वसौ । तदेनं रामभद्रच्छत्रच्छाययापनोदयामः ।

सरयूः । निश्वस्य । भगवति न खल्वप्रोषितसलिलसेकः कमलकेदारः परिशुष्यति ।

गङ्गा । स्पष्टं तावत् कथय ।

सरयूः । अधरस्फुरणं नाटयति ।

गङ्गा । अलमलं कथं दावानलशोषितायां तरुशाखायां कुठारमारोपयितुमिच्छसि । अथवा कथय तावत् ।

सरयूः । स्वगतम् । अहो ।

न ज्ञातुं नाप्यनुज्ञातुं नेक्षितुं नाप्युपेक्षितुम् ।
स्वजनः † स्वजने जातं विपत्पातं समीहते ॥

प्रकाशम् । रामभद्रमभिषेक्तुं कृतमनोरथं दशरथमेत्य कैकेयी प्रथमं तावदिदमुक्तवती ।

इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् ।
यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥

गङ्गा । स्वगतम् । अनेनैव तावदकल्याणरूची सूचिता दुराशया । प्रकाशम् । चरमं च किम् ।

सरयूः ।

त्वया देयं यन् मे द्वयमभिहितं देहि तदिदं
वनं कौशल्येयो विशतु युवराजोऽस्तु भरतः ।

गङ्गा । सोद्वेगम् । ततः किं वृत्तम् ।

सरयूः ।

इतीदं कैकेय्या वचनमधिगम्याकुलमतेः
पितुः पादौ नत्वा मुदितहृदयोऽसौ वनमगात् ॥

गङ्गा । यमुने तदिदं यत् कथितवत्यसि । सविषादम् । हा रघुकुलकुटुम्बं निहतमिति ।

यमुना । भअवदि एक्कं किं रघुकुलकुटुम्बअं णं मिअमहेसिवणदेवदाओ परिहरिअ सअलो जेव्व जीअलोओ रामचन्दमुहचन्दविलोअणविहीणत्तणेण णिहदो * ।

सरयूः । एवमेतत् ।

प्रोषितवति रजनिकरे बन्धुतया न खलु कैरवाण्येव ।
म्लायन्ति किन्तु सहसा भुवनान्यपि तमसि मज्जन्ति ॥

गङ्गा । एवमेतत् परं सखि सरयु कथय तावत् कीदृशी वृत्तिः सीतालक्ष्मणयोर्वत्सरामभद्रे ।

सरयूः । तौ हि तस्य सदैव सन्निहितौ चन्द्रिकाप्रसादाविव चन्द्रमसः । अतो जानास्येव यादृशी चन्द्रिकाप्रसादयोरेव चन्द्रमसि ।

गङ्गा । स्वगतं सहर्षं कथं सहैव वनं गतावित्युक्तं भवति । प्रकाशम् । सखि जीवितास्मि तावदनेन वागमृतेन । क्षणमपि हि रामचन्द्रविरहमनुभवितुमसहा मे वत्सा जानकी ।

सरयूः । एवमेतत् । रामचन्द्रेण हीदमुक्ता जानकी ।

अम्बाः शुश्रूषमाणा मे शरदः कतिचिन् नय ।

इदमाकर्ण्य तथा मूर्च्छिता जानकी यथा स्वजनकरोपनीतशीतशीकरासारसिक्तापि न प्रबुद्धा ।

यमुना । ता उण कहं पबुद्धा † ।

सरयूः ।

वनं वनजपत्राक्षि समागच्छ सहैव वा ॥

इत्यनेन रामवचनामृतेनैव ।

गङ्गा । उचितमिदं जानकीस्नेहस्य ।

यमुना । अवि णाम रामलक्खणाणं वि कोवि संवादो संवुत्तो ‡

सरयूः । अथ किम् । इदमुक्तो हि रामचन्द्रेण लक्ष्मणः ।

* समाश्वसिहिसमाश्वसिहि नन्वेतैरेव गुणैरशोचनीयोऽसौ राजा ।

† सुजन इति वा पाठः ।

* भगवत्येकं किं रघुकुलकुटुम्बकं ननु मृगमहर्षिवनदेवताः परिहृत्य सकल एव जीवलोको रामचन्द्रमुखचन्द्रविलोकनविहीनत्वेन निहतः ।

† तत् पुनः कथं प्रबुद्धा ।

‡ अपि नाम रामलक्ष्मणयोरपि कोऽपि संवादः संवृत्तः ।

गमय वत्स निमील्य विलोचने
कतिचिदत्र निमेषसमाः समाः ।
अपिच मामिव शीलसुशीतलं
शुभरतं भरतं परिशीलय ॥

इदमुक्तं च लक्ष्मणेन । अये रघुनाथ ।

त्वया समं मे चत्वारि यामा एव युगान्यपि ।
चतुर्दश समाः स्यातुं विना मन्वन्तराणि मे ॥

अपिच ।

त्वया मम समेतस्य कल्पा अपि समासमाः ।
भवता विप्रयुक्तस्य कल्पकल्पः क्षणोऽपि मे ॥

गङ्गा । अपि नाम कौशल्ययापि किञ्चित् शिक्षितो रामभद्रः ।

सरयूः । अथ किम् । सा हि अयि वत्स रामभद्र सीतामित्यर्धोक्त एव बाष्परुद्धकण्ठीदमुक्तवती । अथवा वत्स लक्ष्मणे रक्षितरि को भवान् सीतासमीक्षणस्य । तदिदं तावदभ्यर्थयामि ।

इह मुग्धमुखे वत्स लक्ष्मणे दक्षिणो भव ।
अपि राज्योपभोगेभ्यो यस्य त्वं सहजप्रियः ॥

इदमुक्तं च रामभद्रेण । अयि मातर्निजजीवितेऽपि दक्षिणेन भवितव्यमित्यपि शिक्षणीयमेव ।

गङ्गा । तत् नूनं ततःप्रभृति सहजसौन्दर्यमेवाभरणं वत्सरामस्य ।

सरयूः । अन्यदप्येकं विमुञ्चन् सकलमाभरणजातमित्यमभ्यर्थितः कौशल्यया रामभद्रः ।

हस्तावलम्बदानाय सीतामाङ्गल्यसंपदः ।
इदं विमुञ्च मा वत्स राम रत्नाङ्गुलीयकम् ॥

इदमन्यच्च ते कथयामि धीरा समाकर्णय ।

गङ्गा । कथमेतावदाकर्णितवतीमपि मामधीरामाशङ्कसे ।

सरयूः ।

निकामं रामस्य प्रमुदितमुखाम्भोरुहरुचेर्जटावल्लीर्मल्लीमुकुलसदृशैर्बाष्पपृषतैः ।
निषिञ्चन् सौमित्रिः कथमपि वितेने खलु यदा
तदा जातं मातः करुणमयमेतत् जगदपि ॥

यमुना । अवि णाम तस्सिं समये सीदावि किवि सिक्खिदा बन्धुअणेण * ।

सरयूः अयि देवि विपरीतमालपसि ।

गहनविपिनवासोत्कण्ठया संप्रयातं
प्रियतममनुयान्त्या तत्क्षणं राजपुत्र्या ।
चरणकमलगुञ्जन्मञ्जुमञ्जीरशब्दैः
स्फुटतरमुपदिष्टा बान्धवाः साधु वृत्तम् ॥

इदं तु वृत्तम् ।

पुरः कान्तं यान्तं विपिनमनुयान्त्याः सरभसं
तदादौ सीतायाः किसलयनिभौ वीक्ष्य चरणौ ।
मुहुः शीतास्तप्ताः किमपि च मुहुर्बन्धुनयनैः
समं मुक्ता मुक्तासदृशरुचयो बाष्पकणिकाः ॥

गङ्गा । हर्षविषादयोर्विलसितमेतत् ।

सरयूः । इदं बन्धुजनेन शिक्षितो रामचन्द्रः ।

बाला विदेहतनया तरुणौ भवन्तौ
दिग् दक्षिणा च रजनीचरचक्रदुष्टा ।
तद् वत्स वत्सलतयेदमुदाहरामो
मा राम गच्छ नयदक्षिण दक्षिणाशाम् ॥

गङ्गा । ततस्ततः ।

सरयूः । ततस्तामेव दिशं प्रति ।

सुरमुरजगभीरधीरनादद्विगुणगुणध्वनिचापदत्तहस्तः ।
पुरजननयनैः क्षतं दधानः
कुवलयदाम जगाम रामभद्रः ॥

यमुना । को उण सो अवसरो सुरमुरअसद्दस्स * ।

गङ्गा । सखि न जानासि । गभीरं ध्वनद्भिः खलु सुरमुरजैः किमपि गभीरमेव ध्वनितम् । पुनः सविषादम् । हा दशरथ सकलगुणसंपदां भाजनं भूत्वापि कथमेकस्य भाजनं न जातोऽसि ।

यमुना । कहं उण सो राआ तुम्हेहिं पसंसीअदि जेण तारिसोऽवि तणओ तुणं विअ मुक्को † ।

सरयूः । शान्तं पापम् ।

नरेन्द्रः कैकेयीवचनपरिपाटीविगलितः
क्षणं मोहक्रोधप्रसरभरयोरन्तरचरः ।
सुतं चोरस्तो मणिमिव करस्थं न कृपणस्तृणानीव प्राणान् पुनरयममुञ्चद्दशरथः ॥

यमुना । अवि णाम भरदस्स णाणुमदमिदम् ‡ ।

सरयूः । अये भरतस्य मातुलगृहादागतस्य कैकेय्याश्च संवाद एवोत्तरं दास्यति ।

गङ्गा । कीदृशः पुनरसौ ।

सरयूः ।

---

* अपि नाम तस्मिन् समये सीतापि किमपि शिक्षिता बन्धुजनेन ।

* कः पुनः सोऽवसरः सुरमुरजशब्दस्य ।

† कथं पुनः स राजा युष्माभिः प्रशंस्यते येन तादृशोऽपि तनयस्तृणमिव मुक्तः ।

‡ अपि नाम भरतस्य नानुमतमिदम् ।

भ्रातस्तातः क्व यातः सुरपतिभवनं हा कुतः पुत्रशोकात्
कोऽसौपुत्रश्चतुर्णां त्वमवरजतया यस्य जातः किमस्य ।
प्राप्तोऽसौ काननान्तं किमिति नृपगिरा किं तथासौ बभाषे
मद्वाग्बद्धः फलं ते किमिह तव धराधीशता हा हतोऽस्मि ॥

गङ्गा । सहर्षम् । वत्स भरत भवसि रामानुजन्मा ।

सरयूः ।

रामे प्राप्ते वनान्ते कथमपि भरतश्चेतनां प्राप्य तातं
नीत्वा देवेन्द्रलोकं मुनिजनवचनादूर्ध्वदेहक्रियाभिः ।
भ्रातुः शोकाभितप्तः स्वजनपरिवृतः पालयामास नन्दि-
ग्रामे तिष्ठन्नयोध्यां रघुपतिपुनरागामिभोगापवीरः ॥

यमुना । तदोतदो * ।

सरयूः । अहमेतावदेव जानामि । ततः परं तद्वृत्तान्तनिरूपणाय निजजलकमलवनवासी कोऽपि कलहंसः प्रस्थापितो मया ।

प्रविश्य कलहंसः । देव्य इदं नमो वः ।

तिस्रः । अयि कमलावतंस कलहंस मङ्गलमन्दिरं भव ।

गङ्गा । अये कथय तावत् वत्सानां मे प्रथमतः प्रभृति पथि चरितानि ।

हंसः ।

विघ्नानिवानुसरतो विनिवार्य पौरा-
नग्रे स्वयं नय इवैष जगाम रामः ।
एनं विभूतिरिव सानु जगाम सीता
तां लक्ष्मणस्तु सुखलाभ इवानुगच्छत् ॥

गङ्गा । ततस्ततः ।

हंसः । ततः कियत्यपि दूरे पथिकलोकेनेदमुक्तस्ते वत्सवर्गः ।

पन्थाः समः सिकतिलो मृदुशाद्वला भू-
र्वेतस्वती सरिदियं शिशिरा न दूरे ।
अग्रे चकास्ति सरसी च कुमुद्वतीयं
कादम्बकूजितकरम्बितहंसनादा ॥

अन्यच्च ।

तरुरयमितः शीतच्छायः स्रवन्मधुशीकरः
सरिदियमितः स्वल्पस्वच्छप्रवाहमनोरमा † ।
इदमिदमितः स्निग्धामोदं मुहुर्मधुरध्वनन्-
मधुकरवधूभुग्धाभोगं वनं सरसीरुहाम् ॥

गङ्गा । अहो अध्वश्रमशमनानि पथिकजनवचनानि ।

यमुना । तदोतदो ‡ ।

हंसः । ततः प्रियतममनुगच्छन्ती जानकी ।

भीतं विलोक्य हरिणं करुणार्द्रचित्ता
पत्युर्निजेन पिदधे धनुरंशुकेन ।
केदारसीम्नि सदयं च यवप्ररोह-
मादाय साधु विदधे श्रवणावतंसम् ॥

अन्यच्च ।

तटभुवि सरसीनां सैकते निम्नगानां
परिसरमपहातुं चक्रवाकी प्रियस्य ।
क्षणमपि न समर्था लोलमालोकयन्ती
पथि जनकतनूजा प्राप हर्षं शुचं च ॥

गङ्गा । एवमनुकम्पनीयवत्सला मे जानकी । पुनः सस्नेहम् । अपि तावत् पथिकनीतिशीतलानि मे वत्सानां शीलानि ।

हंसः । कीदृशी पुनः पथिकनीतिः ।

गङ्गा ।

यावत् कर्णं तपति तपनस्तावदेव प्रयाणं
विश्रामश्च प्रसरति रवेरंशुजाले कराले ।
यात्रोद्योगः पुनरपि रवेर्लम्बमाने विमाने
यावन् मीलत्यथ कमलिनी तावदावासबन्धः ॥

हंसः । भगवत्यनवस्थितमिदं नित्यपथिकानाम् ।

गङ्गा । हंत कथं कठोरातपस्पर्शमपि जानन्ति जानकीललिताङ्गानि ।

हंसः । अलं कातरतया ।

अपि तपति पतङ्गे चण्डचण्डैर्मयूखैः
पथि जनकतनूजा नैव सन्तापमाप ।

गङ्गा । सकौतुकम् । कथमिव ।

हंसः ।

अपरिचितनिमेषालोकमालोकयन्ती
कुवलयदलदामश्याममङ्गं प्रियस्य ॥

गङ्गा । प्रियतमस्नेहशीलतया सीतया न केवलमात्मा वयमपि जीविताः ।

सरयूः । पालिताश्च ।

हंसः ।

अप्युच्चण्डैस्तपनकिरणैस्तापितायां पृथिव्या-
मप्यन्येषां कठिनवपुषां दुर्गमे मार्गसीम्नि ।
प्रेमार्द्रेण प्रगुणितधृतिश्चेतसा शीतशीतान्
मेने सीता प्रियतमपदैरङ्कितान् भूमिभागान् ॥

यमुना । अयि ताद दिणअर कहं णिअकुडुम्बिवि णिक्करुणोऽसि संवुत्तो * ।

* ततस्ततः ।

† मनोहरेत्यपि पठान्तरम् ।

‡ ततस्ततः ।

* अयि तात दिनकर कथं निजकुटुम्बेऽपि निष्करुणोऽपि संवृत्तः ।

सरयूः । अयि देवि वसुधे कथं निजसुतायामपि सीतायामेवं निर्दयासि संवृत्ता ।

गङ्गा । विहस्यालमनयोरुपालम्भनेन न खलु स्नेहानुगुणप्रवृत्तयो महाभूतवृत्तयः ।

हंसः ।

कान्तेनाथ प्रणयमधुरं किञ्चिदाचञ्चलेन
श्रान्ताश्रान्ता जनकतनया वल्कलस्याञ्चलेन ।
चक्रे वीतश्रमजलकणस्निग्धमुग्धाननश्रीः
श्रान्तःश्रान्तः स पुनरनया लोचनस्याञ्चलेन ॥

गङ्गा । अहो कमनीयता विनिमयस्य ।

यमुना । तदोतदो * ।

हंसः । ततः ।

प्रत्यासन्ने भवति निलये संप्रयाता पुरस्तात्
तूर्णं विप्रैः कतिपयपदैश्चापमादाय हस्तात् ।
श्रान्तं कान्तं नवकिसलयैः सानुजं वीजयन्ती
जाता सीता समुचितविधिप्रक्रियावैजयन्ती ॥

पुनः सकौतुकम् । इदमन्यच्च सरसपेशलं कथयामि ते ।

जनकतनयाहस्तन्यस्तैर्मुहुर्नवपल्लवैः
शिशिरमसृणस्तत्कालं यः समेति समीरणः ।
प्रशममुना खेदोद्भूतं जगाम कपोलयोः
सलिलमनयोः शोकोद्भूतं शशाम न नेत्रयोः ॥

अपिच ।

कृतः स्थानेस्थाने विहितवरिवस्यापरिकरः
सुमित्रापुत्रेण श्रमशमनशीलो रघुपतिः ।
असावेतेनापि क्षणविरहबाष्पाञ्चितदृशा
कृतालोकश्चक्रे गलितसकलायासशिशिरः ॥

सरयूः । कियतां पुनरन्हां परिवर्त्तेन रघुराष्ट्रमतिक्रान्तं वत्सैः

हंसः । अयि कथमजानती वर्तसे रघूणामाधिपत्यम् ।

एते हि स्वरसावनम्रनिखिलक्ष्मापालमौलिज्वलन्-
माणिक्यस्फुरदंशुमांसलपदप्रेङ्खन्नखज्योतिषः ।
दूरोन्मुक्तचतुःसमुद्रलहरीविक्षिप्तशुक्तिस्खलन्-
मुक्तापङ्क्तिविनिर्मितैकवलयं भूमण्डलं भुञ्जते ॥

उत्तरकोशलास्त्रिचतुरैरेवाहोभिरतिक्रान्ताः । अथ पुरमथनमौलिमालतीमालां मन्दाकिनीमचिरेण च कलिन्दगिरिकरिकपोलमदवारिधारां कालिन्दीमप्यतिक्रान्ताः ।

गङ्गा । यमुनां प्रति सखि तदिदं यत् कथितवत्यसि ।

तपनसुतया देव्या यद्वा भगीरथकन्यया
विपुलविपुलैर्वीचीहस्तैश्चिरादपि किं कृतम् ।
ललितललवलीभङ्गैरङ्गैर्वनं चलिता सती
जनकतनया पाणौ धृत्वा न यद् विनिवारिता ॥

गङ्गा । विहस्य सखि कथं परोक्ष इव समक्षेऽपि नितान्तमुपालम्भसे ।

यमुना । तदोतदो *

हंसः । ततश्च शबरशरदलितविन्ध्यकरिकुम्भतटीविमुक्तमुक्ताफलप्रकरतारकिततीरलतावितानपरिच्छदां शर्मदां नर्मदामतीत्याचिरेण चपलकर्णाञ्चलपरिमिलितमदकरिकपोलचलितसहचरसमागममुदितमधुकरवधूमधुरसरसकुसुमकेसरं गोदावरीपरिसरं प्रयाताः ।

यमुना । हद्धिहद्धि । तत्थ हि लङ्केसरभइणी क्खणेण पमत्ता सुप्पणहा णाम रक्खसी परिभमई † ।

हंसः । अतिप्रमत्तेति वक्तव्यम् । सा हि सौमित्रिशरदलितनिजनासिकारुधिरसीधुरसमास्वादितवती ।

गङ्गा । सातङ्कम् । तदाकर्ण्य किं प्रतिपन्नं जनस्थानवासिना निशाचरचक्रेण ।

हंसः । करकलितकरालकुन्तकरवालकार्मुकेण निशाचरचक्रेण रामं प्रति प्रचलितम् ।

गङ्गा । ततस्ततः ।

हंसः । ततश्चेदं विज्ञप्तः सौमित्रिणा रामभद्रः । आर्यायं मे ।

नक्तंचरेन्द्रभगिनीसुकुमारनासा-
निर्मुक्तरक्तलवलिप्तशितैकधारः ।
उत्कण्ठते कठिनराक्षसकण्ठजानां
पानाय कर्दमसृजामसृजां कृपाणः ॥

इदमुक्तं च रामभद्रेण वत्सास्त्येतत् किन्तु प्रकृतिभीरुः खल्वबलाजनस्तेन हि जानकीसनाथगर्भां पर्णशालामेव समुत्खातकरवालः पालयतु भवानयमहमचिरादित्यधोक्त एव निशाचरचक्रं प्रति प्रचलितः संमिलितश्च ।

गङ्गा । सत्रासम् । अनन्तरं किंवृत्तम् ।

हंसः ।

अथाहूतस्तादृक्समरजयसंरम्भरभस-
प्रसर्पद्गम्भीरध्वनिगरिमगर्जद्दशदिशम् ।
मुहूर्त्तात् सौमित्रिः ।

सरयूः । तत् किं रामेण ।

हंसः । नहिनहि ।

सरयूः । अयि देवि भागीरथि त्रायस्व मां नूनं निशाचरचक्रेणेति वक्ष्यति ।

* ततस्ततः

* ततस्ततः ।

† हा धिक् हा धिक् । तत्र हि लङ्केश्वरभगिनी क्षणेन प्रमत्ता शूर्पणखा नाम राक्षसी परिभ्रमति ।

हंसः* ।

विपिनचरनक्तंचरचमू-
वधक्रीडाकिञ्चिन्मुकुलितरुषा रामधनुषा ॥

सरयूः । दिष्ट्या जीवितास्मि । सेयं प्रथमदर्शिततीव्रातपा पीयूषवृष्टिः ।

यमुना । तदोतदो* ।

हंसः । ततः प्रमुदितमुनिजनशतसमुद्भूतसाधुवादश्रवणविनोदेन कतिचिदहानि नयन्ति स्म ।

अथाविरासीत् कुरुविन्दलोचनो
द्रुमान्तरे विद्रुमशृङ्गशोभितः ।
विभक्तमुक्तामयचित्रमण्डनो
मनोपहारी हरिणो हिरण्मयः ॥

गङ्गा । स्वगतं । नूनमयमनर्थाङ्कुरः । प्रकाशं ततस्ततः ।

हंसः ।

भ्रूवल्लीविजितमनोजचारुचाप-
श्चापश्रीजितयुवतीमनोरमभ्रूः ।
सीतायास्तमनु ससार लोचनान्तः
कान्तश्च स्फुरदसितोत्पलाभिरामः ॥

ततः ।

त्रासातुरेण हरिणेन सहैव तेन
दूरं प्रयाति हृदये जनकात्मजायाः ।
सौमित्रिराश्रमपदात् कृतचापपाणि-
र्द्राङ् निर्जगाम च विवेश च कोऽपि भिक्षुः ॥

गङ्गा । ततस्ततः ।

हंसः । ततः ।

इतो बाणं रामः क्षिपति हरिणे मुक्तकरुणः
सचापः सौमित्रिः स्वजनमनुयाति द्रुतमितः ।
इतः सीताभिक्षामुपनयति भिक्षोः करतले
त्रयं व्योम्नि प्रेङ्खन् युगपदहमालोकयमिदम् ॥

सरयूः । ततस्ततः ।

हंसः । ततः ।

कनकहरिणगात्रे बाणपातावलोका-
द्विमुखहृदयवृत्तिर्लोचने संनिमील्य ।
कथयितुमयि चेदं रामवृत्तान्तजातं
शरयु तव तटान्तं तूर्णमेवावतीर्णः ॥

तदनुजानीत मां देव्यः सलिलावगाहनाय श्रान्तो ऽस्मि ।

तिस्रः ।

विहरास्मिन् रमणीये शुचिपयसि स्मेरनीरजे सरसि ।
पुरतरुणीचरणारणन्मणिनूपुरकूजितोत्कुतुकः ॥

हंसः प्रणम्य निष्क्रान्तः ।

गङ्गा । सखि सरय्वनेन वृत्तान्तक्रमेण कातरं मे मनः ।

सरयूः । अलं कातरतया । नन्वनेन हि नूपुरोद्भेदेन स्मृतं मया यत् किल वनगमनोद्यतां जानकीमिदमुक्तवती करकलितनूपुरद्वया पतिव्रतासीमन्तिनीरत्नमरुन्धती ।

अधिचरणममू चमूरुनेत्रे
मृदुरणितौ मणिनूपुरौ विधेहि ।
अहरपि विरहं न यन्महिम्ना
हरिणदृशः सह वल्लभैर्लभन्ते ॥

कृतवती च तथा जानकी ।

गङ्गा । इदानीं किमपि निर्वृतास्मि । सत्यवादिनी हि मे सखी वसिष्ठगृहमेधिनी । तदागच्छतेमं वृत्तान्तं रघुकुलवत्सलाय सागराय निवेदयाम इति परिक्रामन्ति ।

गङ्गा । सविस्मयमहो प्रवाहवेगातिशयात् तत्क्षणादेव दूरमुपयाताः स्मो यदयमदूर एव गोदावरीसहचरः सागरः किमपि समालपन्नालोक्यते कल्लोलिनीकान्तः । ततः प्रविशति गोदावरीसहचरः सागरः ।

सागरः । ततस्ततः ।

सरयूः । कथमिहापि किमपि वृत्तान्तशेषः प्रस्तूयते ।

यमुना । अवि णाम तं जेव्व हविस्सदि जं किर हंसेण णावगअम्* ।

गोदावरी । ततः ।

रामोन्मुक्तैकबाणप्रणिहतहृदयः काञ्चनाङ्गः कुरङ्गः
सद्यो मारीचनामाऽजनि रजनिचरः सान्द्ररक्ताक्तवक्त्रः ।
भिक्षुः सोऽपि क्षणार्धेन् मणिखचितचलत्कुण्डलश्रेणिशोभावीचीखेलत्कपोलस्फुरितदशशिराः कुम्भकर्णाग्रजोऽभूत् ॥

गङ्गा । हा हतास्मि । विमृश्याथवास्ति तत् मणिनूपुरद्वयम् ।

सागरः । अपि नाम मम वधूटिका स्पृष्टा निशाचरेण ।

गोदावरी । न स्पृष्टा ।

सागरः । कथमिव ।

गोदावरी । तथाहि ।

रजनिचरकराग्रस्पर्शसंपातविघ्नं
रचयितुमनसूयाहस्तदत्ताङ्गरागाम् ।
बहलमनलपुञ्जः पिञ्जरज्योतिरुद्यन्
कुवलयदलशीतां संवृणोति स्म सीताम् ॥

सागरः । अहो अत्रिपत्न्यास्तपः प्रभावः ।

* ततस्ततः ।

* अपि नाम तदेव भविष्यति यत् किल हंसेन नावगतम् ।

गोदावरी । ततो वरुणमन्त्रचिन्तनाहूतनूतनबलाहकाञ्चलनिचुलितपाणिरस्पृशदेव ।

हा राम हा रमण हा जगदेकवीर
हा नाथ हा रघुपते किमुपेक्षसे माम् ।
इत्थं विदेहतनयां मुहुरालपन्ती
मादाय राक्षसपतिर्नभसा जगाम ॥

सरयूः । अयि भागीरथि कथमस्मदभागधेयादरुन्धतीवाचोऽपि मृषा भविष्यन्ति ।

गङ्गा । नहिनहि ।

सागरः । सविषादं ततः ।

गोदावरी । ततः शैलशिखराधिवासिना विहङ्गराजेन जटायुना पन्थानमवरुध्येदमुक्तो राक्षसेन्द्रः ।

आः पापिन् पश्यतो मे रघुतिलकवधूं चोरवृत्त्यापहर्तुं
सीतां शीतांशुलेखामिव गिरिशशिरःशायिनीमुद्यतोऽसि ।
एष छित्त्वा शिरांसि प्रखरनखमुखैर्दीप्तचूडामणीनि *
त्वामद्याहं गरुत्मानुरगमिव सुधाकाङ्क्षिणं संहरामि ॥

गङ्गा । स एष नूपुरप्रसादः ।

सागरः । सहर्षं ततस्ततः ।

गोदावरी ।

नखैस्तदीयैः कुलिशात् कठोरै-
र्भिन्दद्भिरङ्गानि निशाचरस्य ।
रथः स हेमाभरणो बभञ्जे
न जानकीलाभमनोरथोऽस्य ॥

सागरः । ततः ।

गोदावरी । ततश्च निशितनखनिस्त्रिंशनिर्घातभैरवे समरसंरम्भे संभ्रमकातरायां रावणैककरस्थितायां जानक्याम् ।

तस्याः क्वणत् किमपि नूपुर एक एव
क्रन्दन्निवातिकरुणं चरणात् पृथिव्याम् ।

गङ्गा । हा अधुना निराशाः स्मः ।

गोदावरी ।

आस्तिष्ठतिष्ठ निहतोऽसि खलेति जल्पन्
दूरात् जटायुरपि खड्गहतः पपात ॥

सागरः । हा वत्से जानक्यधुना नीतासि निशाचरेणेति मूर्च्छति ।

गङ्गा । उपसृत्यांशुकान्तेन वीजयन्ती अये रघुकुलवत्सल समाश्वसिहिसमाश्वसिहि ।

सागरः । कथमिह गङ्गापि ।

गङ्गा । यमुनासरय्वौ च ।

* दीप्तचूडामणीभिरिति पाठस्त्वपपाठः ।

सागरः । तन् मां मिलिताः सर्वा एव धारयतायमहं हतोऽस्मि शोकस्रोतसा ।

गङ्गा । अलमतिकातरतया । यतः ।

प्रायो दुरन्तपर्यन्ताः संपदोऽपि दुरात्मनाम् ।
भवन्ति हि सुखोदर्का विपदोऽपि महात्मनाम् ॥

सरयूः । सखि गोदावरि अपि जानासि नूपुरवृत्तान्तम् ।

गोदावरि । अथ किं कथितमेव वनदेवतया । तमादाय कोऽपि कपिः ऋष्यमूकसंमुखं गत इति ।

सागरः । रामभद्रस्य तु को वृत्तान्तः ।

गोदावरी । रामभद्रोऽपि सीताविरहविह्वलः सौमित्रिणा धार्यमाणस्तामेव दिशं प्रतस्थे ।

नेपथ्ये । सखि कालिन्दि वर्धसे ।

यमुना । का उण इमाइं सूईसलाआविद्धाइं मह णहाइं अलत्तअरसेण सिञ्चदि * ।

प्रविश्य तुङ्गभद्रा । जयतुजयतु नदीनाथः ।

सागरः । कथं पुनर्वर्धते कालिन्दी ।

तुङ्गभद्रा । भ्रातुः सुग्रीवस्य चक्रवर्तिपदलाभेन ।

यमुना । दाणिं चन्दणचण्डातपलिम्पन्तपासजुअला वट्टामि † ।

सागरः । कथं पुनर्वालिपालितापि कपिराज्यलक्ष्मीः सुग्रीवमनुसंक्रान्ता ।

तुङ्गभद्रा । कथमद्यापि वालिकथा ।

सागरः । कथमिव ।

तुङ्गभद्रा । ननु नूपुरप्रदानविश्वासितेन रामचन्द्रेणात्मानं सुग्रीवं च समर्पयता हनूमता तथा व्यवसितं यथा ।

सहेलं हत्वेनं हरिणमिव हैमं रघुपतिः
कपीनां साम्राज्ये प्रणतमभिषिञ्चन् रविसुतम् ।
अपि ध्वंसात् शत्रो‡र्नृपतिमपि चक्रे फलभुजा-
मपि प्रीतं चक्रे निजकुलगरिष्ठं दिनकरम् ॥

सागरः । ततः किं वृत्तम् ।

तुङ्गभद्रा । ततः सुग्रीवेणापि ।

परिम्लानां मालामिव ललितसौरभ्यरहिता-
मपि स्थानेस्थाने विचिनुत वधूटीं दिनमणेः ।
इति स्वेनैवोक्ताः कुमुदनलनीलाङ्गदमुखा
हनूमत्संयुक्ता दिशिदिशि नियुक्ताः कपिभटाः ॥

सागरः । इदानीमुज्जीवितोऽस्मि ।

* का पुनरिमानि सूचीशलाकाविद्धानि मम नखान्यलक्तकरसेन सिञ्चति ।

† इदानीं चन्दनचण्डातपलिप्यमानपार्श्वयुगला वर्ते ।

‡ पत्युरिति वा पाठः ।

गोदावरी । किं भवानेव नन्विदानीमखिलोऽपि जीवितो जनः ।

सागरः । एवमेतत् । सकलजनमनःसाधारणी हि समचन्द्रमाधुरी नन्विहैव पश्य ।

नेदीयसी हि सरयूस्तपनोद्भवेयं
भागीरथीयमुदयः सगरान् ममापि ।
इत्यन्वयाद्रघुकुले यदि पक्षपात-
स्तद् वत्सला किमपि वामपि चित्तवृत्तिः ॥

ऊर्ध्वमवलोक्य सविस्मयम् ।

विलासैर्दम्भोलेर्दलितगरुतः सर्वगिरयः
स चैको मैनाकः पयसि मम मग्नो निवसति ।
अये कोऽयं शैलः स्फुरदमितगव्यूतिमहिमा
हिमाद्रिर्विन्ध्यो वा लघुतरगतिर्लङ्घयति माम् ॥

तदागच्छत निरूपयामस्तावत् कोऽयमिति ॥ इति निष्क्रान्ताः सर्वे ॥

॥ पञ्चमोऽङ्कः ॥

## THE SA'HITYA-DARPAṆA,

OR

## MIRROR OF COMPOSITION.

*(Continued from page 184)*

TEXT.

No. 734 The Return *(parivrittih)* is the exchange of a thing for what is (1) equal, (2) lesser or (3) greater.

COMMENTARY.

*a.* For examples in their order :—

"The fawn-eyed lady gave a glance and took my heart, whilst I gave my heart but got the fever of love."

Here, in the first half there is an exchange for the like, and in the second half, for what is lesser.

*b.* "The old Jatáyuh, translated to heaven—wherefore should we lament him now, who, at the price of a decrepit body, bought a fame lustrous like the light of the moon?"

Here we have an exchange for what is greater.

TEXT.

No. 735. When with, or without a query, something is affirmed for the denial, expressed or understood, of something else similar to it, it is Special Mention *(parisankhyá)*.

COMMENTARY.

*a.* For examples in their order :—

"What is a lasting ornament here below?—fame, not a gem. What is to be practised?—good deed done by the great, not a crime. What is an eye unobstructed?—the intellect not the *corporal* eye. And who is there besides thee who knows to discriminate good and evil?"

Here, a gem &c., which are to be rejected *or denied as an ornament &c*, are mentioned.

*b* "What is ever to be practised?—virtue; what is to be earnestly sought?—the company of the good. Who is to be meditated upon?—the Lord Vishṇu; what is to be desired?—the supreme abode, *or final beatitude*."

Here what are to be rejected, *viz*, sin &c., are understood. In these two examples, *the declaration* is preceded by a query

*c.* When it is not preceded by a query, we have the following examples .—

"Devotion to God not to mammon; addiction to Scripture not to woman, the weapon of Love; regard for fame not for the body are often found in the great."

*d.* "His strength was for the purpose of quelling the fear of the oppressed, his great learning was for the sake of honouring the learned—not the wealth alone but the perfections too of that sovereign were for the sake of others."

*e.* When founded upon a Paronomasia, it is peculiarly striking; e g. "When that king, the conqueror of the world, was protecting the earth, the mixture of colours (or classes—वर्ण) was in painting, the want of the string (or merits—गुण) was in bows" &c.

TEXT.

No. 736. The Reply is when a question is inferred from an answer, or, the questions being given, when there is a number of answers, unlooked for.

COMMENTARY.

*a.* For example, *the following verses of* mine :—

"My mother-in-law has lost her sight, my husband is gone far away and I am a solitary girl, how canst thou stay here?" *

From *this is* understood a traveller having asked for lodging.

*b* "What is *most* odd?—the decree of destiny What is to be sought out?—a man appreciating merit. What is the source of bliss?—a good wife. What is hard to be won?—a wicked man."

This is distinct from the Special Mention, because, here, other things of a similar nature are not intended to be disowned, *or denied the respective predicates*. Nor is the first case of the present figure the same with

* The author probably means to represent the girl as tempting the traveller, as we infer from similar stanzas of such indirect import. The strikingness of this example, if there is any in it, as well as of that given in the *Kávya-prakáśa*, rests upon the indirect way in which the speaker, in either case, expresses his or her meaning, and not on [illegible] of the inference on our part of a query or reque[illegible] I do not see why it should be counted a figure at all. It is indeed strange to find the author of the *Kávya-prakáśa* admitting this figure of speech, when he is unwilling to recognise such a figure as the Cause *(hetu)*, that comes under the English Metonymy, and perceives no strikingness in such an example of it as 'The Spring, the *joy* of the *kokila*, has arrived'

the Inference (§ 711), since that is recognized only when what is inferred and the ground of inference, or the reason, are both mentioned,—*and here the query is not mentioned*. Nor is it Poetical Reason (§ 710), for the reply is not the source of the question.*

TEXT.

No 737. When according to the Maxim of the Stick and the Cake, a fact is concluded from another, it is held the Necessary Conclusion (arthápatti).

COMMENTARY.

*a*. The Maxim of the Stick and the Cake is one by which, a truth or fact being given, another truth or fact comes in through a necessary connection; for example, it being admitted that a mouse has eaten up a portion of a stick, the fact of its having eaten the cake, connected therewith, comes in as a matter of course.

*b*. The figure has two varieties, inasmuch as from a fact connected with the subject-matter, there comes in one unconnected with it, or *vice versâ*.

*c*. For examples in their order:—

"Lo! the Necklace rolls on the round breasts of the fawn-eyed ladies When such is the condition even of the pearls, free *(muktá) as they are called*, of what consequence are we, the slaves of love? '

*d*. " Forsaking his native fortitude, he bewailed, with his voice choked by weeping Even iron, heated to excess, becomes soft, why speak we then of mortals *melting under affliction?* "

*e* In the present ornament, there is a peculiar strikingness when the Necessary Connection is founded upon a Paronomasia, as in the example " Lo ! the Neklace," &c. This figure is not identical with the Inference (§ 711.), since the Necessary Connection has not the nature of a mere Relation, *established by experience*. †

TEXT.

No. 738. The Alternative is an ingenious opposition of two things of equal probability.

COMMENTARY.

*a*. For example; " Bend ye your heads or your bows; make our authority or your bow-strings the ornaments of your ears, *i. e. yield to our authority or draw your bows*."‡

Here the bending of the heads and that of the bows are opposed to each other, being respectively marks of peace and war which it is impossible to resort to at the same time And this opposition terminates in the having recourse to one of the alternatives. The facts are equally probable, inasmuch as the bending of the bows and that of the heads are alike looked for *by the speaker*, through a pride of prowess. The ingenuity of the speech consists in its implying a comparison; * so also in the sentence 'Make our authority or your bow-strings the ornaments of your ears.' Similarly in the sentence " May the eyes or the body of Vishnu effect (*kurutám*) the cure of your worldly distresses," the ingenuity consists in the use of the Paronomasia *in 'kurutám' which, in one voice, is singular, and in another, dual. In the sentence* ' Let wealth acquired be given away to a Divinity or a Brahamán, there is no ornament, because of the absence of ingenuity.

TEXT.

No 739. The Conjunction is (1) when notwithstanding the existence of one cause sufficient to bring about an effect, there are represented others producing the same, according to the Maxim of the Threshing-floor and the Pigeons , or (2) when two qualities or actions, or a quality and an action are simultaneously produced.

COMMENTARY.

*a*. For example, *take the following stanza of* mine .— "Thou wast, O gentle Zephyr, begotten by the Mountain of the Sandal; pre-eminent art thou in the world in mild complaisance ( or southernness—*dákshinya*), and intimate art thou with the holy waters of Godávarí—if thou, alas! even thou dost burn my whole frame like a fierce conflagration, what shall I say to the black *kokila*, savage and intoxicated as he is? "

Here, notwithstanding the existence of one cause, *viz*, the circumstance of being begotten by the Mountain of the Sandal, for *the effect of* burning, other causes such as the circumstance of coming from the South &c, are mentioned. All these causes being good things (since they are a source of delight to all, excepting the separated lover), we have in the above example a Combination of Good Things. In the fourth line of the same stanza, wherein the bad things such as madness &c, are joined together, we have a Combination of Bad Things.

*b*. To exemplify the Combination of Good and Bad Things.

"The moon dimmed by the day, a lovely woman whose youth has departed, a lake bereft of its lotuses, a fair form with an unlettered tongue, a master devoted to Mammon, a good man in perpetual misery, a wicked person seated in the court of a king—these seven are sore afflictions to my heart."

* The Kávya-prakása, whom the present work literally follows here, has, as it seems to me, failed to elucidate the distinction between the two figures. The following is the proper explanation In the Poetical Reason, an epithet, a clause or a whole sentence is used *by the poet as implying a reason or ground for an assertion or representation made by himself*; whilst in the present figure the *whole* of what has been said by the poet serves as a reason for the *reader* in inferring a query supposed by the poet. The difference from the inference too is not rightly marked.

† We have here the recognition of necessary, or intuitive, truths, as contradistinguished from those established by experience.

‡ So Satan exhorts the fallen angels—'Awake, arise, or be for ever fallen.'

* The sentence is obscure and the scholiast's interpretation of it is still more so.

With respect to this example, some say that there is here the Combination of Good and Bad Things, inasmuch as the moon &c, are good and a wicked man is bad. Others, however, declare the same characteristic to rest upon the circumstance of the moon being by nature fair, and the dimness, *with which it is associated*, being foul. For, *they contend justly*, the strikingness of the example rests upon this peculiar way of pointing to the impropriety of *such foul states as* dimness &c, coming upon such good things as the moon &c. Besides, all the seven being summed up as afflictions by the sentence—'These seven are sore afflictions to my heart,' the clause 'a wicked person seated in the court of a king' bears the character of a fault, because of its violating the uniformity *of the representation* (see Chap. VII § 575, bb), in each of the other instances the subject, *and not the predicate*, being a good person or thing

*c.* In the present ornament, all the causes are jointly introduced just as pigeons alight together upon a threshing-floor; whilst in the figure Convenience, notwithstanding the existence of a cause sufficient for the production of an effect, another cause is represented as operating BY CHANCE.

*d.* "No sooner had thy eyes, youthful lady, become red than the face of thy beloved became gloomy; no sooner, fair friend, hadst thou bent down thy head than the fire of love blazed up in his heart"

Here, in the first half there is a simultaneity of Qualities, in the second, that of Actions.

*e.* When a Quality and Action are simultaneous, take the following example:—

"No sooner, king of kings, had thy eyes, those fair brethren to the white lily, become, on a sudden, dismal towards thy foemen, than the fierce glances of *fell* Adversity distinctly fell on their frames."

*f* We also see this figure respecting one and the same subject, as in "He brandishes his sword and diffuses his glory."* It is not an instance of the Illuminator, (see § 696), since these varieties of the Conjunction implying the simultaneity of quality and action, are, as a rule, † founded upon a Hyperbole consisting in the inversion of the necessary sequence of a cause and an effect; whilst the Illuminator has not for its foundation a Hyperbole.

TEXT

No. 740. The Convenience is when what is to be effected becomes easy through the accidental operation of another agency.

COMMENTARY.

*a.* For example:—

"As I was about to fall at her feet to quell her indignation, happily, for my good, rose the roar of the clouds."

TEXT.

No. 740 *a.* The Rivalry *(pratyaníka)* is when somebody, unable to avenge himself on his enemy, is *represented as* doing harm to what has a connection with him, which only proves his superiority *

COMMENTARY.

*a* 'His'—i e. the enemy's.—For example the following couplet of mine.—

"'She of the slender waist has vanquished my waist with hers'—so thinking, the lion breaks the protuberances of the elephant's head that resemble the jar-like breasts of the lady."

TEXT.

No 741. When things to which a comparison is generally made are (1) themselves turned into objects of comparison, or (2) declared to be useless, it is termed the Converse *(pratípa)*.

COMMENTARY.

*a.* For examples in their order:—

"The blue lotus, which was like thy eyes in loveliness, is *now* sunk in water" &c. (see §710. *a*)

*b.* "When there is that face, all discourse of the moon is closed; alas! for gold, when there is that radiance; if there are those eyes, the blue lotuses are lost; that smile existing, what is nectar; fie! to *proud* Cupid's bow, if there are those eye-brows—nay why talk we so much when it is true that the Maker's rule of creation is opposed to superfluities."

Here the radiance of the moon &c., being eclipsed by that of the face &c, the former are rendered useless.

TEXT.

No. 742. When the pre-eminence of an object, greatly excelling *in some quality*, being at first declared, another is compared to it, it too is termed the Converse."

COMMENTARY.

*a.* For example:—

"Be not proud, *O destructive* Poison, to think that thou art the chief of direful things. Are there not in this world the words of the wicked as malign as thyself?"

* Ceaser made himself the subject of this variety of the figure when he wrote "I came, I saw, I conquered;" which Shakespear has associated with the following humorous instance of his own, illustrating the figure in a series:—

"—For your brother and my sister no sooner met, but they looked; no sooner looked but they loved, no sooner loved, but they sighed, no sooner sighed, but they asked one another the reason, no sooner knew the reason, but they sought the remedy:" *As You Like It*, Act V, Scene II.

† Here in the original, instead of समुच्चयप्रकारानियमेन, as read in Roer's edition, read समुच्चयप्रकारा नियमेन, though my own MS. sanctions the former by inserting the mark ऽ of a rejected अ.

* Roer erringly blends this with the foregoing Commentary.

In the first line *of the stanza, i e in the clause 'Thou art the chief of direful things,'* the pre-eminence of the object is declared, *though in evilness.* When it is not declared, we have not this ornament; as in such a sentence as 'Like Brahmá speaks the Bráhman.'

TEXT

No 744. The Lost *(mílita)* is when something is spoken of as concealed in another of a like quality.

COMMENTARY.

*a* The thing of a like quality may be either inherent or borrowed

*b* For examples in their order:—

"Saraswatí saw not the mark on Vishṇu's bosom of the musk that had perfumed Lakshmí's (her rival's) breasts —lost as it was in his lustre that shone like the dark-blue lotus"

Here, the dark-blue lustre is inherent in the person of the Divinity.

*c.* "In that *city* the faces of fair women, reddened, as they ever were, with the ray of the ruby ear-ring, excited no mistrust, even when glowing in anger, in the hearts of the youthful lovers."

Here, the redness of the ruby ear-ring is borrowed in the face

TEXT.

No. 745 The Sameness is when something in question is spoken of as having become identical with, or undistinguishable from, something else, through a likeness of properties.

COMMENTARY

*a.* For example:—

"Fair women resorting to their beloved, went securely, undistinguished in the moon-light—their tresses covered with jasmines and their bodies anointed with bright sandal"

*b* In the Lost we have the eclipse of an object of an inferior quality by one of a superior quality, whilst in the present figure there is an absence of discrimination on account of both the objects possessing like properties

TEXT.

No 746 The Borrower *(tadguna)* is when an object is represented as quitting its own quality and assuming an excellent one

COMMENTARY.

*a* For example:—

"He spoke and the gleams of his radiant teeth whitened those honey-lickers—*the black-bees*—that hovered round that *blooming* lotus disguised as his face"

In the Lost, something in question is covered over by another, whilst in this figure, the quality of another is recognized as superinduced upon it.

TEXT.

No. 747. The Non-borrower is when something (in question) does not assume the quality of another, though there is a reason *for it*

COMMENTARY

*a.* For example:—

"How is it alas! that, seated in my heart glowing with ardent love, thou, though white with goodness, dost not reflect the glow?"*

*b* Or for example:—

"White are the waters of Gangá and black are those of Yamuná—dipping in both, O royal swan, thy whiteness is the same—it increases not, nor does it decrease."

In the former *example,* the beloved person, spoken of as 'white with goodness,' does not glow † *with answering love,* though it is proper that he should do so, having come in contact with an excessively glowing heart ‡ In the latter example, though there is an Indirect description (see §706), *and the swan, therefore, absolutely speaking, is not the proper subject of the description,* yet it is a thing in question, in comparison with Gangá and Yamuná, *which are still more remote from the real subject, viz, a person of a steady character.* § The swan, in spite of its contact with Gangá and Yamuná, takes not the colour of either.

*c.* This figure is distinct from the Peculiar Allegation (see §717), being founded upon the peculiarly striking circumstance of not assuming a quality, *or colour*; and it is different from the Incongruity (§720), because a distinct colour is not said to be produced.

TEXT

No. 748. When a delicate circumstance, indicated by (1) some appearance or (2) gesture, is intimated by any hint, it is termed the Subtle *(súkshma).*

COMMENTARY

*a.* 'Delicate'—i. e. not to be understood by one of a dull apprehension.

*b.* Of the two cases, that of Appearance; as:—

"Some female friend, observing the saffron ointment on the lady's neck divided by the continuous flow of heat-drops oozing from her face, drew, with a smile, the figure of a sword in her hand to intimate her masculineness."

---

* This is not a literal rendering of the original stanza, in which the figure rests upon the use of the word *rága* which means both 'love' and 'redness.'

† *Lit.* Does not become red or affectionate.

‡ Lit Excessively red or affectionate heart

§ This remark is with reference to the qualification, bracketed in the translation of the Text, which our author intends to be supplied from Text No 745. The qualification however seems needless and is virtually annulled by the first example of the present figure given in the *Kávya-prakaśa.* Our author indeed modifies the example *(see §a)* to reconcile it to the qualification, though he forgot it while illustrating the foregoing figure, for the black bees there spoken of are certainly not things in question.

Here the masculine action of a woman, indicated by the division of the saffron, is intimated by another, by drawing in her hand the figure of a sword, which is the token of a man.

*c.* The case of Gesture, as —

"Perceiving that her lover had his mind *anxious* about the time of assignation, the quick-witted dame closed the lotus-flower with which she was playing—whilst her laughing eye conveyed to it the import"

Here, the time of meeting which the lover inquired for by straining his eye-brows &c, is intimated by the close of the lotus which takes place at night.

TEXT.

No 749. The Dissembler *(vyájokti)* is the artful concealment of a thing, though discovered

COMMENTARY

*a* For example :—

'May Śiva preserve you!—that Deity who—as the Mountain-king joined his daughter's hand with his, in wedlock—thrilled by the touch and troubled by the distraction of his attention from the various ceremonials of marriage, cried out 'Oh! how cold are the hands of the Mountain of Snow,' and was beheld with a smile by the troops of the Divine Mothers standing in a circle in the inner apartment of Himálaya"

*b* It is not the first Concealment (see § 683), as the object is not mentioned by the person who conceals it. Its difference from the second Concealment has been shown on the occasion of speaking of that ornament.

TEXT.

No 750. The Description of Nature *(swabhávokti)* is the description of such peculiar action or appearance of an object as is not easily perceived

COMMENTARY.

*a.* 'Not easily perceived'—*i e.* perceived by the poet alone.—'An object'—such as a boy or the like.—'Peculiar action or appearance'—*i. e* such as characteristically belong to the object.

*b.* Take the following example of mine :—

"Lo! the angry hyena, with red and swollen eyes, scaring away the animals all around with his howling roar, traverses from forest to forest—behold, he lashes the earth repeatedly with his tail, rests upon it *for a moment* with his *hind* feet, then on a sudden shrinking into himself, he springs with fierce velocity in the air"

TEXT.

No. 751. When (1) a wonderful object, * or (2) something past or future, is represented as if it were present, it is termed the Vision (*bhávika*).

COMMENTARY.

*a.* For example :—

"Victorious is that prince of ascetics—Agastya of the mighty soul—who, in the hollow of one of his hands, saw the divine Fish and Tortoise (incarnations of Vishnu), *as he drank up the ocean in one handful of water*"

*b* Or for example :—

"*Methinks* I see thy eyes with the black collyrium that was there; I *seem to* perceive thy form with that profusion of ornaments that is yet to adorn it"

*c* This figure is not one with the Merit named Perspecuity (see Chap. VII, 611), for the latter does not cause a thing past or future* to seem as if it were present Nor is it the Marvellous flavour (see Chap. III § 37), for it occasions no wonder † Nor is it the ornament of Hyperbole, because it implies no introsusception (see § 693) Nor is it the Mistaker, for what is past or future is mentioned as past or future. Nor is it the Description of Nature, for this consists in a faithful representation of the nice characteristics of a natural object, whilst the present figure rests upon the peculiarly remarkable circumstance of an object (*really past or future*) seeming to be present If, however, in the description of the nature of an object, the above peculiarity does occur, then there is a Commixture of the two *figures*.

*d* "Who is he that, without an umbrella, seems as if he were surrounded with white umbrellas; who is he that, without a *chámara*, is ever fanned with the *chámara* of *flickering* graces?"

There is not the present figure in the above example, inasmuch as what appears in itself to be present is here described. As the figure in question consists in *an object's* seeming to be present THROUGH the description, ‡ it has its proper place there where something not actually seeming to be present is so represented; as in the example '*Methinks* I see thy eyes with the black collyrium that was there' &c

TEXT

No 752 The description of super-mundane prosperity is termed the Exalted, or an action of one that is great, *represented* collaterally to the subject in hand

* This variety is not recognized in the *Kávya-prakáśa,* being our author's own invention, and an unreasonable one too, for it is either included in the second variety or has no meaning at all.

* Or a wonderful object'—adds the Commentator

† Read अहेतुत्वात् for हेतुत्वात् in Roer's edition of the text It seems odd to speak of the representation of a wonderful object causing no wonder

‡ Cancel, here the stop (।) after स्वरूपत्वात् in Roer's edition of the text. The translation is according to the reading of my MS *viz.* यत् पुनरप्रत्यक्षायमाणस्यैव वर्णने प्रत्यक्षायमाणत्वं &c which, though the word पुनः seems superfluous, cannot but be preferred to Roer's reading, *viz* यत् पुनः प्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं &c., which is simply unintelligible, and makes a distinction without a difference. The commentator seems indeed to support it and toils hard to make out a sense, but to no purpose.

COMMENTARY

*a* For examples in their order.—

"There, the pleasure-gardens are fed by the waters oozing from the roofs of the lunar stone (*śaśánkopala*) by the fall of moon-light—roofs that leave the sphere of the clouds beneath"

*b.* "Used to the slumber of blessedness after the consummation of a cosmic cycle, the Lord sleeps here (on the ocean), having destroyed the worlds—hymned by the First Maker (Brahmá) seated on the lotus that has risen from His navel"

TEXT

No 753 When (1) a Flavour (chap III, §32), or (2) an Incomplete Flavour (chap. III, §245), or (3) Semblances thereof (§247), or (4) the Quelling of a sentiment (§249 *a*) are reduced to a subordinate condition, then they become Ornaments and are respectively termed the Impassioned *(rasavat)*, the Lovely *(preyah)*, the Impetuous *(úrjaswi)* and the Allayment (samáhita) *

COMMENTARY

*a.* 'Semblances thereof'—*i e.* the semblance of Flavour and Incomplete Flavour Of these *four kinds of embellishment*, the *Rasavat* (Impassioned) is so called from the association of *rasa*, Flavour, or passion

*b* For example—"This is that hand" &c (see §266 *b*)

Here, the erotic is subordinate to the pathetic So also of other Flavours.

*c.* The *Preyah* (Lovely) is *so named* from being loved by the best *of critics* For example, the following stanza of mine:

"With eyes half-closed, in which the eye-balls were languid and motionless, with her soft creeper-like arms gently loosened as they clasped my neck, with her round cheeks suffused with heat-drops—that fair one as I remember ever and anon, my heart obtains no tranquillity."

Here 'Love in union' (see chap III, §223) is subordinate to the sentiment named Reminiscence or Recollection (§190), and this again to 'love in separation' (§212.)

*d.* The *Úrjaswi* (Impetuous) is so designated from its implying *úrjas* or impetuosity, in doing an improper deed For example:—

"The savages of the forests, *now* betaking themselves to all the charming arts—*singing, dancing &c.*—enjoy thy foemen's ladies, having abandoned their own consorts."

Here the Semblance of the Erotic is subordinate to the sentiment of Love having a king for its object. So of the Semblance of an Incomplete Flavour.

* These four figures have quite different definitions in the *Kávyádarśa* of Dandin and the *samáhita* there is what our author has denominated *samádhi*. The *Kávya-prakáśa* does not recognize these ornaments nor the succeeding three.

*e* 'Allayment' denotes 'giving up', or rather, '*quelling*'—For example.—

"That pride of thy foemen which perpetually manifested itself in continuous blandishments of the sword, in frowns, in threats and in shouts of defiance, is gone in a moment—we know not where—at the very sight of thee" *

Here the quelling of the sentiment named Pride is subordinate to the sentiment of Love having for its object a king

TEXT

No 754 And when there is an 'excitement' of a sentiment and a 'conjunction' and a 'commixture' of sentiments (see chap III §249) *in a subordinate condition*, they are entitled the same

COMMENTARY

*a* 'Entitled the same' *i. e* the ornaments are named the Excitement of a Sentiment, the Conjunction of Sentiments, and the Commixture of Sentiments. For examples in their order:—

*b* "Busy as they were in their carousal in company of their friends, those foemen of thine were reduced to a miserable condition, having somehow heard thy name"

Here Terror &c., *the sentiments excited*, are subordinate to the sentiment of Love having a king for its object

*c* "Longing for union with him who was her lord in her former birth, but modestly *seated* by the side of her female friend—may Párvatí ever preserve us!"

Here the conjunction of Longing and Modesty is subordinate to the sentiment of Love having a divinity for its object

*d.* "'O we may be seen Move off thou wicked man. Why am I in a hurry? Nay I am a maiden. Do thou give me the support of thy arm. Alas! alas! for this transgression *of the bounds of modesty* Where dost thou go?'—thus—bearing fruits and tender leaves upon *which she lives*—the daughter of thy foeman *now* abiding in a forest, speaks to somebody, O thou *victorious* monarch of the earth"

Here the Commixture of Apprehension, Resentment, † Equanimity, Recollection, Weariness, Depression, Awaking ‡ and Longing is subordinate to the sentiment of Love having a king for its object.

* Read तवेत्तणो च्चणात् for तवेत्तणोच्चणात् in Roer's edition of the text.

† असूया in the original, which means 'envy' or 'malice' (see §196), but अमर्ष ('resentment' or 'indignation') incomprehensively rendered by Dr Ballantyne into 'impatience of opposition' (see §184), is evidently the sentiment described here.

‡ The Commentator observes, with reference to the example, that excessive fatigue had brought a transient slumber on the maiden who, waking, regrets that she had passed beyond the bounds of feminine modesty by leaning upon the arm of a man.

With respect to these *ornaments, viz. the Impassioned &c.* some people say—'What subserve Flavour &c by means of embellishing the form of sense or sound are alone ornaments But Flavour &c., being what are subserved by sense and sound, they cannot properly be ornaments.' Others however affirm that the designation of Ornament given to such representations, merely because of their subserving Flavour &c, is tropical and is to be assented to, in compliance with ancient custom Others assert that, strictly speaking, an ornament, such as a Metaphor or the like, is what simply subserves Flavour &c, and the circumstance of its embellishing the sense &c. is *of no importance*, being analogous to the nipple attached to the neck of a she-goat, *which serves no end.* But those who have thoroughly considered the matter are of opinion that a Flavour or the like which has become subordinate and which is itself subserved by word and sense that suggest it, properly obtains the denomination of Ornament, subserving, as it does, the Flavour or the like that is principal, through embellishing the words and the sense *that suggest the latter.* In the Modal Metaphor (see § 703), it is the behaviour merely of a lover or the like that constitutes the ornament, not the Relish *that is derivable from the representation,* because, *being itself ultimate,* it wants the said condition *of assisting a principal Flavour through ornamenting the words and sense suggestive thereof* Hence it is that the author of the 'Dhwani' has declared—'In that piece of poetry where a Flavour or the like is subordinate to another Flavour or a sense that is principal, the *former* Flavour or the like, is, in my opinion, an Ornament.' If the character of an ornament should be constituted by the circumstance of merely subserving the Flavour or the like, then it might be claimed even by plain or direct expressions or ideas, *and there are such capable of exciting poetical relish* Similarly is refuted the opinion of those that affirm that the ornaments Impassioned &c. are, when the Flavour or the like is principal, and that when it is subordinate there is the second ornament named Exalted.

TEXT

No 755. If any of these very ornaments *(that we have treated of in this chapter)* are united together, then there arise two distinct ornaments, *viz.* the Conjunction and the Commixture

COMMENTARY

*a.* As material ornaments, when united together, obtain a distinct beauty, and are consequently counted as one distinct ornament, so the poetical embellishments that have been defined, when united together, become distinct ornaments and are designated the Conjunction and the Commixture. Of these—

TEXT.

No 756 The existence of these independently of each other is termed the Conjunction.

COMMENTARY

*a* 'Of these' *i e* of ornaments of word and those of sense.—For example :—

देवः पायादपायाद्वः स्मेरेन्दीवरलोचनः ।
संसारध्वान्तविध्वंसहंसः कंसनिसूदनः ॥

(May Kansa's Destroyer—the Deity of the smiling lotus-eyes—preserve us from distruction—the Glorious Sun in annihilating the darkness of the world.)

We have a Rhyme in *páyádapáyát* and an Alliteration in the line beginning *sansára* ; so there is the Conjunction of two ornaments of word. In the second quarter of the verse, *viz.* '*the Deity of the smiling lotus-eyes*' there is a Simile and in the second half, a Metaphor ; thus we have the Conjunction of two ornaments of sense. Both these Conjunctions residing in the same verse, we have here the distinct ornament of the Conjunction of the ornaments of word and sense.

*(To be continued.)*



*Communications of a literary nature should be addressed to the* EDITOR · *all letters on business, to the Proprietors,* MESSRS. E. J. LAZARUS & CO, *to whom Drafts should be made payable.* ADVERTISEMENTS *will be inserted at four annas per line.*

The PANDIT may be ordered of the Publishers, or through MESSRS TRUBNER and CO., LONDON.

*Annual subscription, in advance, including postage, Rs.* 12.

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 23. Benares April 1st, 1868. Vol. II.


## ॥ श्रीपरमेश्वराय नमः ॥

### ॥ ईश्वरप्रत्यभिज्ञाविमर्शिन्या भूमिका ॥

अविनाभाववदाम्नत्यमपत्यीकृतविष्टपम् ।
वाचामगोचरं वस्तु निस्तुलं भूतये ऽस्तु नः ॥

इह खलु संसारसागरे रत्नभूतानाममीषां भूतानां सावयवत्वतः कार्यत्ववतामस्मदाद्यल्पज्ञाकर्तृकत्ववतां च सकललोकविलक्षणैश्वर्यवान् कश्चन कर्त्ता ऽस्तीत्यत्र बहूनामविवादः । तत्रैतावान् विशेषो यत् कैश्चित् कौस्तुभभूषितवक्षसमिन्दिरया सेव्यमानं नारायणपदव्यवह्रियमाणं लीलाविग्रहं दधानएव सोऽन्ये ब्रह्मेन्द्रादयः सर्वे तस्य नियोज्याइति मन्यते, परे तु जटाजूटलसद्गाङ्गशोभिशेखरोऽम्बिकेशो भगवान् महेश्वरएव सोऽन्ये सर्वे तन्नियन्त्रणीयाइति मन्वते, ऽन्ये चान्यदेव शक्त्यादिकम् । तेषु च प्रथमे माध्वरामानुजीयसाङ्कर्षणपञ्चरात्रादिविविधमतमवलम्बमानाः सर्वे वैष्णवाइति प्रसिद्ध्यन्ति, द्वितीयाश्च शैवरसेश्वरपाशुपतप्रत्यभिज्ञाप्रभृतिसिद्धान्ताननुसरन्तोमाहेश्वराइति गीयन्ते, ऽन्ये च शाक्ताः सौरा इत्यादि, । तत्र माध्वरामानुजीयादिसिद्धान्तग्रन्थानां बहूनामुपलम्भेऽपि शैवादिमाहेश्वरसिद्धान्तप्रतिपादकप्रौढनिबन्धानामेषु दिवसेष्वत्यन्तं विरलप्रचारतया केवलं सर्वदर्शनसङ्ग्रहस्थितस्यांशिकतदुपपादनस्यैवोपलम्भेन तत्सिद्धान्तनिबन्धानां बलवती दिदृक्षा विशेषतश्च प्रत्यभिज्ञाख्योत्तमोत्तममतोपपादकनिबन्धस्य ममासीत् । अद्यत्वे च मत्परममित्रश्रीयुतप्रमदादासमित्रमहाशयैः स्वीयेन केन चित् सुहृदा काश्मीरदेशे महता प्रयत्नेनासादितमीश्वरप्रत्यभिज्ञासूत्रविमर्शिनीनामकप्रत्यभिज्ञासिद्धान्तोपपादकपरमप्राचीननिबन्धरत्नपुस्तकं प्राप्य मह्यं दत्तं, तच्च चन्द्रमसमिवाहं चकोरइवोपलभ्यात्यन्तं प्रीतः स्वमत्यनुसारेण भूयोविमृश्य क्वाचित्कमलग्नमंशं श्री ६ मद्गुरुराजारामशास्त्रिचरणेभ्योऽवगम्य संशोध्य विषमस्थलानि चास्य ग्रन्थस्यातिसंक्षेपतो विवृत्यैतत्पत्रद्वारा प्रकाशयितुमुत्सहे । प्रीयतां च तेन भगवान् महेश्वरइति सविनयं प्रार्थये ।

एतन्निबन्धव्याख्येयसूत्ररूपश्लोकानां रचयिता श्रीमदुदयाकरपुत्रः श्रीसोमानन्दनाथशिष्यः श्रीमानुत्पलदेवः । व्याख्याता च तत्प्रशिष्यः श्रीलक्ष्मणगुप्तशिष्यः श्रीमानभिनवगुप्ताचार्यइत्येतद्ग्रन्थस्याद्यन्तपद्येभ्यः स्पष्टमवसीयते । सर्वदर्शनसङ्ग्रहे माधवाचार्याअपि प्रत्यभिज्ञामतोपपादनावसरएतद्ग्रन्थस्यानेव कतिपयान् सूत्ररूपश्लोकानुपन्यस्यैतद्ग्रन्थानुसारेणैव तान् व्याख्यन्, स्थानेस्थाने चाभिनवगुप्ताचार्यस्य नामापि व्यलिखन्, तेन चास्य निबन्धस्य परमप्राचीनता स्फुटमवधार्यते ।

अस्य च त्रीणि प्रकरणानि "ज्ञानाधिकार;,क्रियाधिकार, आगमाधिकार,श्चेति । तत्र प्रथमे ऽष्टाववान्तरप्रकरणानि,तेषां चाह्निकपदेन व्यवहाराद् भगवतोत्पलदेवेनाष्टाभिर्दिवसैस्तावन्ति सूत्राणि निर्मितानीति गम्यते । तत्र प्रथमाह्निके प्रमातुः सार्वज्ञ्यादिनिरूपणलक्षणउपोद्घातः । द्वितीये न सिद्ध्यति स्थिरआत्मा नापि तस्य ज्ञातृत्वलक्षणमैश्वर्यमिति पूर्वपक्षः । तृतीये प्रमायाः स्वसंवेदनत्वव्यवस्थापनादिपुरःसरं पूर्वपक्षनिराकृतिः । चतुर्थे स्मृतिशक्तिनिरूपणम् । पञ्चमे ज्ञानशक्तिनिरूपणम् । षष्ठेऽपोहशक्तिनिरूपणम् । सप्तमे स्मृत्यादिशक्तित्रयस्याश्रयोजडव्यावृत्तः स्वच्छन्दोमहेश्वरोव्यवस्थापितः। अष्टमे तस्य स्वातन्त्र्यरूपमाहेश्वर्यस्योपपादनम् ॥ द्वितीये

चाह्निकचतुष्टयात्मके क्रियाधिकारे क्रियाशक्तिर्निरूप्यते ॥ तृतीये चागमाधिकारे त्रिभिराह्निकैः शिवादिधरणीपर्यन्तविश्वनिरूपणमिति शम् ॥

काशीस्थराजकीयपाठशालायाम्
सांख्यशा०बालशास्त्री

## ॥ श्रीपरमेश्वराय नमः ॥

॥ ईश्वरप्रत्यभिज्ञासूत्रविमर्शिनी ॥

निराशंसात् * पूर्णादहमिति पुरा भासयति यद्
† द्विशाखामाशास्ते तदनु च विभङ्क्तुं निजकलाम् ।
स्वरूपा ‡ दुन्मेषप्रसरणनिमेषस्थितिजुष-
स्तदद्वैतं वन्दे परमशिवशक्त्यात्म निखिलम् ॥
श्रीत्र्यम्बकसद्वंशमध्य § मुक्तामयस्थितिः ।
श्रीसोमानन्दनाथस्य विज्ञानप्रतिबिम्बकम् ॥
अनुत्तरानन्यसाक्षिपुमर्थोपायमभ्यधात् ।
ईश्वरप्रत्यभिज्ञाख्यं ‖ यः शास्त्रं यत् सुनिर्मलम् ॥
तत्प्रशिष्यः करोम्येतां तत्सूत्रविवृतिं लघुम् ।
बुद्धा ऽभिनवगुप्तो ऽहं श्रीमल्लक्ष्मणगुप्रतः ॥
वृत्त्या तात्पर्यं टीकया तद्विचारः
सूत्रेष्वेतेषु ¶ ग्रन्थकारेण ** दृब्धम् ।
तस्मात् सूत्रार्थं मन्दबुद्धीन् प्रतीत्थं
सम्यग् व्याख्यास्ये प्रत्यभिज्ञाविवित्त्यै ॥
सर्वत्राल्पमतौ यद्वा कुत्रापि सुमहाधियि ।
न वा ऽन्यत्रापि तु स्वात्मन्येषा स्यादुपकारिणी ॥

ग्रन्थकारोऽपरोक्षात्मदृष्टशक्तिकां परमेश्वरतन्मयतां परत्र संचिक्रमयिषुः स्वतादात्म्यसमर्पणपूर्वमविघ्नेन तत्सम्प्राप्तिं मन्यमानः परमेश्वरोत्कर्षप्रह्वतापरामर्शशेषतया परमेश्वरतादात्म्ययोग्यताऽऽपादनबुद्ध्या प्रयोजनमासूत्रयति ।

(१) कथं चिदासाद्य महेश्वरस्य
दास्यं जनस्याप्युपकारमिच्छन् ।
समस्तसम्पत्समवाप्तिहेतुं
तत्प्रत्यभिज्ञामुपपादयामि ॥

इह परमेश्वरं प्रति येयं कायवाङ्मनसां तदेकविषयतानियोजनालक्षणा प्रह्वता सा नमस्कारस्यार्थः । सा च तथा कर्तुमुचिता प्रामाणिकस्य भवति,यदि सर्वतोनमस्करणीयस्योत्कर्षं पश्येद्,अन्यथा युक्तिमपरामृशतोऽपरमार्थरूपे ऽपि नमस्कारोद्यतस्य सांसारिकपशुजनमध्यपातित्वमेव । यथोक्तम् ।

न विदन्ति परं देवं विद्यारागेण रञ्जिताः ।

इति । * तावति मायीयाशुद्धविद्यारागकलासञ्चार्यमाणस्य पशुत्वमेव । † इतरापेक्षया तु कतिपयाध्वोत्तीर्णतया समुत्कर्षोऽपि स्यात् । तदुक्तम् ।

कस्य नाम करणैरकृत्रिमैः
पश्यतस्तव विभूतिमद्भुताम् ।
विभ्रमादवरतोऽपि जायते
त्वां व्युदस्य वरद स्तुतिस्पृहा ॥

इति श्रीमद्विद्यापतिना, । एतच्चागमकाण्डे निरूपयिष्यामः । तस्मान्निखिलोत्कर्षपरामर्शनमपि तत्र स्वीकार्यम् । "यद्यप्यायातदृढेश्वरशक्तिपातस्य स्वयमेवेयमियती परमशिवभूमिरभ्येति हृदयगोचरं, न त्वत्र स्वात्मीयः पुरुषकारः कोऽपि निर्वहति, सर्वस्य तस्य मायामयत्वेनान्धतमसप्रख्यस्यामायीयं शुद्धप्रकाशं स्वप्रतिद्वन्द्विनं प्रत्युपायताऽनुपपत्तेः तथापि तदेव तथाविधं रूपं ‡ प्रख्योपाख्याक्रमेण स्वात्मपरावभासविषयभावजिगमिषया निःशेषोत्कर्षविशेषाभिधायिजयत्यादिशब्दानुबन्धेन परामर्शनीयमिति नमस्कारे जयत्यर्थ आक्षेप्यः । जयपदोदीरणे ऽपि तादृशि समुत्कर्षातिशयशालिनि स्वात्मानमप्रह्वीकुर्वाणस्य तटस्थस्य परमनात्मोपकारित्वमिति समुत्कर्षविशेषाक्षिप्तएव नमस्कारोऽवश्यमभ्यन्तरीकार्यः इत्यनया युक्त्या जयनमस्कारैकतरप्रक्रमे ऽन्यतरस्यार्थाक्षिप्तता ऽवश्यमङ्गीकर्तव्या । वन्दननमनस्मरणप्रध्यानप्रभृतीनामपि नमस्कारजयत्यर्थमात्रपरमार्थत्वादियमेव वर्त्तनी । अत्र पुनर्ग्रन्थकृता तादृक्प्रक्रम आश्रितोयत्र द्वयमपीदं स्वशब्दपरामृष्टमेव । एतच्च पदार्थव्याख्यानावसरएव प्रकटीभविष्यति । स्वशब्दपरामर्शश्च सर्वजनहितत्वाद्युक्तियुक्तः ।

---

* पूर्णत्वं चानन्यापेक्षा । इदं चाहमित्याभासहेतुव्यञ्जकं स्वरूपविशेषणम् । विषयान्तरानवभासविशिष्टो य आत्मप्रकाश आत्ममात्रविश्रम इति व्यवह्रियमाणः सएवाहमित्याभासः ।

† क्रमेण सदाशिवभट्टारकेश्वरभट्टारकाख्यदेवताद्वयाधिष्ठेयं यदहमितीदमिति च शाखासदृशाभासद्वयं तद्योगिनीम् ।

‡ सृष्टिस्थितिसंहाराः ॥ आगमाधिकारावगमेन स्ववगम एतच्छ्लोकार्थः ॥

§ मुक्तामयी स्थितिर्यस्येत्यर्थः । प्राचुर्ये मयट् । यद्वा मुक्ता आमया रागद्वेषप्रभृतयो यया यस्यां वा तादृशी स्थितिर्यस्येत्यर्थः ।

‖ उत्पलदेवः ।

¶ उत्पलदेवेन ।

** दृभीसन्दर्भे । सन्दर्भशुद्ध्योपनिबद्धम् ।

* पुरुषतत्त्वपर्यन्ते ।

† महत्तत्त्वाद्यात्मत्वेनाभिमन्यमानापेक्षया ।

‡ स्वात्मसमवेतार्थप्रतिपत्तिहेतुः शब्दप्रतीतिः प्रख्या । परबोधोपयोगिशब्दप्रयोग उपाख्या ।

सहि सर्वस्यैव झटिति हृदयंगमः । अर्थाक्षिप्तस्तु कति चिदेव प्रति । स्वप्रतिभोदितवाक्तत्वावमर्शासम्भवा,द्वाक्तत्वावमर्शशून्यस्य च प्रकाशस्याप्रकाशकल्पत्वात् । एतच्चाग्रे स्फुटीभविष्यति । तदनेनाभिप्रायेण प्रसिद्धजयनमःप्रभृतिशब्द*शय्यानाश्लेषेणेमां सरणिमनुसरति स्म ग्रन्थकारः । इह यद्यत्किं चन स्फुरति तत्तद्बुद्ध्यमाणेश्वररूपस्वात्मप्रथामात्रम् । तत्रत्नूपायोपेयभावप्रभृतिः कार्यकारणभावोऽपि यथाप्रकाशं परमार्थभूतएव, प्रकाशमानस्यानपह्नवनीयत्वात् । यदाह भट्टदिवाकरवत्सो विवेकाञ्जने ।

प्रकाशश्चैव भावानाम्

इत्यादि

न शापोक्त्या विलीयते

इत्यन्तम् । तत्र तु कार्यकारणभावे ऽपि क्वचित् परिपूर्णस्वातन्त्र्यलक्षणमाहेश्वर्यनान्तरीयकताक्रोडीकृतानन्तशक्तिचक्रचुम्बितभावभावितप्रथान्तरव्यवधानं चकास्ति सतु मायीयत्वेन व्यवस्थापयिष्यते । जडचेतनाद्यवान्तरभेदशतसम्भिन्नश्चासौ तत्कृतश्च सर्वो ऽयं निष्पाद्यनिष्पादकभावज्ञाप्यज्ञापकभावावभासोलोकव्यवहाररूपः । यत्र तु शुद्धस्वात्मप्रथात्मकानुत्तरशक्तिशाले निरर्गलस्वात्मप्रकाशएव मायीयप्रथान्तरव्यवधानबन्धोनिबन्धनं तत्र तस्यैव भगवतः कारणत्वम् । एष चानुग्रहलक्षणो ऽन्त्यः पञ्चमः पारमेश्वरः † कृत्यविशेषः परमपुरुषार्थप्रापक,स्तन्निबन्धनत्वात्परमार्थमोक्षस्य । अन्यत्र त्योह्यपवर्गः कुतश्चिन्मुक्तिर्न सर्वत इति निःश्रेयसाभास इति वक्ष्यामः । सचायं द्वितीयः कार्यकारणभावो लौकिकान्वयव्यतिरेकसिद्धप्रसिद्धकार्यकारणभावविलक्षणत्वात् स्फुटेन रूपेणासंचेत्यमानः कादाचित्कवस्तुसद्भावाऽवभासोचीयमानपरमार्थोऽतिदुर्घटकारित्वलक्षणैश्वर्यविजृम्भाभावितादुतभावः प्रथमकोटिसम्भावनाशून्यः ‡ कालिकाकारस्वप्रकाशावरणनिराकरणमनोरथशतदुष्प्रापइत्येवंप्रकारस्यमा द्योतकनिपातसहितेन निरूपितः ।

कथञ्चिदिति । केन चिच्च प्रकारेण परमेश्वराभिन्नगुरुचरणसमाराधनेन परमेश्वरघटितेनैव । यथोक्तम् ।

सम्बन्धो ऽतीवदुर्घटः ।

इति । आसाद्येति । आसमन्तात् परिपूर्णरूपतया सादयित्वा स्वात्मोपभोगयोग्यतां निरर्गलां गमयित्वा । इयता विदितवेद्यत्वेन परार्थे शास्त्रकरणे ऽधिकारोदर्शितः । अन्यथा तु प्रतारकतामात्रमेव स्यात् । पौर्वकाल्येन सामनन्तर्यमत्र विवक्षितम् । अन्यथा त्वासादनतारतम्यप्राप्तौ मायीयमलकलापसंस्कारप्रक्षये कथं परोपदेशः शक्यक्रियः । सम्भवन्ति हि मायागर्भाधिकारिणो विष्णुविरिञ्च्याद्य स्तदुत्तीर्णाअपि महामायाधिकृताः शुद्धाशुद्धामन्त्रतदीशतन्महेशात्मानः । शुद्धाअपि श्रीसदाशिवप्रभृतय,स्ते तु यदीयैश्वर्यविप्रुड्भिरीश्वरीभूताः स भगवाननवच्छिन्नप्रकाशानन्दस्वातन्त्र्यपरमार्थो महेश्वरः तस्य दास्यमित्यनेन तत्प्रत्यभिज्ञोपपादनस्य महाफलत्वमासूत्रयति । दीयते ऽस्मै स्वामिना सर्वं यथाभिलषितमिति दासः । तस्य भावइत्यनेन परमेश्वररूपस्वातन्त्र्यपात्रतोक्ता । जनस्येति, यः कश्चिज्जायमानस्तस्ये,त्यनेनाधिकारिविषयो नात्र कश्चिन्नियमइति दर्शयति । यस्ययस्य हीदं स्वरूपप्रथनं तस्यतस्य महाफलम् । प्रथनस्यैव परमार्थफलत्वात् तस्य च प्रतिबन्धकसमस्तैरप्रतिबन्धनीयत्वात् । नहि प्रथितमप्रथितमिति न्यायात् । तदुक्तम् ।

नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतोभयात् ॥

इति । परमगुरुपादैरपि शिवदृष्टौ ।

एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः ।
ज्ञाते शिवत्वे तत्रस्थप्रतिपत्त्या दृढात्मना ॥
करणेन नास्ति कृत्यं क्वापि भावनया ऽपि वा ।
सकृज्ज्ञाते सुवर्णे किं भावनाकरणादिना ॥
सर्वदा पितृमात्रादितुल्यदार्ढ्येन सत्यता ।

इति । जनस्येत्यनवरतजननमरणपरिपीडितस्येत्यनेन कृपास्पदतयोपकरणीयत्वमाह । अपिशब्दः स्वात्मनस्तदभिन्नतामाविष्कुर्वन् पूर्णत्वेन स्वात्मनि परार्थसम्पत्त्यतिरिक्तप्रयोजनान्तरावकाशं पराकरोति । परार्थश्च प्रयोजनंभवत्येव, तल्लक्षणयोगात् । नह्ययं दैवशापः स्वार्थएव प्रयोजनं न परार्थइति । तस्याप्यतल्लक्षणयोगित्वे सत्यप्रयोजनत्वात् । सम्पाद्यत्वेनाभिसंहितं यन्मुख्यतया ततएव क्रियासु प्रयोजकं तत्प्रयोजनम् । अतएव भेदवादे ऽपि ईश्वरस्य सृष्ट्यादिकरणे परार्थएव प्रयोजनम् इति दर्शयितुं *न्यायनिर्माणवेधसा निरूपितं "यमर्थमधिकृत्य पुरुषः प्रवर्तते तत्प्रयोजन,,मिति । इच्छन्निति । इच्छाविषयीकृतस्य फलस्य प्रवृत्तौ हेतुत्वं शत्रा दर्शयति । इच्छाशक्तिश्चोत्तरोत्तरमुच्छुसनस्वभावतया क्रियाशक्तिपर्यन्ती भवतीति दर्शयिष्यामः । उपशब्दः समीपार्थः । तेन जनस्य परमेश्वरधर्मसमीपताकरणमत्र फलं ततएवाह । समस्तेति । परमेश्वरतालाभेहि समस्तास्सम्पदस्तन्निष्यन्दमय्यः सम्पद्या-

---

* शय्यातल्पे. शब्दगुम्फे इति कोशः ।
† सृष्टिस्थितिसंहारपिधानानुग्रहाख्यानि पञ्च कृत्यानि वक्ष्यन्ते ।
‡ मेघजाले ऽपि कालिकेति कोशः ।
* गौतमेन

एव, रोहंणलाभे रत्नमम्पदइव । प्रमुषितस्वात्मपरमार्थस्य हि किमन्येन लब्धेन । लब्धतत्परमार्थस्यापि तदन्यन्नास्ति यद्वाञ्छनीयम् । यदुक्तं ग्रन्थकृतैव ।

भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम् ।
एतया वा दरिद्राणां किमन्यदुपयाचितम् ॥

इति । एवं षष्ठीसमासेन प्रयोजनमुक्तम् । बहुव्रीहिणा तूपायः सूच्यते । समस्तस्य भावाभावरूपस्य बाह्याभ्यन्तरस्य नीलसुखादेर्या सम्पत् सम्पत्तिस्तत्सिद्धिस्तथात्वप्रकाशः तस्याः सम्यगवाप्तिः तथात्वप्रकाशविमर्शरूढिः सैव हेतुर्यस्यां तत्प्रत्यभिज्ञायां, तथाहि स्फुटतरभासमाननीलसुखादिप्रमान्वेषणद्वारेणैव पारमार्थिकप्रमातृलाभइहोपदिश्यते । यदाहान्यत्र ।

इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता ।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम् ॥

इति । तथा

प्रकाशस्यात्मविश्रान्तिरहम्भावो हि कीर्तितः ।
उक्ता च सैव विश्रान्तिः सर्वापेक्षानिरोधतः ॥
स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरता ऽपि च ।

इति । इयता चोपायेनातिदुर्घटत्वाशङ्का पराकृता यदन्ते निरूपयिष्यति ।

"सुघटएषमार्गोनवः,,

इति । तस्य महेश्वरस्य प्रत्यभिज्ञा प्रतीपमात्माभिमुख्येन ज्ञानं प्रकाशः प्रत्यभिज्ञा प्रतीपमिति स्वात्मावभासो हि नाभूतपूर्वो ऽविच्छिन्नप्रकाशत्वात्तस्य सतु तच्छक्त्यैव विच्छिन्नइव विकल्पितइव लक्ष्यतइति वक्ष्यते । प्रत्यभिज्ञा च भातभासमानरूपानुसंधानात्मिका, स एवायं चैत्रइति प्रतिसंधानेनाभिमुखीभूते वस्तुनि ज्ञानम् । लोके ऽपि एतत्पुत्र एवङ्गुण एवंरूपक इत्येवं वा अंततोपि सामान्यात्मना वा ज्ञातस्य पुनरभिमुखीभावावसरे प्रतिसंधिप्राणितमेव ज्ञानं प्रत्यभिज्ञेति व्यवह्रियते, "नृपतिं प्रति प्रत्यभिज्ञापितोय,, मित्यादौ । इहापि प्रसिद्धपुराणसिद्धान्तागमानुमानादिभिर्विदितपूर्णशक्तिस्वभावइश्वरे सति स्वात्मन्यभिमुखीभूते तत्प्रतिसन्धानेन ज्ञानमुदेति "नूनं सएवेश्वरोह,मिति तामिनःमुपपादयामीति,उपपत्तिः सम्भवन्तीं सम्भवन्तीं तत्समर्थाचरणेन प्रयोजकव्यापारेण संपादयामि । तथाहि संभवति तावदसावविच्छिन्नप्रकाशत्वात्, निरोधकाभिमतमायाशक्तिसमपसारणमात्रमेव तु तत्रोपपादनम् । प्रत्यभिज्ञोपपत्तौ स्वपरविभागाभावे तदपेक्षं कर्त्रभिप्रायाद्यसम्भाव्यमिति परस्मैपदप्रयोगः । इत्थं चात्र श्लोके योजना । महेश्वरस्य दास्यं समस्तसम्पल्लाभहेतुं कथंचिदासाद्य जनस्यापि कथं चित्तत्प्रत्यभिज्ञामासाद्य प्रापय्य उपकारं समस्तसम्पल्लाभहेतुभूतं महेश्वरदास्य त्मकामिच्छंस्तामेव समस्तसम्पत्समवाप्तिहेतुकां तत्प्रत्यभिज्ञामुपपादयामि । आसाद्येति । आवृत्तियोजने द्वौ णिचौ । इयति च व्याख्याने वृत्तिकृता भरोन कृत,स्तात्पर्यव्याख्यानात् । यदुक्तं "संवृतसौत्रनिर्देशविवृतिमात्रव्यापाराया,मिति । टीकाकारेणापि वृत्तिमात्रं व्याख्यातुमुद्यतेन नेदं स्पृष्टम् । अस्माकं तु सूत्रव्याख्याने एवोद्यम इति विभज्य व्याख्यातम् । एवं सर्वत्र । एवमनेन श्लोकेन अभिधेयं प्रयोजनं तत्प्रयोजनं तत्प्रयोजनमधिकारिनिरूपणं गुरुपर्वक्रमसम्बन्ध इति दर्शितम् । तथाहि । समस्तसम्पल्लक्षणो व्याख्यातो यो ऽर्थः पूर्वं पुण्यपापादौ संसारमूलकारणे हेतुः सएव प्रत्यभिज्ञायते ऽनयेति करणव्युत्पत्त्या उपाय इह लोकोत्तरमार्गं प्रति निर्णीत इत्यतिदुर्घटकारित्वलक्षणमैश्वर्यं "मार्गोनव,, इति शास्त्रांते निरूपयिष्यमाणं सूचयता उपायः प्रदर्शितः अभिधेयत्वेन, अतएव तथाहीत्युपक्रमपूर्वं श्लोकान्तरं भविष्यति । प्रयोजनं च प्रत्यभिज्ञोपायज्ञानं, तस्य प्रयोजनं प्रत्यभिज्ञानं, तस्यापि प्रयोजनं समस्तसम्पल्लक्षणपारमैश्वर्यैकरूपप्रथनं, ततः परं तु नास्त्येव तस्य सर्वपर्यन्तफलत्वादंशांशिकया ऽपि यदुक्तम् मयैव स्तोत्रे ।

फलं क्रियाणामथवा विधीनां
पर्यन्ततस्त्वन्मयतैव देव ।
फलेप्सवोये पुनरत्र तेषां
मूढा स्थितिः स्यादनवस्थयैव ॥

इति । एतद्वक्ष्यति "तदत्र निदधत्पद,,मिति पादद्वयेन । जनस्येत्यनेनाधिकारी दर्शितः । यन्निगमयिष्यति । "अनिशमाविश,,चिति । कथंचिदित्यनेन गुरुपर्वक्रमः । वक्ष्यति "महागुरुभिरुच्यते स्म शिवदृष्टिशास्त्रे यथा,, इति । एवं प्रतिज्ञातव्यसमस्तवस्तुसंग्रहेणेदं वाक्यमुद्देशरूपं प्रतिज्ञापिण्डात्मकं च, मध्यग्रन्थस्तु हेत्वादिनिरूपक,"इति प्रकटित,, इति चान्त्यश्लोको निगमनग्रन्थ, इत्येवं पञ्चावयवात्मकमिदं शास्त्रं परव्युत्पत्तिफलम् । नैयायिकक्रमस्यैव मायापदे पारमार्थिकत्वमिति ग्रन्थकाराभिप्रायः क्रियासम्बन्धसामान्येत्यादिषूद्देशेषु प्रकटीभविष्यतीति तावद्ग्रन्थस्य समस्तस्य तात्पर्यम् । सुजनश्च लौकिकेश्वरपरिचित ईश्वरविषये जनमनुजीविगुणोपपन्नं प्रकाशयति, जनविषये चाभिगामिकादिगुणगणसम्पन्नमीश्वरं प्रकाशयति, इतीयानर्थः सामान्येन शेषषष्ठीसमासेन दर्शितः तस्य प्रत्यभिज्ञेति । एतच्छ्लोकाकर्णनसमये च शिष्याणामेतदर्थसंक्रमणक्रमेण परमेश्वरतादात्म्यमेवोपजायते तावत् । तथा हि । जनस्येत्याकर्णनाद्वयं ते जननमरणपीडिता अपर्युदस्तवृत्तयस्व अस्माकमयमयकारमिच्छन् महेश्वरस्य दास्यमासा-

द्य समस्तसम्पत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयति ततश्चतत्प्रत्यभिज्ञामेवंभूतां वयं प्राप्ताएवेति । इत्थमेव ह्यधिकारिणो शास्त्रार्थस्य बिम्बप्रतिबिम्बवत्संक्रान्तिर्लोड्लिङादीना विषयीभवतीति प्रथमपुरुषार्थउत्तमपुरुषार्थे पर्यवस्यति, न तु ताटस्थ्येना,धिकार्यनधिकारिणोः प्रतिपत्तौ विशेषाभावप्रसंगात्। आरोग्यकामाः शिवां सेवन्तां सेवध्वमिति वा वाक्यार्थस्य सेवामहे इत्येवं रूपेणाधिकारिणि द्वितीयकक्ष्यासंक्रान्तौ तृतीयकक्ष्यायामेव भाविकोटिपतितामपि पुरुषार्थसम्पत्तिमकालकलितस्वरूपानुप्रवेशेन स्वात्मीकृतामभिमन्यमाने ततएव विततसंवित्सुन्दरपरामर्शे पूर्णताभिमानप्रतिलम्भादन्यस्य त्वनेवंरूपत्वेनैवाधिकारिता ताटस्थ्यमाप्नोति तदास्तामवान्तरमेतदतिगहनं चेति स्थितमेतद् एतेन श्लोकेनेश्वरसाम्मुख्य विनेयानां प्रयोजनादिप्रतिपादनं च क्रियतइति ।

अनन्तभावसम्भारभासने स्पन्दनं परम् ।
उपोद्घातायते यस्य तं स्तुमस्सर्वदा शिवम् ॥

नन्वीश्वरस्य सिद्धिरेव कर्तव्या । केयं सिद्धिः "न ताव दुत्पत्तिः,, नित्यत्वात्, नापीश्वरसिद्धिकारादयस्तस्योत्पत्तिं विदधते, "ज्ञप्तिसिद्धिरिति चेत्,, अनवच्छिन्नप्रकाशस्य प्रमाणव्यापारोपादेयप्रकाशात्मकसिद्ध्यनुपयोगएव, । नन्वनवच्छिन्नस्तदीयः प्रकाशइति * कथमेतत् घटसुखादिप्रकाशे हि तत्प्रकाशः । † कुतः । ‡ तदप्रकाशेपि सुप्तमूर्छादौ नतराम्, स्वप्रकाशेपि वेश्वरे प्रमातॄणां किं वृत्तं येन तेषां प्रमाणव्यापारानुपयोगइत्याशङ्क्याह ।

(२) कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे ।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः ॥

इह क ईश्वरे कीदृशे कीदृशेन प्रमाणेनास्तीति ज्ञानलक्षणां सिद्धिं नास्तीति ज्ञानलक्षणं वा निषेधं कुर्यात् । "प्रमातेति चेत्,, सएव कः, किं देहादिर्जडः उत तदन्योवा कश्चिद् आत्मादिशब्दवाच्यः, सोपि च स्वप्रकाशस्वभावोवा न वा, । "देहादिर्जड इति चेत्,, सएव स्वात्मन्यसिद्धः परत्र कां सिद्धिं कुर्यात्, आत्माप्यस्वप्रकाशो जड एव तत्तुल्ययोगक्षेमः, "स्वप्रकाशस्वभावइति चेत्,, कीदृशेन स्वेन रूपेण भाति, 'यदि परिनिष्ठितसंविन्मात्ररूपेण,, तदा संविदां भेदनं भेदितानां चान्तरनुसन्धानेनाभेदनं न स्यात्, तेन स्वतन्त्रस्वप्रकाशात्मतया तावत्सभासते तथा भासमानश्च कीदृशमीश्वरं साधयेन्निषेधयेद्वा "कर्तृज्ञातृस्वभावमिति चेत्,, ननु स प्रमातैव तथाभूतइति कोन्यस्सः "ननु सर्वकर्तृत्वसर्वज्ञत्वे प्रमातुर्न स्तः,, । न खलु सर्वशब्दार्थौ ज्ञातृत्वकर्तृत्वयोः स्वरूपं भिनत्ति, * भेददर्शने ऽपीश्वरज्ञानचिकीर्षायत्नादेर्नित्यस्य विषयेणाकारणभूतेना † नाधेयातिशयत्वात्, "प्रकाशमानतानयनमेव विषयत्वमिति चेत्,, अप्रकाशस्वभावस्य तथात्वमनुचितमिति वक्ष्यामः, प्रकाशमानस्वभावत्वे विषयोपि सर्वात्मना प्रकाशएव निमग्न इति प्रकाशः प्रकाशते इत्येतावन्मात्रपरमार्थत्वे कः सर्वज्ञासर्वज्ञप्रविभागः, । ‡ प्रमाणमप्येवं सिद्धत्वासिद्धत्वाभ्यां पर्यनुयोज्यम् एवं सिद्धिरपि । तस्माद्विषयाभिमतं वस्तु शरीरतया गृहीत्वा तावदवभासमान आत्मैव प्रकाशते विच्छेदशून्यः सुषुप्तमपि प्रति प्रकाशतएव, § अन्यथा स्मृत्ययोगात् प्रकाशस्य च नित्यत्वाद्विच्छेदहेतोरभावेनान्यप्रमात्रपेक्षया च प्रकाशमानत्वात्, स्वपरप्रमातृविभागस्य तत्सृष्टस्य मायीयत्वेन वक्ष्यमाणत्वात् । सचायं स्वतन्त्रः । स्वातन्त्र्यं चास्याभेदे भेदनं भेदिते चाभेदनमिति बहुप्रकारं वक्ष्यामः । तदेवास्य पारमेश्वर्यं मुख्यमानन्दमयं रूपमिति पूर्वमुपात्तं कर्तरीति तदेव तु स्वातन्त्र्यं विभज्य वक्तुं ज्ञातरीति पश्चान्निर्दिष्टं, ज्ञानपल्लवस्वभावैव हि सर्वा क्रियेति वक्ष्यते । तेन सर्वक्रियास्वतन्त्रे सर्वशक्तिके इति यावदुक्तं भवेत्तावदेव कर्तरीति ज्ञातरीति । इयमेव चासौ संवित्स्वभावता संविदिति तूच्यमाना विकल्प्यत्वेन प्रमेयतां स्पृशन्ती सृष्टत्वाच्च परमार्थसंविदिति वक्ष्यामः । कर्त्ता ज्ञाता च महेश्वरइत्यभिधाने ऽपि सएव प्रकारश्चापतेदिति यथायथा प्रमेयभूमिकापादनन्यक्कार-

* अध्यवसायाद्यात्मनः प्रकाशस्य बाह्याभ्यन्तरान्यतरविषयैकनिरूप्यतया तस्य च यं कं चन घटप्रभृतिविषयमवगाहमानस्याशेषविषयावलम्बित्वलक्षणस्य विषयानवलम्बित्वलक्षणस्य वा ऽनवच्छिन्नत्वस्यासम्भवेन तादृशप्रकाशान्तरानुपलम्भेन च न युज्यते पारमेश्वरप्रकाशस्यानवच्छिन्नत्वमिति भावः ।

† एतत् प्रतिक्षेप्तुं सुप्तादिदशायां विषयानवगाहिप्रकाशस्य सम्भवमभिप्रयन् पृच्छति कुत इति ।

‡ समादधन् प्रमाणाभावात् तदवस्थायां प्रकाशमात्रं प्रत्याचष्टे नतरामित्यन्तेन ।

एवं प्रकारेण सरलव्याख्यानो भवत्ययं ग्रन्थ इति पुस्तकद्वये ऽप्युपलभ्यमानो नितरामिति पाठउपेक्षितः ।

* नैयायिकमते

† विषयोपप्लवे ऽपि कल्पान्ते विषयसत्तादशायामिव पारमेश्वरप्रमादेः स्वीकारेण विषयस्य मित्यादिस्वरूपभेदकत्वासम्भवात् ।

‡ प्रमाणस्य प्रकाशान्तर्गतत्वसिद्धौ केदानीं प्रमाणस्य सिद्धिः प्रकाशस्य कर्तव्यतया ऽवशिष्यते । अथ चेदसिद्धं तर्हि तदेवायातमप्रकाशस्वभावस्य तथात्वमनुचितमिति वक्ष्यमाणमिति ।

§ स्मरति हि सुप्तोत्थितः "सुखमहमस्वाप्सं,, "गाढं मूढोऽहमस्वाप्सं,,-मित्यादि । तच्च स्मरणमनुपपद्यमानं स्वापयिकीं सौषुप्तवृत्तिमाक्षिपति, ततश्च सिध्यति निद्रा नाम वृत्तिरिति स्पष्ट "मभावप्रत्ययालम्बना वृत्तिर्निद्रे,, तिपातञ्जलसूत्रस्थसांख्यप्रवचनभाष्ये ।

कलङ्कपरिहारः शक्यस्तथातथा यावद्भाति यतितव्यमिति भूतविभक्त्या निर्देशः कृतः । उपदेशावसरे हि सर्वात्मना तावत्सा प्रमेयता ऽस्य परिहर्तुमशक्या । "स्वात्मनि,, स्वस्मिन्ननपरयरूपे स्वभावे इत्यनेन वैशेषिकाद्यभिमतजडात्मवादनिरासः । "श्रादिसिद्धे,,इत्यविच्छिन्नप्रकाशइत्यर्थः । महेश्वरइति । एतदेव माहेश्वर्यं यदनवच्छिन्नप्रकाशत्वेन ज्ञातृकर्त्तृत्वधारोपारोहः । अजडात्मेति । यस्य तु वैशेषिकादेर्जड आत्मा ससिद्धिं करोत्वीश्वरविषयाम् । कन्यस्तु सांख्यादिर्निषेधम् । सांख्योपि विषयावभासनरूपं ज्ञानं बुद्धिधर्ममिच्छन्नात्मान वस्तुतोजडमेवापैति । न च जडात्मा स्वात्मन्यपि दुर्लभप्रकाशस्वातन्त्र्यलेशः किंचित्साधयितुं निषेद्धुं वा प्रभविष्णुः पाषाणइव । न चाजडात्मनोप्येतदुचितम् । तथाहि सस्वात्मनि सिद्धिमित्थं विदध्यात् । यद्यस्य सोऽभिनवत्वेन भासमानः पूर्वं न भासते अनाभासनं चेज्जडतैव, । निषेधं चेत्थं विदध्यात् । यदि सन प्रकाशते तथा च जडः न च जडस्यैतद्युक्तमित्युक्तं नाप्यजडस्य । तस्मात्संवित्प्रकाशएव घटादिप्रकाशः न त्वसौ स्वतन्त्रः कश्चिद्धातवः ।

नीलं पीतं कुड्यमिति प्रकाशः केवलः शिवः ।
अमुष्मिन् परमाद्वैते प्रकाशात्मनि कोपरः ॥

तत्रतत्र कारकव्यापारवत्प्रमाणव्यापारोऽपि । नित्यत्ववत्स्वप्रकाशत्वस्यापि तत्र भावात् ॥

ननु कारकव्यापारः प्रमाणव्यापारश्च यदीश्वरे न सम्भवति तर्हि प्रत्यभिज्ञापयामीति योव्यापारउक्तः सकतमो व्यापारइत्याशङ्क्याह ।

(३) किं तु मोहवशादस्मिन्दृष्टेप्यनुपलक्षिते ।
शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते ॥

सईश्वरस्वभावआत्मा प्रकाशते ताव,त्तत्र चास्य स्वातन्त्र्यमिति न केन चिद्वपुषा न प्रकाशते । तत्राप्रकाशात्मनापि प्रकाशते प्रकाशात्मनापि । तत्रापि प्रकाशात्मनि सर्वथा प्रकाशात्मना प्रकाशेन भागशोवा ऽभागशः, प्रकाशने सर्वस्य व्यतिरेकेणाव्यतिरेकेण वा, कतिपयस्य व्यतिरेकेणाव्यतिरेकेण वा, उक्तप्रकारपरिपूर्णतया वा । तदमी सप्तप्रकाराः । तत्र प्रथमः प्रकारो जडोल्लासः । अन्त्यः परमशिवात्मा । मध्यमाजीवावभासाः । सैव भगवतो माया विमोहनी नाम शक्तिः । तद्वशात्प्रकाशात्मतया सततमवभासमाने ऽप्यात्मनि भागेनाप्रकाशनवशादनुपलक्षिते सर्वथा हृदयंगमीभावमप्राप्ते ऽतएव पूर्णतावभासनसाध्यामर्थक्रियामकुर्वति तत्पूर्णतावभासनात्मकाभिमानविशेषसिद्धये प्रत्यभिज्ञा व्याख्यातपूर्वा प्रदर्श्यते । कथं शक्तेरीश्वरनिष्ठत्वेन प्रसिद्धाया दृक्क्रियात्मिकाया आविष्करणेन प्रदर्शनेन अभिमानसाध्यार्थक्रियाणा तदभिमानसिद्ध्या विना ऽसिद्धे,स्तथा च दृष्टान्तं दर्शयिष्यति । "तैस्तैरप्युपयाचितै,,रिति । एतदुक्तं भवति । न कारकव्यापारो भगवति नापि ज्ञापकव्यापारोयम् । अपि तु मोहापसरणमात्रमेतत् । व्यवहारसाधनानां प्रमाणानां तावत्येव विश्रान्तेः । घटोयमग्रगः प्रत्यक्षत्वादित्यनेन हि घटो न ज्ञाप्यते प्रत्यक्षेणैव प्रकाशमानत्वात् । अन्यथा पक्षे हेत्वसिद्धेः केवलं मोहमात्रमपसार्यते । यश्चायं मोहस्तदपसारणं च यत्तदुभयमपि भगवतएव विजृम्भामात्र न त्वधिकं किंचिदित्युक्तं वक्ष्यते च ॥

ननु परिदृश्यमाने भावराशौ कमीया शक्तिराविष्क्रियते कं च प्रतीति । जडाना तावन्न ज्ञानात्मिका शक्तिरस्ति । क्रियात्मिकापि स्वातन्त्र्यप्राणा स्वातन्त्र्यव्यपगमादसम्भावनाभूमिरेव, तथा च रथोगच्छतीत्यादावुपचारं के चन प्रतिपन्नाः न च जडान्प्रति व्यवहारसाधनमुचितम् । अथ जडजीवज्जनताधिकारेणोभयमपि तर्हि सर्वस्य स्वात्मा महेश्वर इति दूरतरं विप्रकर्षिता प्रत्यभिज्ञा । तदेतदाशङ्क्य निरूपयति ।

(४) तथा हि जडभूतानां प्रतिष्ठा जीवदाश्रया ।
ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम् ॥

तथाहीति युक्त्युपक्रमं द्योतयति दृश्यतां किलेत्यर्थः । तथेत्यनेन साध्यं सूच्यते हिना च हेतुरित्यन्ये, प्रकृतं साध्यं हेतुसिद्ध्यायत्तमुपक्रम्यते इत्यर्थः । तेनेति बुद्धिवर्तिना ऽतएव स्मर्यमाणेन ग्रन्थेन वर्णयिष्यमाणेन प्रकारेण यस्मात्सर्वमेतद्युक्तमिति तथाहीति शब्दस्य वार्थः । इह तावद्भावराशिर्यथा विमृश्यते तथास्ति । अस्तित्वस्य प्रकाशं शरणीकुर्वतः प्रकाशप्राणितदेशीयं विमर्शमाश्रित्य समुन्मेषात् । अविमृष्टं हि यदि वस्तु तन्न नीलं न पीतं न सन्नासदिति कुतइति पर्यनुयोगे किमुत्तरं स्यात् । तेन यद्यथा यावदबाधितं विमृश्यते तत्तथा तावदस्ति,ततएव देशकालाकारविततात्मानोऽपि द्रव्यक्रियासम्बन्धादयः । एकत्वेनैव परमार्थसन्तइति वक्ष्यते "क्रियासम्बन्धेत्यादिना,, । ततश्च विततमपीदं विश्वं संक्षेपविमर्शदशाधिरोहे जडं जीवश्चेत्येतावता द्वयरूपेणास्ति । तत्र जडाअपि विमृश्यमाना न स्वतन्त्रा भवन्ति विमृश्यमानता हि तेषां न स्वशरीरविश्रान्तः कोऽपि धर्मः, जडत्वाभावप्रसङ्गात् । मम नीलं भाति मया नीलं ज्ञायतइति तेषां जडभूतानां चिन्मयत्वे ऽपि मायाख्यैश्वरशक्त्या जाड्यं प्रापितानां जीवन्तं प्रमातारमाश्रित्य "प्रतिष्ठा,, तत्प्रमात्राभिमुख्येनावस्थानं, ततोजडानाम न पृथक्सन्ति । यथोक्तं ग्रन्थकृतैव ।

एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी ।
जडाः

इति । सएव हि स्वात्मा नासन्वक्तव्यः । यस्यान्यानुपहितं रूपं चकास्ति, न च भारूपनुपाहितं जडं नाम किं चित् तेन जडानां हि शक्तिराविष्क्रियते जडात् प्रतीत्येतत् तावविरुत्थानमेव । ये त्वन्ये जडेभ्यो जीवन्तइति नाम प्रमितृास्तेषामपि शरीरप्राण*पुर्यष्टकशून्याकारास्तावज्जडाएवेति तेषामपि किमुच्यते । एवं घटशरीरप्राणसुखतदभावरूपं सद्यल्लग्नं भाति तदेव जीवरूपभूतं सत्यं तस्यचा† ऽपाते यद्यपि बहुत्वं भाति तथापि तज्जडात्मनः वेद्यशरीराद्युपाधेः । ततस्तदपारमार्थिकमन्योन्याश्रयात् । जीवा हि जडभेदाद्भेदभागिनः जडाश्च जीवभेदाद् एतद्वेद्योऽयमेतद्वेद्योयमिति भेदमुपेयुः । नीलपीतादभेदस्तु प्रमातृसंलग्नतया ऽभेदभूमिमिव परमारूढइति किं तेन । तदयं जीवानामभेद एव सम्यक इति जीवत् प्रमातेति जातम् । जीवनं च जीवनकर्तृत्वं तच्च ज्ञानक्रियात्मकं, यो हि जानाति च करोति च सजीवतीत्युच्यते । तदयं प्रमाता ज्ञानक्रियाशक्तियोगादीश्वर इति व्यवहर्त्तव्यः । पुराणागमसिद्धेश्वरवत् तदप्रसिद्धावपि सर्वविषयज्ञानक्रियाशक्तिमत्त्वस्वभावमेवैश्वर्यं तन्मात्रानुबन्धित्वादेव सिद्धम् । तदपि च कल्पितेश्वरराजादौ तथा व्याप्तिग्रहणात् । यो यावति ज्ञाता कर्त्ता च सतावतीश्वरो राजेव । अनीश्वरस्य ज्ञातृत्वकर्तृत्वे स्वभावविरुद्धे यतः आत्मा च विश्वत्र ज्ञाता च कर्त्ता चेति सिद्धा प्रत्यभिज्ञा । ज्ञानक्रियाशक्ती एव हि स्वाभाविक्यौ अप्ररूढभेदामर्षे सदाशिवेश्वरौ, भेदस्य सामान्यतः प्ररोहे विद्याकले, विशेषतः प्ररोहे बुद्धिकर्मेन्द्रियगण, इति भविष्यति जडाइति अजीवन्तः अन्ये च जीवन्त इत्यपाते तावद्भाति न तु संविदापाते भाति । जीवतामिति जङ्गमा एवामी इत्थं निर्द्दिष्टाः ॥

ननु ज्ञानक्रिये एव कथं सिद्धे यत ऐश्वर्यव्यवहारः प्रसाध्येतेति शङ्कां शमयितुमाह ।

(४) तत्र ज्ञानं स्वतः सिद्धं क्रिया कायाश्रिता सती।
परैरप्युपलक्ष्येत तया ऽन्यज्ज्ञानमूह्यते ॥

अहं जानामि मया ज्ञातं ज्ञास्यते चेति एवं प्रकाशाहंपरामर्शनिष्ठितमेवेदं ज्ञानं नाम । किं तत्रानुद्धार्यते । तदप्रकाशे हि विश्वमन्धतमसमेव स्यात् । तदपि वा न स्यात् । बालोपि हि प्रकाशमेव संवेदयते । तदुक्तं "विज्ञातारमरे केन विजानीया,,दिति "तत्रिन्हवेकः प्रश्नः किमुत्तरं च स्यात्,, इति । तत्र जानामीत्यन्तःसंरम्भयोगोपि भाति येन शुक्लादेर्गुणादत्यन्तजडाज्जानामीति वपुश्चित्स्वभावतामश्नुते सच संरम्भो विमर्शः क्रियाशक्तिरुच्यते । यदुक्तमस्मत्परमेष्ठिश्रीसोमानन्दपादैः ।

घटादिग्रहकाले ऽपि घटं जानाति सा क्रिया ।

इति । तेनान्तरीयक्रियाशक्तिर्ज्ञानवदेव स्वतः सिद्धा स्वप्रकाशा सैव तु शक्त्या प्राणपुर्यष्टकक्रमेण शरीरमपि संरम्भाणा स्पन्दनरूपा सती व्यापारव्याहारात्मिका मायापदे ऽपि प्रमाणस्य प्रत्यक्षादेर्विषयः । सा च परशरीरादिमाहात्म्येनावगता स्वं स्वभावं ज्ञानात्मकं गमयति । न च ज्ञानमिदंतया भाति इदंता ह्यज्ञानत्वं न चान्यदन्येन वपुषा भातं भातं भवेत् । तज्ज्ञानं भात्येव परं भाति च यत्तदेवाहमित्यस्य वपुरिति परज्ञानमपि स्वात्मैव परत्वं केवलमुपाधेर्देहादेः । स चापि विचारितोयावचान्यइति विश्वप्रमातृवर्गः परमार्थतएकः प्रमाता सएव चास्ति । यदुक्तम् ।

एकः प्रकाशएवास्ति स्वात्मनः स्वपरात्मभिः ।

इति । ततश्च भगवान् सदाशिवो जानातीत्यतः प्रभृति क्रिमिरपि जानातीत्यन्तमेक एव प्रमातेति फलतः सर्वज्ञत्व प्रमातुः । एवं कर्तृत्वे ऽपि वाच्यम् । यदुक्तमस्मत्परमेष्ठिभिः शिवदृष्टौ ।

घटो मदात्मना वेत्ति वेद्म्यहं च घटात्मना ।
सदाशिवात्मना वेद्मि सवा वेत्ति मदात्मना ॥

इत्यादि । ऊह्यतइत्यनेन ज्ञानस्य प्रमेयत्वं निर्वहतीति दर्शयति । अन्यथा ह्यनुमीयतइति ब्रूयात् । तदेवं येषां तार्किकप्रवादपांसुपातधूसरीभावो न वृत्तोऽस्मिन्संवेदनपथे तदयत्नैवात्मानमीश्वरं विद्वांसो घटशरीरप्राणसुखतदभावांस्तत्रैव निमज्जयन्त ईश्वरसमाविष्टा एव भवन्ति ततोयमुपोद्घातः । उपइत्यात्मनः समीपे टङ्कवदीश्वराभिज्ञानलक्षणउत्कर्षो हन्यते विश्राम्यते येन एतावदेव चास्य ग्रन्थस्य तात्पर्यमिति-ततोप्ययमुपोद्घातः । उपांशु अविदितं कृत्वा उदिति शास्त्रस्योर्ध्वएव हन्यते ऽपसार्यते प्रमेयविषयो व्यामोहो येनेति । गत्यर्थत्वाद्वा हन्तेर्ज्ञानमर्थः ज्ञायते प्रमेयं येनेति । केचित्तु गतिं "स्त्रियं गच्छती,,त्येतद्विषयामेव हन्त्यर्थमाहुः । एवं श्लोकचतुष्टयार्थभावनादार्ढ्यादेव लभ्यते परमशिव इति शिवम् ॥

इतिश्रीमदाचार्योत्पलदेवशिष्यश्रीमल्लक्ष्मणगुप्ताचार्यदत्तोपदेशश्रीमदाचार्याभिनवगुप्तविरचितायां श्रीप्रत्यभिज्ञाविमर्शिन्यामुपोद्घातः ।

॥ इति प्रथममान्हिकम् ॥

---

* अन्तःकरणत्रयं पञ्च तन्मात्राणि चेति पुर्यष्टकम् ।

† अविमर्शदर्शने ।

## ॥ अथ प्रसन्नराघवनामकनाटकस्य ॥

॥ षष्ठोऽङ्कः ॥

ततः प्रविशतो रामलक्ष्मणौ ।

रामः ।

सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते

लक्ष्मणः ।

चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति ।

रामः ।

वत्सैतद् विदितं कथन्नु भवता

लक्ष्मणः ।

धत्ते कुरङ्गं यतः

रामः ।

क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥

पुनर्विलोक्य हन्त संतापेन प्रतारितोऽस्मि । कथमयं गगनतलाधिरोही रोहिणीहृदयनन्दनश्चन्द्रः । चन्द्रं प्रति ।

रजनिकर करास्ते बान्धवाः कैरवाणां
सकलभुवनचेष्टाजागरूका जयन्ति ।
न कथयसि कथं तत् कुत्र सा जानकी मे
त्वमसि मृगसहायः किन्नु नक्तंचरोऽसि ॥

लक्ष्मणः । स्वगतं कथमयमभिषङ्गतरङ्गस्तरलीकरोत्यार्यमानसं तदन्यतो नयामि । प्रकाशम् । आर्यायमितो विलोक्यतां चपलचञ्चुपुटाचान्तशीतकरशीकरश्चकोरः ।

रामः । चकोरं प्रति ।

तन् मे विदेहतनयावदनं निवेद्य
भ्रातश्चकोर कुरु मां चरितार्थवृत्तिम् ।
पीता यदीयकमनीयकपोलकान्तिः
कान्तासखेन भवता शशिनं विहाय ॥

लक्ष्मणः । आर्ययमितो विलोक्यतां शरत्कृशा निशाकरकिरणानुकारितरङ्गा तरङ्गिणी ।

रामः । विलोक्य ।

कल्लोलिनि त्वमिव सापि कुरङ्गनेत्रा
नूनं किमप्यनुदिनं कृशिमानमेति ।
एतावदस्ति भवतीह निसर्गशीता
सीता पुनर्वहति कामपि तापमुद्राम् ॥

लक्ष्मणः । इतो विलोक्यतामनिद्रनीलनलिनीवनविलीनोऽयमलिनीनाथः ।

रामः । विलोक्य । अये कोऽयं विहङ्गः ।

उन्मीलन्नयनान्तकान्तिलहरीनिष्पीतयोः केवला-
दामोदादवधारणीयवपुषोः कान्तासखेन क्षणम् ।
यत्कर्णोत्पलयोः स्थितेन भवता किंचित् समुद्गुञ्जितं
भ्रातस्तिष्ठति कुत्र तत् कथय मे कान्तं प्रियाया मुखम् ॥

लक्ष्मणः । सातङ्कम् । अपीमं न विलोकयेदार्यः ।

रामः । विलोक्य । अये कोऽयं विहङ्गः ।

योऽयं बहिः कलितकुङ्कुमरेणुराग-
मन्तस्तु संभृतदयं हृदयं दधानः ।
पारेतरङ्गिणि मुहुः करुणं रटन्ती-
मालोकते सहचरीं न तु संनिधत्ते ॥

विमृश्य नूनमयं वल्लभाविरहविदारितहृदयो वराकश्चक्रवाकः ।

लक्ष्मणः । अहो * प्रमादः ।

रामः । नूनमयमेकः समदुःखतया समानशीलो मे । अथवा कुतोऽस्य मम च समानशीलता ।

अयमुदयति चन्द्रे विप्रयोगं प्रियायाः
श्रयति तपति सूर्ये सङ्गमङ्गीकरोति ।
मम तु जनकपुत्रीविप्रयुक्तस्य यातं
शतमधिकमपीदं चन्द्रसूर्योदयानाम् ॥

लक्ष्मणः । आर्येह तावत् मुकुलितकमलिनीपरिसरानुसारिणि कलहंसे दीयतां दृष्टिः ।

रामः विलोक्य ।

निजनखशिखालेखालीढस्फुरत्कमलस्तनीं
विरल † मधुपश्रेणीगीतां चलन् कलहंसकः ।
अकरुणशशिप्रेङ्खत्पादप्रहारविमूर्छिता-
महह नलिनीं क्लान्तक्लान्तां मुहुर्मुहुरीक्षते ॥

विमृश्य । वरमेवंविधानामपि सहचरीजनानुकम्पया कोमलं चेतो न तु निसर्गकठिनस्य रामस्य ।

लक्ष्मणः । स्वगतम् । कथमिदानीमप्यस्य चेतसि जानकीयमिन्द्रजालमुन्मीलति ।

नेपथ्ये । सखे रत्नशेखर चिराद् दृश्यसे ।

लक्ष्मणः । आकर्ण्य किमेतत् ।

पुनर्नेपथ्ये । वयस्य चम्पकापीडैवमेतत् । मया हीयन्तं समयमखिलमायानिधेर्मयनाम्नो दानवस्य पुत्रीं निजसहोदरीं मन्दोदरीमनुवर्तितुं लङ्कायां कृतालयात् चित्ररूपनाम्नो दानवात् सकलमिन्द्रजालकलामाददानेन स्थितम् ।

लक्ष्मणः । नूनमयं कृतकर्णकौतुकामोदः कयोरपि विद्या-

* धिक् प्रमाद इति वा पाठः ।

† निरतमधुपेति वा पाठः ।

धरयोः * संवादः ।

पुनर्नेपथ्ये । सखे रत्नशेखर तत् मे धारयसि निजकलादर्शनमिति ।

पुनर्नेपथ्ये । वयस्य चम्पकापीड ।

असुरसुरनिशाचरोरगाणा-
मपि नरकिन्नरसिद्धचारणानाम् ।
सकलजनविलोकनैकचित्रं
स्फुटमिह कस्य विजृम्भते चरित्रम् ॥

अथवा किमन्येन । लङ्कानुभूतमेव नूतनं किमपि सरसरमणीयं चरितमुपदर्शयामि ते ।

लक्ष्मणः । आर्येताऽवधार्यतां नन्विदमयत्नोपनीतं प्रेक्षणीयम् ।

रामः । अनाकर्णितकेन ।

देवि त्वदीयमणिनूपुरजृम्भमाण
कोलाहलोत्तरलहंसकुलाकुलासु ।
वैदेहि लक्ष्मणपदाम्बुजलाञ्छितासु
गोदावरीपुलिनभूमिषु देहि दृष्टिम् ॥

लक्ष्मणः । क्व पुनरिह वैदेही क्व वा गोदावरी ।

रामः । विमृश्य । कथं प्रतारितोऽस्मि मतिविभ्रमेण । विचिन्त्य । अथवा कृतार्थीकृतोऽस्मि । अनेन हि मे ।

गोदावरीतीरतपोवनेषु
सौमित्रिसीतापरिपूर्णपार्श्वः ।
मुदा निमेषानिव यान्यनैषं
दिनानि तान्येव पुनः स्मृतानि ॥

पुनः सप्रत्याशम् । अपि नाम ।

तान्येव पक्ष्मलदृशो वचनामृतानि
भूयोऽपि कर्णचुलुकैरहमापिबेयम् ।
यैर्मामदर्शयदसौ विकचप्रमोदा
गोदावरीकमलवीचिविचेष्टितानि ॥

नेपथ्ये ।

तुह सुहअ उक्खिवन्ती तरङ्गसिअचामरं रहुमिअङ्क ।
धवलकमलादपत्तं धारइ गोलाणई सहत्येण † ॥

रामः । सहर्षम् । अये स एवायं प्रियतमायाः समालापः । तथाहि ।

परिमितकमनीयः कोमलो वाग्विलासः
सरसमधुरकाकुस्वीकृता कापि लेखा ।
ध्वनिरपि च विपञ्चीपञ्चमस्यानुवादी
श्रुतिरपि कलकण्ठीकण्ठसंवादभूमिः ॥

तत् क्व पुनः प्रेयसी । विलोक्य तत् कथमयमदृष्टचन्द्रलेखश्चन्द्रालोकः । ततः प्रविशति यथा निरूपयिष्यमाणा जानकी ।

रामः । ससंभ्रमम् । प्रिये * प्राप्तासीति गन्तुमिच्छति ।

लक्ष्मणः । रामं हस्ते धृत्वालमिह संभ्रमेण । विद्याधरोपनीतमिन्द्रजालकं खल्वेतत् ।

रामः । निर्वर्ण्य । अये क एष संनिवेशविशेषः । तथाहि ।

एकेनालम्बितेयं शिथिलभुजलताशोभिना शाखिशाखा-
हस्तेनान्येन चायं दिनकरकिरणक्रान्तकान्तिः कपोलः ।
एष स्रस्तो नितम्बे लुलति कचभरस्त्यक्तकाञ्चीकलापे
नेत्रोत्सङ्गे च बाष्पस्तबकनवकणैः पक्ष्मला पक्ष्मलेखा ॥

नूनमियमशोकशाखिशाखां सखीमिवालम्ब्य निद्रामुपागता । तथाहि ।

आमीलन्नवनीलनीरजतुलामालम्बते लोचनं
शैथिल्यं नवमल्लिकासहचरैरङ्गैरपि स्वीकृतम् ।

पुनर्विमृश्य । नूनमनया हृदयप्रमोददायी कोऽपि स्वप्नो दृष्टः । तथाहि ।

आलापादधरः स्फुरत् कलयति प्रेङ्खत्प्रवालोपमा
मानन्दप्रभवाश्च बाष्पकणिका मुक्ताश्रियं बिभ्रति ॥

सीता । उन्मील्य लोचने । हद्धिहद्धि अण्णारिसो मे जीअलोओ गोलाणई कहिं सा णीलुप्पलसामलो कहिं रामो लङ्का कहिं कहिं वा हद्धि रामेक्कजीविदा सीदेति मूर्छति † ।

रामः । अयि वसुधे ।

यां वै गर्भे त्रिजगदबलारत्नभूतां दधाना
लब्धार्थत्वात् जगति भवती रत्नगर्भा बभूव ।
तामुत्सङ्गे तव विलुलितां वीक्षमाणा च सीतां
द्राग् दीर्णासीत् न कथमथवा देवि सर्वंसहासि ॥

तदेनामभ्यर्थयामि तावदस्याः समुद्बोधनाय । अथवा किमभ्यर्थनया ।

निजामपि सुतां सीतां नेयमुद्बोधयिष्यति ।
निजेष्वपत्ये करुणा कठिनप्रकृतेः कुतः ॥

तदेनं तावदभ्यर्थयामि ।

---

* पथिकयोरिति पाठस्तु न साधीयान् । रामं हस्ते धृत्वालमिह संभ्रमेण विद्याधरोपनीतमिन्द्रजालकं खल्वेतत् इति लक्ष्मणस्य श्रीरामचन्द्रं प्रत्युक्तिरूपाग्रिमग्रन्थस्य संगत्यापत्तेः ।

† तव सुभग उत्क्षिपन्ती तरङ्गशीतचामरं रघुमृगाङ्क ।
धवलकमलातपत्रं धारयति गोदानदी स्वहस्तेन ॥

* प्राप्तेयं प्रेयसीति वा पाठः

† हा धिक् हा धिक् अन्यादृशो मे जीवलोको गोदानदी क्व सा नीलोत्पलश्यामलः क्व रामो लङ्का क्व क्व वा हा धिक् रामैकजीविता सीतेति ।

स्निग्धाशोकद्रुम निजसखीं तूर्णमुद्बोधयैनां
सिक्त्वासिक्त्वा किसलयकरस्रंसिना सीकरेण ।
एतस्याः किं नयनकमलस्यन्दिभिः सान्द्रसान्द्रै-
र्बाष्पोत्पीडैरनुदिनमपि त्वं न सिक्तालवालः ॥

कथमनाकर्णितकेन प्रत्याख्यातमनेन । अये कृतघ्नता पलाशिनः । विलोक्य कथं प्रकृतिप्रियंवदाया मे प्रियायाः सखीजनोऽपि न कश्चिदिह ।

प्रविश्य त्रिजटा । जानकि समाश्वसिहिसमाश्वसिहि ।

सीता समाश्वस्य । कहं पिअसही मे तिअडा * ।

त्रिजटा । सख्यनया ते मधुरया मुखरेखया तर्कयामि यत् किल प्रियं किमपि दृष्टवती भवती ।

सीता । अत्थि दाणिं हि मए सिविणअम्मि सअं गोलाणईए सहत्थकलिदतरङ्गचामरधवलकमलादवत्ताए परिचरिज्जन्तो अज्जउत्तो दिट्ठो † ।

त्रिजटा । तर्हि वर्धसे सुखस्वप्नः खल्वसौ ।

सीता । केरिसो मे रामेक्कचित्ताए सिविणअम्मि विस्सासो ‡ ।

त्रिजटा । तत् किं चिन्तास्वप्न इति संभावयसि । नहि । चिन्तास्वप्नोऽपि नैवमचुम्बितावगाही भवति ।

सीता । किं उण अचुम्बिदम् § ।

त्रिजटा । यन्न संभाव्यते ।

सीता ।

जं णहु संभावीअदि तंपि हला अत्थि अत्थ लोअम्मि ।
जं जीवइ जणअसुदा अपुलोअन्तीवि रामचन्दमुहम् ॥

ता किं इमिणा सिविणएण जीविदेण वा उवेक्खिदह्मि अज्जउत्तेण ‖ ।

रामः । शान्तं पापम् । अयि प्रिये हृदयस्थितापि मे कथमजानती वर्तसे हृदयवृत्तिम् ।

सीता । अथवा किंति हरमुउडमिअंके कलंङ्कमारोपयिस्सम् । जाणामि अज्जउत्तो अज्जवि अकलिदउत्तन्तो मे ¶ ।

रामः । प्रिये इदानीमुचितमनुसंदधासि ।

* कथं प्रियसखी मे त्रिजटा ।

† अस्तीदानीं हि मया स्वप्ने स्वयं गोदानद्या स्वहस्तकलिततरङ्गचामरधवलकमलातपत्रया परिचर्यमाण आर्यपुत्रो दृष्टः ।

‡ कीदृशो मे रामैकचित्तायाः स्वप्ने विश्वासः ।

§ किं पुनरचुम्बितम् ।

‖ यन्न खलु संभाव्यते तदपि हला अस्त्यत्र लोके ।
यत् जीवति जनकसुता अनालोकयन्त्यपि रामचन्द्रमुखम् ॥
तत् किमनेन स्वप्नेन जीवितेन वा उपेक्षितास्म्यार्यपुत्रेण ।

¶ अथवा किमिति हरमुकुटमृगाङ्के कलङ्कमारोपयिष्ये जानाम्यार्यपुत्रोऽद्याप्यकलितवृत्तान्तो मे ।

सीता । विमृश्य । कहं ।

वाआलेणवि कहिदा णाहं णाहस्स णेउररवेण ।
अहवा विहिविहुरबलात् तेणवि मूअत्तणं पत्तम् * ॥

नेपथ्ये । अये लङ्कानिवासिनः सावधानमवस्थीयतां नन्वितः ।

प्राकारमुन्नतमसीमबलो विलंघ्य
लङ्कामयं विशति कोऽपि कपिप्रवीरः † ।

उभे आकर्ण्य त्रासं नाटयतः ।

पुनर्नेपथ्ये ।

तत्सम्मुखं प्रचलति स्वयमक्षनामा
नन्वेष राक्षसपतेः कुपितः कुमारः ॥

सीता कहं उण सह महीअलेण वेवदिव्व असोअवणम् ‡ ।

त्रिजटा । विमृश्य ।

तुहिनकरमयूखैर्दीप्तकन्दर्पदर्प-
स्नपनकुलवधूटीं त्वामयं मुक्तलज्जः ।
अयमयमनुनेतुं रामचन्द्रैकचित्ता-
मपि स विपिनवीथीमेति लङ्काधिनाथः ॥

सीता त्रासं नाटयति । ततः प्रविशति रावणः । सीता पराङ्मुखी तिष्ठति ।

रावणः । अयि जानकि ।

कन्दर्पज्वरवेदनापरिपतद्बाष्पस्रुतिक्षालितं
स्वर्गश्रीकुचकुम्भकुङ्कुमरजस्स्तेयापराधोज्ज्वलम् ।
एतत् त्वां सुरदन्तिदन्तशिखरोल्लेखाङ्कविख्यापित-
प्रस्फूर्जच्चतुरन्तविश्वविजयं वक्षस्स्थलं याचते ॥

सीता । अनाकर्णितकेन । अवि णाम पुणोवि रामचन्दमुहचन्दं पुलोवइस्सम् § ।

त्रिजटा । जानकि एवं प्रलापिनि लङ्केश्वरे कर्णावधानमपि तावत् देहि ।

रामः । साधु त्रिजटे प्रलाप इत्युक्तवत्यसि ।

रावणः ।

यत् संतुष्टवतः पुरा पुरभिदश्छन्दोत्सवच्छेदिनो
न क्रोधादनमन्नवोद्धतशिरःश्रेणी नमन्त्यामपि ।
एतत् तद् दशमं शिरो मम नमत्त्वत्पादपाथोजयो-
रव्याजं मिथिलेन्द्रपुत्रि भवतीं प्रेमातुरं याचते ॥

* कथम्
वाचालेनापि कथिता नाहं नाथस्य नूपुररवेण ।
अथवा विधिविधुरबलात्तेनापि मूकत्वं प्राप्तम् ॥

† प्राप्तो रुषाकर्णितदृक् कपिवीर उच्चैरिति वा पाठः ।

‡ कथं पुनः सह महीधरेण वेपत इवाशोकवनम् ।

§ अपि नाम पुनरपि रामचन्द्रमुखचन्द्रं विलोकयिष्ये ।

सीता । संस्कृतमाश्रित्य ।

निजे पाणौ कृत्वा बकुललतिका † बालमुकुलं
ययोश्चक्रे गुञ्जन्मधुपमवतंसं रघुपतिः ।
अपीमौ कर्णौ मे वचनमिदमाकर्ण्य न कथं
विशीर्णौ युक्तं वा चरितमिदमन्तःकुटिलयोः ॥

रावणः। अयि जानक्यवलोकनमात्रेणापि तावन्मां संभावय।

सीता । अपि निशाचरैतावत्प्रार्थनाभङ्गलाघवात् कथं राघवादपि न बिभेषि ।

रावणः । अये क एष राघवो नाम यं किल जनो राम इति जल्पति । विहस्य ।

कामः कियानसिलतानिहितैकबाहु-
क्रीडार्दितत्रिभुवनस्य दशाननस्य ।
रामस्तु केवलमयं सुमुखि त्वदर्थे
मां हन्ति हन्त न चिरान्निशितैः शरौघैः ॥

सीता । सत्यमेतत् ।

रावणः । स्वगतम् । कथमन्यदेव किमप्युक्तवानस्मि । तदेव विपरीतं पठित्वायि जानकि तावन्मां जीवय नयनामृतेन ।

सीता । तदा त्वामपि लङ्केश विलोकयिष्यति जानकी ।

रावणः । सप्रत्याशं तत् कथय समयं । अयं हि ।

मन्दोदरीमपि विमुञ्चति राज्यमेत-
दप्युन्मदं तव पदाब्जतले करोति ।
किं जल्पितेन बहुना सुमुखि त्वदर्थे
स्वान्युच्छिनत्त्यपि शिरांसि पुनर्दशास्यः ॥

सीता । अपि खद्योतभासापि समुन्मीलति पद्मिनी ।

रावणः । सक्रोधम् । आः पापे यावत् किल तपनखद्योतयोस्तावदेवान्तरं रामरावणयोः । तद् इयं हन्यस इति खड्गमुत्पाटयति ।

रामः ।

हा जानकि त्वमधुनासि कथं भवित्री

सविचिकित्सम् ।

धिग् दैवतं तव सुदारुण एष पाकः ।

सक्रोधम् ।

आः पाप राक्षसकुलाधम संहृतोऽसि

ससंभ्रमम् ।

हे वत्स लक्ष्मण धनुर्धनुरेष कालः ॥

लक्ष्मणः । आर्य किमिदमैन्द्रजालिकविलोकनादलीकमेव संभ्रम्यते ।

रावणः । अयि जानक्ययमसावुदीर्णकरालकरवालः कालभुजङ्गः । तदिदानीमपि दशकण्ठभुजाश्लेषभेषजमनुजानीहि ।

सीता ।

विरमविरम रक्षः किं मुधा जल्पितेन
स्पृशति नहि मदीयं कण्ठसीमानमन्यः ।
रघुपतिभुजदण्डादुत्पलश्यामकान्ते-
र्दशमुख भवदीयान् निष्कृपाद्वा कृपाणात् ॥

रावणः । किमतः परं कालक्षेपेण । तदहमिदानीमस्याः कण्ठरुधिरेण कालिकामर्चयामीति खड्गधारां परामृशति ।

रामः । अहह ।

विधिरकरुणः स्फीतंस्फीतं तमः परिजृम्भते
जलधिसलिले मग्नं विश्वं युगं परिवर्तते ।
कुवलयदलस्रक्संश्लेषोत्सवैकपदे पदं
यदयमदयः सीताकण्ठे करोति कृपाणकः ॥

पुनर्विभाव्य हन्त भोः ।

चान्द्रीं लेखां दशति दशनैर्दारुणः सैंहिकेयो
नव्यां वल्लीं दवदहनकश्चान्दनीं दन्दहीति ।
अप्युन्मत्तः कुवलयमयीं मालिकामालुनीते
मूलादुन्मूलयति नलिनीं दुष्टहस्ती करेण ॥

सीता ।

चन्द्रहास हर मे परितापं
रामचन्द्रविरहानलजातम् ।
त्वं हि कान्तिजितमौक्तिकचूर्णं
धारया वहसि शीतलमम्भः ॥

रावणः । कः कोऽत्र भोः । सत्वरं मम करे कपालपात्रमर्प्यतां येनास्याः कण्ठरुधिरं प्रतीच्छामीत्यशोकविटपान्तराले हस्तं प्रसार्य कथं न्यस्तमेव केनापि मम करतले कपालम् । विलोक्य सचमत्कारम् । अये न कपालमेतत् किन्त्वशस्त्रच्छिन्नं शिरएव कस्यापि । विमृश्य कस्य पुनरिदम् । नूनमक्षकुमारस्येति मूर्छितः पतति ।

त्रिजटा । अयि लङ्केश्वर समाश्वसिहिसमाश्वसिहि ।

रावणः । समाश्वस्य नूनमिदं तस्य दुष्टकपेर्विजृम्भितम् । तेन तमेव तावदग्रतः पातयामीति निष्क्रान्तः ।

रामलक्ष्मणौ । सहर्षमहो संविधानवैदग्ध्यो ।

त्रिजटा । सीतामालिङ्ग्य सखि पुण्येन जीवितासि ।

सीता । अपुण्णेणेति भणिज्ज * ।

त्रिजटा । कथमिव ।

सीता कहं उण तं अपुण्णं ण होइ जं किर रामचन्द-

---

† कमललतिकेति वा पाठः ।

* अपुण्येनेति भण ।

विरहतावणिव्वापणीए चन्दहासधाराए उवेक्खिदह्मि । ता किं इमिणा जीविदेण इह दारुसंचअम्मि अग्गिं पज्जालेहि जत्थ इमाइं अङ्गाइं सीअलअम्मि * ।

त्रिजटा । शान्तं पापं । नन्वचिरादेव निजाङ्कानाम् ।

हिमकरकिरणकरम्बितमरकतमयपीनपट्टकप्रतिमे ।
मलयजपरागरजसि रामोरसि तापमपहरसि ॥

सीता । हला किं इमिणा अलीअजप्पिदेण । सव्वं जेव्व अणलपवेसेण ववसिदह्मि ता उवणेहि मे अंगालखण्डअं † ।

रामः । हन्त भोः । कथमपि शार्दूलमुखात् मुक्तायाः पुनरपि शबरवागुरामवतीर्णायाः कुरङ्गवध्वा भङ्गीमङ्गीकृतवती जानकी ।

त्रिजटा । निर्गत्य प्रविश्य चासुलभानलोयं प्रदेशः ।

रामः । सहर्षम् । त्रिजटे दिष्ट्या रचितस्त्वया रामः ।

सीता । संस्कृतमाश्रित्याशोकं प्रति ।

अलमकरुणं चेतः ‡ श्रीमदशोकवनस्पते
दहनकणिकामेकां तावन् मम प्रकटीकुरु ।
ननु विरहिणां संतापाय स्फुटीकुरुते भवान्
नवकिसलयश्रेणीव्याजात् कृशानुशिखावलिम् ॥

विलोक्य सहर्षम् । हला पेक्खपेक्ख निवडिदं दाव इमस्स सिहरादो अङ्गालखण्डअं § । इत्युपसृत्य ग्रहीतुमिच्छति ।

रामः । अये कथमशोकोऽपि ममायं शोकतां गतः ।

लक्ष्मणः । आर्यानुपपन्नमिदं यत् किल तरुशिखरमङ्गारखण्डकमुद्गिरति ।

रामः । किं न संपादयेत् वत्स रामस्य विधिवैधुरी ।

सीता । अङ्गारखण्डं हस्तेनादत्ते ।

रामः ।

अनल नलिनकोमले करेऽस्याः
स्फुरदरुणोत्पलकुड्मलोपमः स्याः ।

विमृश्य ।

चरितमुचितमस्ति वा कुतस्ते
ननु भुवने विदितोऽसि कृष्णवर्त्मा ॥

सीता । हस्ते गृहीत्वा सविषादम् । कहं मह अपुण्णेण अग्गीवि सीअलो संवुत्तो । निपुणं निरूप्य सचमत्कारम् अये अङ्गालखण्डअं ण हु एदं अवि उण पम्मरात्र्अरअणखण्डअम् * ।

त्रिजटा । अये पुण्यवतामग्निरपि रत्नं भवतीति प्रवादः सत्य एव संवृत्तः ।

सीता । पुनर्विलोक्य । कहं सा इमा रअणमुद्दिआ † । पुनः संस्कृतमाश्रित्य मुद्रिकां प्रति ।

या शैशवावधि मनोरमरामचन्द्र-
हस्ताङ्गुलिप्रणयिनी सुभगा सुवृत्ता ।
अन्येव सा जनकराजसुता कथं नु
लङ्कामुपागतवती मणिमुद्रिकेयम् ॥

पुनः सादरं कराङ्गुलिकिसलयेन लालयन्ती । अये रअणङ्गुलीअ अवि दाव कुसलं सलक्खणाणं रामचंदचलणाणं ‡ । पटाक्षेपेण प्रविश्य हनूमान् कुशलं देवि कुशलम् ।

सीता । अमिअमुह कोसि तुमं § ।

हनूमान् ।

तारापतेरनुचरो रघुनन्दनस्य
दूतः सुतोऽस्मि मरुतः प्रथितो हनूमान् ।
त्वां हन्तुमुद्यतवतो दशकन्धरस्य
न्यस्तं करे निभृतमक्षशिरो मयैव ॥

रामः । अहो कथमिदं हनूमन्नामधेयस्य मद्बान्धवस्य विलसितमेतत् ।

लक्ष्मणः । अहो सचमत्कारता संविधानस्य ।

सीता । अयि भद्दमुह को उण इमो तारावई ‖ ।

हनूमान् ।

यो वालिनः शौर्यनिधेरमित्रं
त्रैलोक्यबन्धोस्तपनस्य सूनुः ।
रामस्य पादाब्जतलाभिवर्ती
सुग्रीवनामा कपिचक्रवर्ती ॥

सीता । केण उण नरवाणराणं एरिसं सक्खित्तणं णिम्मिदम् ¶ ।

हनूमान् । रामबाणेनैव ।

वालिने विसृजता धनुरङ्कं
नाकलोकललनाकुचकेलिः ।

---

* कथं पुनस्तत् अपुण्यं न भवति यत् किल रामचन्द्रविरहतापनिर्वापणया चन्द्रहासधारया उपेक्षितास्मि । तत् किमनेन जीवितेन इह दारुसंचये ऽग्निं प्रज्वालय यत्रेमान्यङ्गानि सीतलयामि ।

† हला किमनेनालोकजल्पितेन सर्वमेवानलप्रवेशेन व्यवसितास्मि तदुपनय मेऽङ्गारखण्डकम् ।

‡ कुरु सकरुणं चेत इति वा पाठः ।

§ हला पश्यपश्य निपतितं तावदस्य शिखराद‌ङ्गारखण्डकम् ।

* कथं ममापुण्येनाग्निरपि शीतलः संवृत्तः । अयेऽङ्गारखण्डकं न खल्वेतत् अपि पुनः पद्मरागरत्नखण्डम् ।

† कथं सेयं रत्नमुद्रिका ।

‡ अये रत्नाङ्गुलीयक अपि तावत् कुशलं सलक्ष्मणयो रामचन्द्रचरणयोः ।

§ अमृतमुख कोऽसि त्वम् ।

‖ अयि भद्रमुख कः पुनरयं तारापतिः ।

¶ केन पुनर्नरवानराणामीदृशं सखित्वं निर्मितम् ।

तारया सममदीयत चास्मै
वानरेन्द्रपदवीमणिमौलिः ॥

सीता । कहेहि दाव अवि णाम मह मन्दभाइणीए किदे दुब्बलो दाणिं किंपि रहुणाहो* ।

हनूमान् । किमपीति किमुच्यते । इदानीं हि ।

बहुलपक्षशशीव दिनेदिने
रघुपतिः कृशतामुपयाति सः ।

सीता । हद्धिहद्धि † ।

हनूमान् ।

कुवलयप्रतिमद्युतिरस्य तु
प्रविकसत्यनुभाववशंवदा ॥

सीता । दाणीं किमपि उज्जीविदह्मि ‡ ।

हनूमान् । अयि देव्याकर्णय तावत् यत् संदिष्टं देवेन देव्याः ।

हिमांशुश्चण्डांशुर्नवजलधरो दावदहनः
सरिद्वीचीवातः कुपितफणिनिश्वासपवनः ।
नवा मल्ली भल्ली कुवलयवनं कुन्तगहनं
मम त्वद्विश्लेषात् सुमुखि विपरीतं जगदिदम् ॥

अपिच ।

कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं
को जानीते निभृतमुभयोरावयोः स्नेहसारम् ।
जानात्येकं शशधरमुखि प्रेमतत्त्वं मनो मे
त्वामेवैतत् चिरमनुगतं तत् प्रिये किं करोमि ॥

सीता । लज्जते ।

त्रिजटा । सखि त्वमपि रघुपतेः किमपि सन्देशं प्रत्यभिज्ञानं च समर्पय ।

सीता । इमो मे पडिसन्देसो ।

बहलगलन्तणअणजलणिब्भरपज्जाउलावि मह दिट्ठी ।
तुह सुहअ वअणससहरलावण्णरसं पिपासेदि § ॥

चूडारत्नमाकृष्य हनूमतः करे समर्पयन्ती । अयि चूडारअण ।

विच्छालअ णिअमङ्गं रअणीअरदिट्ठिपंसुपंसुलिअम् ।
रहुवइपअणिम्मलणहरअणीअरजोह्णीरणिअरम्मि || ॥

हनूमान् । देव्यनुजानीहि त्वरयति मां रामचन्द्रचरणदर्शनोत्कण्ठा ।

सीता । सबाष्पगद्गदम् । अय्यकारणसिणिद्ध पडिगदे तुह्मि पुणोवि को मह कहिस्सदि रहुणाहस्स पउत्तिम् * ।

हनूमान् । अयि देवि दिष्ट्या स्मारितोऽस्मि । नन्विदं ते संदिष्टं देवेन देव्याः ।

मा ताम्य तामरसपत्रविशालनेत्रे
विख्याप्यते पुनरपि त्वयि मत्प्रवृत्तिः ।
सौमित्रिकार्मुकगुणध्वनिभिर्गभीरै-
स्तैः किंच राक्षसवधूरुदितैरधीरैः ॥

नेपथ्ये ।

हत्वा कथं चिदपि राजकुमारमक्षं
रे वानरापसद कुत्र पलायितोऽसि ।
त्वां हन्तुमिच्छति दशाननशासनेन
दर्पोद्धतो धृतधनुर्ननु मेघनादः ॥

हनूमान् । देवि कृतकार्योऽस्मि तदलमतः परमात्मापलापेन । तदिदं प्रणम्यसे आपृच्छ्यसे च ।

सीता । अये पवणणंदण अणाआसेण इमं दुण्णिसाअरसाअरं अदिक्कमेहि † ।

हनूमान् । अयं मूर्ध्नि गृहीतो देव्याः प्रसाद इति निष्क्रान्तः ।

सीता । हला तिअडे खेअरी भविअ पेक्ख दाव इमस्स उत्तन्तम् ‡ ।

त्रिजटा । तथेति निष्क्रान्ता ।

नेपथ्ये ।

बाणौघानेकवीरः कलयति च रुषा मेघनादेन मुक्तान्

सर्वे हर्षं नाटयन्ति ।

नेपथ्ये ।

बद्धोऽयं राक्षसेन ज्वलदनलशिखादीप्तपुच्छः कृतश्च ।

सर्वे विषादं नाटयन्ति ।

पुनर्नेपथ्ये ।

क्रामन्नट्टालिकानामुपरि कृतपदो दन्दहीत्येष लङ्कां

सर्वे हर्षविषादौ नाटयन्ति ।

पुनर्नेपथ्ये ।

---

* कथय तावत् अपि नाम मम मन्दभाग्यायाः कृते दुर्बल इदानीं किमपि रघुनाथः ।

† हा धिक् हा धिक् ।

‡ इदानीं किमपि उज्जीवितास्मि ।

§ अयं मे प्रतिसंदेशः ।

बहलगलन्नयनजलनिर्भरपर्याकुलापि मम दृष्टिः ।
तव सुभग वदनशशधरलावण्यरसं पिपासति ॥

|| अयि चूडारत्न ।

अपि क्षालय निजमङ्गं रजनिकरदृष्टिपांशुपांशुलितम् ।
रघुपतिपदनिर्मलनखरजनिकरज्यौत्स्नीरनिकरे ॥

* अय्यकारणस्निग्ध प्रतिगते त्वयि पुनरपि को मम कथयिष्यति रघुनाथस्य प्रवृत्तिम् ।

† अये पवननन्दन अनायासेनेमं दुर्निशाचरसागरमतिक्रमस्व ।

‡ हला त्रिजटे खेचरी भूत्वा प्रेक्षस्व तावदस्य वृत्तान्तम् ।

अक्क्रान्तोऽयं पयोधेः पयसि शमयति स्वाङ्गलग्नं कृशानुम् ॥

सर्वे हर्षं नाटयन्ति ।

पुनर्नेपथ्ये । अहो आश्चर्यमाश्चर्यम् ।

वेलाद्रेरस्य हेलाक्रमणपरिणतस्तुङ्गमाक्रम्य शृङ्गं
मौलिं पूर्वाचलस्य द्युमणिरिव नभो लङ्घयत्यम्बुराशिम् ।
वेगप्रोद्भूतवातप्रतिहतसलिलोन्मुक्तगम्भीरगर्भ-
व्यक्तीभूतोरगेन्द्रस्तुतिशतविकसत्कीर्तिहारो हनूमान् ॥

सीता । नेपथ्याभिमुखमवलोक्य । हला तिअडे अवतिण्णासि महीअलं ता पिअंवदाए तुह आलिङ्गेमि अङ्गाइं * इति निष्क्रान्ता ।

रामः । प्रिये मामपि प्रतीक्षस्व ।

लक्ष्मणः । आर्य किमिदं लङ्कावृत्तान्तानुसारिणि विद्याधरप्रणीते महेन्द्रजाले पुनः संभ्रम्यते ।

रामः । तर्हि दिष्ट्यास्माभिर्निजविक्रमकथापराङ्मुखस्यापि हनूमतश्चरितरहस्यमाकलितम् ।

नेपथ्ये । अये रघुनाथ अयमसौ ।

दर्पोद्धूतं दधिमुखं तरसा निपीड्य
पीत्वा चिरं मधुवने स्वरसं मधूनि ।
द्रष्टुं समेति भवतः पदपद्मलीलां
नीलाङ्गदप्रभृतिभिः सहितो हनूमान् ॥

रामः । वत्साकर्णितं तदागच्छ कृतकार्यं हनूमन्तं प्रत्युद्गच्छाव ।
इति निष्क्रान्ताः सर्वे ॥

॥ षष्ठोऽङ्कः ॥

* हला त्रिजटे अवतीर्णासि महीतलं तत् प्रियंवदायास्तवालिङ्गयाम्यङ्गानि ।

॥ श्रीः ॥

॥ अथ नरेश्वरपरीक्षोपसंहारः ॥

तदेवं सकलश्रुतिप्रमेयपरिबृंहितशैवसिद्धान्तनिरूपणपरो निखिलविद्वज्जनमानसाह्लादैकजनको नरेश्वरपरीक्षाभिधो ग्रन्थः प्रयोजनानुकूलपरिमितार्थप्रकाशिकया प्रकाशाभिधानया सद्व्याख्यया संवलितः पुस्तकान्तरालाभादुरीकृतैतदादर्शवर्तिपाठेन मया परमकारुणिकपरमेश्वरप्रसादादेव मुद्रणविधया परिसमाप्तिं नीतः । मुद्रणावसर एव चाधिवङ्गदेशीयाक्षरमेकमादर्शान्तरं वामनशास्त्रिप्रयत्नवशादुपलब्धम्, परंतु तदपि सर्वथा पूर्वोपलब्धादर्शमूलभूतादर्शात एवावतारितमवधारितमिति तदवाप्यापि न मदीया मनस्तुष्टिरासीदिति न प्रायस्तदनुरोधोऽकारि मयेति ।

अथैतत्पुस्तकपाठान् सातिशयमनुरुन्धता मया, कदाचित् पुस्तकान्तरं प्राप्यायमेव पाठः पुस्तकस्थोऽयं च बलात् प्रकल्पित इति कश्चिन्मा वादीत्, इति भिया यथापुस्तकपाठस्थित्यैव प्रायः पाठाः स्थापिता न पुनरुपकल्पिता इति ।

अत्र च काण्डत्रयात्मके शैवसंदर्भे, प्रथमे काण्डे मूलभूतकारिकाः सार्धचतुःसप्ततिमिताः, द्वितीये काण्डे सार्धैकत्रिंशन्मिताः, तृतीये तु सार्धैकाशीतिशतं कारिकाणामिति, यद्यपि तृतीये काण्डे मूलभूतकारिकातः प्राक्स्थापितानामङ्कानां संकलनया संख्याद्वयन्यूनता भवति, तथापि कुतश्चित् कारणाद्विंशतितमे काशीविद्यासुधानिधेः पत्रपुञ्जे त्रिपञ्चाशत्तममूलकारिकातोऽनन्तरम्, "संदिग्धं प्रत्यभिज्ञानम्,, इत्याद्येका कारिका, तथैकविंशतितमे पत्रपुञ्जे द्विषष्टितममूलकारिकातः पश्चात् "एतत् प्रतिविध्यते,, इत्यवतरणानन्तरम्, "कोटिशो मरणं दृष्ट्वा,, इत्याद्येका च निरङ्कैव जाता, तत्संकलनया चोक्तचरसंख्याका एव तृतीयेऽपि भवन्तीति ।

अथ चेदं कठिनमपि शैवदर्शनमनेककार्यव्यासक्तचेतस्कतया प्रचुरावसरमलभमानेन मया टिप्पण्यादिना न व्याख्यायि, समग्रसहस्ररश्मिनिपीतस्यैतस्य शैवसिद्धान्तसुधाकरस्य द्वित्रादर्शकलावशेषस्य प्रकाशयिष्यमाणाभिर्बह्वादर्शकलाभिः पूरयितव्यत्वस्यैवमत्तात्पर्यविषयत्वात्, मूले रचिते शाखादिकं सुरचितं भवतीत्यनन्तरमपि व्याख्यातुं शक्यत्वात् ।

अथातः परं सर्वजनमनोमोदनं चमत्कृतिसुधामयं संदर्भं लब्धावसरे काशीविद्यासुधानिधौ मुद्रयिष्य इति गुणैकपक्षपातिभिः सुधीभिराकलनीयमिति शिवम् ॥

॥ सांख्यशास्त्रप्रधानाध्यापको बेचनरामशर्मा ॥

# THE SÁHITYA-DARPAṆA,
OR
# MIRROR OF COMPOSITION.

(*Continued from page 234*)

TEXT.

No. 757. The Commixture again is, when of two or more ornaments united, (1) one is principal and the others are subordinate to it, * or (2) when they reside in the same place, or (3) when there is a dubiousness about them,—being *thus* threefold.

COMMENTARY.

*a* The case of the Principal and Subordinate Ornaments; as—

* The *Kávya-prakáśa,* with much greater convenience, holds this variety to consist in the *mutual* subserving of ornaments. Our author's [illegible] imply that one of the ornaments, in such cases, is ultimately the principal, the others being subordinate thereto.

"Under the form, methinks, of that mantling silk-white slough that had slipped, through the force of pulling, from the body of the royal Serpent (Vásuki, employed as the string), long did love-quick Mandákiní cling to his feet* (in kneading them), as if to remove the pain that Ocean had suffered in the churning"

Here, the nature of Mandákiní (the celestial Ganges) is superimposed upon the slough, the real nature whereof is denied so we have the Concealment (§683) This is subordinate to Paronomasia or Coalescence (see § 643), inasmuch as it gives rise to, *or implies*, the verbal identification of the actual fact of Mandákiní's† clinging to a portion of the *personified* ocean, with clinging to its feet (by means of the pun in the word *páda* which means 'part' as well as 'foot') The Paronomasia is subordinate to the Hyperbole (§693), consisting in the said identification. The Hyperbole is subordinate to the Poetical Fancy (§686), contained in the clause—'as if to remove the pain that Ocean had suffered in the churning.' The Poetical Fancy is subservient to the Modal Metaphor (§703), inasmuch as it implies Ocean and Mandákiní behaving *respectively* like a male and a female personage.

*b* Or for example:—

"Fair Evening glows (with passion or redness—*anurága*) and Day is *ever* before her, still,—O wonderful is the decree of fate—they are never united"

Here the Modal Metaphor is subordinate to the Peculiar Allegation (see §717).

*c.* The Commixture of Dubiousness; as—

"Lo! ‡ the Lunar Orb shines in the air, dispersing the outspreading gloom, causing exquisite joy to the eyes."

Here, it is dubious whether there is a Hyperbole in the shape of the introsusception of a fair face into the moon; or a Metaphor consisting in the superimposition of the nature of the moon *upon a face* intimated by *the pronoun* 'this;' or an Equal Pairing (§695), a face (intimated by 'this') and the lunar orb being both subjects of discourse and associated with the same attribute of destroying (internal or external) gloom &c.; or an Illuminator (696§), the moon not being in question; or a Modal Metaphor (§703), the face being not in question and understood from a sameness of attribute; or an Indirect Description (§706), the face being in question, and understood through the description of the moon which is not in question; or a Periphrasis (§708), the time (night) that excites love being meant to be described through the description of the moon, *the rise of* which is the effect thereof. Thus there being a doubtful possibility of each of these several ornaments, we have here the Commixture of Dubiousness.

*d* Or, to take another example (*—if our dubious fancies with respect to the former one seem too far-fetched—*) in the sentence "I see the moon-face," it is doubtful whether there is a Simile, it being meant that the face is LIKE the moon; or a Metaphor, the meaning being that it IS the moon.

*e.* When however there is a reason for one of the ornaments, and another, against the others, or one only of such two reasons, there the doubt does not exist For example, in *the sentence* "He kisses the moon-face," kissing being consistent with a face and inconsistent with the moon, it is a reason for our recognizing a Simile here, and against our admitting a Metaphor In the example "The moon-face shines," the attribute of shiningness is a reason for the Metaphor, but being tropically possible in a face, it is not against the Simile In the sentence "Lakshmí (Prosperity), O royal Náráyana, embraces thee firmly," a woman's embrace of one LIKE her lord being improper, the embrace of a king, *as such*, by Lakshmí is impossible and so thwarts a Simile, but the embrace of Náráyaṇa (her lord) being possible, there is a Metaphor; *that is to say, the king is not* LIKENED *to Náráyana but* IDENTIFIED *with him.* Similarly in 'The lotus-face of the fawn-eyed lady shines with tremulous eyes,' the eye, which is possible (only) in a face, indicates a Simile and thwarts a Metaphor, being impossible in a lotus. So in such a phrase as सुन्दरं वदनाम्बुजं (the beautiful lotus-face) where the common attribute (*viz* beauty) is mentioned, since the compound वदनाम्बुजं (lotus-face) cannot imply a similitude, according to the grammatical rule उपमितं व्याघ्रादिभिः सामान्याप्रयोगे, *Panini* II, 1, 56, S. K. p. 356, (A word denoting an object compared is compounded with *vyághra &c*, when the common attribute is not mentioned), the Simile is debarred, and consequently the compound implies a Metaphor, as belonging to that class which begins with the word *mayúra-vyanśaka* (*Páṇ* II, 1, 72, S. K. p 366).

*f.* The *case of the* Residence of Ornaments in the Same Place, or the Identical Position, is exemplified in the following stanza of mine:—

कटाक्षेणापीषत् क्षणमपि निरीक्षेत यदि सा
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः ।
सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः
परीरम्भारम्भः क इव भविताम्भोरुहदृशः ॥

(If even for a moment she glances at me with the corner of her eye, ecstatic joy bursts forth in my heart and shuts out *the consciousness of* all external objects. What raptures then would flow from the embrace of her of the lotus-eyes, while the vesture falls off from those swelling breasts that quiver *with joy.*)

* Or—with reference to the actual fact—*to a part of* the ocean, which the word पादमूले also means, according to the Commentator.

† Or, rather, the slough's, feigned as such.

‡ *Literally* 'this' (idam.)

द्वितीये क्रियाधिकारे भविष्यति । यत्तु परेण व्यतिरिक्तं ज्ञानं कणादसांख्यादिदृष्टौ निराकृतं, तदभिमतमेवग्रन्थकृतइति तद्दूषणान्तमेव । तत्र श्लोकद्वयेन ज्ञानस्य स्वसंवेदनरूपतया ऽनुभवस्य स्मृतावप्रकाशत्वं दर्शितं संस्कारजत्वे ऽपि । ततः श्लोकद्वयेन स्मृतेर्भ्रान्तित्वमाशङ्कापूर्वकं पराकृतम् । ततस्तृतीयेन प्रसङ्गात्सर्वाध्यवसायानामपि भ्रान्तित्वाशङ्का शमिता । ततः सत्यपि संस्कारे स्मृत्यनुपपत्तौ व्यवहारोच्छेद इति श्लोकेनोक्त्वा स्वपक्षे तदुपपत्तिरिति श्लोकेनोक्तमिति तात्पर्यम् ॥

ग्रन्थार्थस्तु निरूप्यते ।

(१) सत्यं किं तु स्मृतिज्ञानं पूर्वानुभवसंस्कृतेः ।
जातमप्यात्मनिष्ठं तन्नाद्यानुभववेदकम् ॥

पूर्वपक्षमध्यास्मया तावद्वहूङ्गीकर्तव्यमिति सत्यमित्यनेन दर्शितम् । यत्तु नाङ्गीकर्तव्यं तद्दूष्यतइत्येतदुक्तं किं त्वित्यनेन विशेषाभिधायिना । इह स्मृतौ विषयमात्रस्य प्रकाशो न समर्थनीयो वर्तते, यः संस्कारादेव सिद्धेत् । किं त्वनुभवप्रकाशेन विना तदित्येवंरूपा कथं स्मृतिः स्यात् । कथं च तया विना ऽभिलाषेण व्यवहारः स्यात् । अनुभवेन ह्यस्य सुखसाधनता निश्चिता । तत उपादानं, तत्र पूर्वानुभवजनितात्संस्कारादेतावज्जातम् । यद्यपि तज्ज्ञानं विषयेण न जनितं तथापि तद्विषयमिति न चैतावता किं चित् । आत्मनिष्ठे स्वप्रकाशज्ञाने विषयस्यैवानुभवस्य प्राच्यस्याप्रकाशनात् ॥

ननु संस्कारजत्वादेव प्राच्यमनुभवमपि विषयीकुरुतां स्मृतिरित्याशङ्क्याह ।

(२) दृक्स्वाभासैव नान्येन वेद्या रूपदृशेव दृक् ।
रसे संस्कारजत्वं तु तत्तुल्यत्वं न तद्गतिः ॥

दृग्ज्ञानं,तच्च जडाद्विभिद्यते स्वप्रकाशैकरूपतया, जडो हि प्रकाशात्पृथग्भूतो वक्तव्यः, तेन दृक्स्वाभासा,आभासः प्रकाशमानता सा स्वं रूपमव्यभिचारि यस्याः स्वस्य चाभासनं रूपं यस्याः सत्यपि बाह्ये तच्छरीरसङ्क्रान्तं न प्रकाशनं ज्ञानस्य रूपं भवितुमर्हति । * परप्रकाशनात्मकनिजरूपप्रकाशनमेव हि स्वपरप्रकाशत्वं ज्ञानस्य भण्यते । "ननु स्वाभासमेव सत्तदनुभवज्ञानं स्मरणे † भासिष्यते मेत्याह„ । "नान्येन वेद्या„, परन्तु यदि दृग्भासेत तर्हि न सा स्वाभासा * इदमेव हि स्वप्रकाशस्य लक्षणम् । स्वयं हि यदि प्रकाशते । तदा परेण सहासम्बन्धात्सम्बन्धप्राणा † कथं परत्रेति सप्तमी सङ्गच्छताम् । तथा च रूपज्ञानेन रसे दृग्रसविषयं ज्ञानं न वेद्यते । एवं हि चक्षुषैव रसः फलतो गृहीत एव स्यात् । "ननु यदि नाभाति स्मरणे ऽनुभवः । किं तर्हि संस्कारेण कृतं स्यात् । रूपज्ञानं न रसज्ञानजात्संस्काराज्जातं तत्कथमयं प्रसङ्गः । तस्मात्संस्कारएव भवत्सम्भावितदोषभङ्गाय प्रभवेत्„ । नैतत् । यतोह्यसौ तत्संस्कारसंस्कृतात्समनन्तरप्रत्ययादुत्थितः स्मृतिबोधः । तेन तत्सदृशो भवतु शाखासचिवेश इव पूर्वसचिवेशतुल्यः । न तु यो यत्संस्काराज्जातः स तस्य वेदनस्वभावो भवतीति युक्तं । सदृशत्वस्यापि गतिरवगमः कथम् । नह्यनुभवज्ञानं सादृश्यं गमयति नापि स्मृतिज्ञानं परस्परमसंवेदने द्वयनिष्ठसादृश्याध्यवसायायोगात् । अन्यस्य च तदुभयवेदनरूपस्याभावादिति संस्कारात्परं सविषयतामात्रं स्मृतेः सिद्धं, न त्वनुभवविषयत्वं नाप्यस्य विषयस्य पूर्वानुभवविषयीकृतत्वमिति निश्चय एषः ॥

ननु यदि स्मृतिज्ञाने ऽनुभवस्य सत्यतः प्रकाशः स्यात्तन्मुखेन च तद्विषयस्य तदा भवेद्भवदुक्तेरवकाशः । यावता स्मृतिर्विकल्परूपत्वात्केवलमप्रकाशमानमेवानुभवं तद्विषयं चाध्यवस्यति । तदियं भ्रान्तिस्वभावा तत्र को ऽयं निर्बन्धः । तदेतद्दूषयति शङ्कमानत्वेन ।

(३) अथातद्विषयत्वे ऽपि स्मृतेस्तदवसायतः ।
दृष्टालम्बनताभ्रान्त्या

न तद्दर्शनं नापि तद्विषयः स्मृतेर्विषयस्तथापि तूभयमध्यवसीयते भ्रमरूपतया स्मृतेः ॥

एतन्निराकरोति ।

(४) तदेतदसमञ्जसम् ॥

अत्र कारिकयोपपत्तिमाह ।

(५) स्मृतितैव कथं तावद्भ्रान्तेश्चार्थस्थितिः कथम् ।
पूर्वानुभवसंस्कारापेक्षा च किमितीष्यते ॥

अनुभूतस्यानुभवप्रकाशितस्य विषयस्याप्रमोषो ऽनपहारस्तथैव प्रकाशनं यदेतत्स्मृतेरात्मीयं रूपं तथा प्रकाशनाभावे

---

* परप्रकाशनात्मकं यन्निजरूपं तत्प्रकाशनमित्यर्थः । तत्र परस्य प्रकाशने यः संसर्गः सविषयित्वव्यपदेशभाक् । यश्च तेन संसर्गेण विषयसंपृक्ते प्रकाशने स्वस्यैव संबन्धः स भेयितेत्युच्यते । ततश्च भेयित्वविषयित्वाभ्यां स्वेन विषयेण च संपृक्तत्वं प्रकाशनस्य स्वपरप्रकाशत्वमित्युक्तं भवति ।

† स्वप्रतियोगिकं स्वस्मिन् भेयत्वं ज्ञानान्तरभेयत्वेन न विरुणद्धि, तेन स्वाभासस्याप्यनुभवस्य स्मरणभास्यत्वं संभाव्यतइति भावः ।

* ज्ञानान्तरभास्यत्वासमानाधिकरणस्वभास्यत्वमेव स्वाभासत्वमित्याशयः । "ननु घटं जानामीत्यनुव्यवसायभास्यत्वस्य घटइत्याकारकव्यवसाये स्वाभासत्वे सत्त्वेनाव्याप्तिरिति चेत्„ मैवम् । व्यवसाये ऽनुव्यवसायविषयत्वस्यैव स्वीकारात्, अभिलापदर्शनेन तस्यैवौचित्याच्च, भेयत्वस्य कल्पकाभावादिति निरूपितं पूर्वपक्षविवृतिटिप्पण्याम् ।

† भेयत्वं च तादात्म्यतुल्ययोगक्षेममतस्तस्य नाधाराधेयभावनियामकत्वंसंभवतीति भावः ।

विघटेततमाम् । किं च भ्रान्तावसद्वात्माकारो वा प्रख्याति । न तु तयार्थः स्वीक्रियते, तस्याप्रकाशनात् इति तया ऽर्थो न व्यवस्थापित एव प्रकाशनात्मा हि व्यवस्थापना । ततश्च स्मरणादभिलाषेण कथमर्थविषयो व्यवहारः । न च तदप्रकाशने संस्कारजत्वेन किं चित्कृत्यम् । तद्धि सादृश्यं लब्धुमवलम्ब्यते । न चानुभवेन विषयप्रकाशनात्मना स्मृत्यभिधानाया भ्रान्तेः किं चिदपि सादृश्यमस्ति सर्वथा विषयमस्पृशन्त्याः ॥

ननु यो ऽनुभवो यश्च तद्विषयः स यतस्तया ऽध्यवसीयते ततोंऽशात्सादृश्यमनुभवेन स्मृतेः तत्सिद्धये च संस्कारपरिग्रहः । अध्यवसीयते इति किमुच्यते, प्रकाश्यत इति चे,न्न भ्रान्तित्वं न प्रकाश्यत इति चे,त्पुनरपि विषयो न स्पृष्ट एवानयेति सादृश्यमपि शब्दगडुमात्रम् । तदेतद्दर्शयितुमाह ।

(६) भ्रान्तित्वे चावसायस्य न जडाद्विषयस्थितिः ।

इह स्मृतेरन्यस्य वा भ्रान्तिबोधस्य स्वसंवेदनांशे प्रकाशमाने न भ्रान्तिता । तत्र वैपरीत्याभावात् । यस्तु तत्राध्यवसीयते स्वाकारः स विपरीततया ऽस्वाकारत्वेनार्थतयेति तत्रांशे भ्रान्तिता । स चांशोऽर्थलक्षणो न स्मृत्या ऽन्यया वा भ्रान्त्या स्पृश्यते तत्रासौ तूष्णीकामिति बलादेव तत्रांशे जडत्वमस्या आयातम् । घटज्ञानस्येव पटे । न च जडेन विषयस्य किं चित्कृतम् । ततश्चार्थविषयो व्यवहारो विलुप्येत ॥

(७) ततोऽजाड्ये निजोल्लेखनिष्ठान्नार्थस्थितिस्ततः ॥

अथ तु तमवसायरूपं स्वसंवेदनांशं स्वाकारं वा ऽवलम्ब्याजडत्वमस्याः । एवमप्यजाड्ये निजं स्वसंवेदनमुल्लेखश्च स्वाकार इतीयत्येषा परिनिष्ठिता स्मृतिरिति विषयस्य नामापि ग्रहीतुमशक्नुवतः ततः स्मृत्यध्यवसायात्कथं विषयस्य व्यवस्थापनं व्यवहार्यत्वसम्पादनसामर्थ्यम् ॥

संस्कारे सत्यपि स्मृतिर्न कथं चन घटते,ततश्च परस्परसंगतिहीनानि सकलानि ज्ञानानीति यदुक्तं श्लोकपञ्चकेन तदिदानीं प्रकृते योजयति ।

(८) एवमन्योन्यभिन्नानामपरस्परवेदिनाम् ।
ज्ञानानामनुसन्धानजन्मा नश्येज्जनस्थितिः ॥

जनस्य लोकस्य या का चन व्यवहारस्थितिः सा सर्वज्ञानानां यदनुसंधानं एकविषयभावोपपन्नस्मृतिताप्राप्तिरूपं तत्रायत्ता । तथाहि स्मरणनिबन्धनः सर्वो व्यवहारः । प्रथममपि हि प्रत्यक्षज्ञानमहमिति पूर्वापररूपानुसन्धानेन स्मरणानुप्राणितेन विना न घटते । प्रमातरि विश्रान्त्यभावादप्रत्यक्षत्वप्रसङ्गात् । एवं सुखादौ मन्तव्यम् । हानादानप्रेरणाभ्युपगमादयस्तु व्यवहाराः स्मरणमया एव । एवं ज्ञानानां यदनुसन्धानं ततो जायमाना जनस्थितिः । एवमिति पराभ्युपगमे सति नश्येत् नश्यतीति सम्भाव्यते । कुत इति चेद्विशेषणद्वारेण हेतुमाह । अन्योन्यं तावद्भिन्नानि ज्ञानानि । अन्यदनुभवज्ञानं अन्यदिदानीन्तनं ज्ञानं विकल्पाभिमतमन्यत्स्मरणसंमतं ज्ञानं तदेतानि स्वविषयप्रकाशमात्ररूपाणि परविषये जडान्धा*नेडमूककल्पानि । न चान्योन्यस्य प्रकाशरूपाणि । एवं न स्वरूपतो न वेद्यतो वैकीभावरूपमनुसन्धानमस्ति । अन्योन्यं च विषयविषयिभावो नास्ति, न च तुर्यं ज्ञातेयनिबन्धनमनुसन्धानाधायि सम्भाव्यते इति ध्वंसेरन्व्यवहाराः, न च ध्वंसन्तामिति भवदभीष्टशापमात्रात्त ध्वंसन्ते । प्रकाशन्ते यतस्ततएतदापद्यते । एतदेव समर्थयितुमुद्यन्तव्यमिति ॥

एतच्चास्मदभिमतप्रकारेण विना विधेरप्यशक्यसमर्थनमिति दर्शयति ।

(६) न चेदन्तः कृतानन्तविश्वरूपो महेश्वरः ।
स्यादेकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान् ॥

संवित्तावत्प्रकाशते इति तावन्न के चिदपह्नुवते । सा तु संविद्यदि स्वात्ममात्रविश्रान्ता । अर्थस्य सा कथं प्रकाशः । स ह्यर्थधर्मएव तथा स्यात् । ततश्चार्थप्रकाशस्तावत्येव पर्यवसित इति गलितो ग्राह्यग्राहकभावः । अतोऽर्थप्रकाशरूपां संविदमिच्छता बलादेवार्थोऽपि तद्रूपान्तर्गत एवाङ्गीकर्तव्यः । स चार्थप्रकाशो यद्यन्यश्चान्यश्च तन्न स्मरणमुपपन्नमिति । अत एक एवासावित्येकत्वात्सर्वो वेद्यराशिस्तेन क्रोडीकृत इत्येतदप्यनिच्छता ऽङ्गीकार्यम् । एवमपि सततमेवोन्मग्नेन निमग्नेन वा विश्वात्मना प्रकाशेत,तथा स्वभावत्वात् । न चैवम् । अतः स्वरूपान्त†र्भुडितमर्थराशिमपरमपि भिन्नाकारमात्मनि परिगृह्य कं चिदेवार्थं स्वरूपादुन्मग्नमाभासयतीत्यापतितम् । सैषा ज्ञानशक्तिः । उन्मग्नाभासंभिन्नं च चित्स्वरूपं बहिर्मुखत्वात्तच्छायानुरागान्नवंनवं ज्ञानमुक्तम् । एवमपि नवनवाभासाः प्रतिक्षणमुदयव्ययभाज इति सैव व्यवहारनिर्वहहानिः । तेन क्वचिदाभासे गृहीतपूर्वे यत्संवेदनं बहिर्मुखमभूत् तस्य यदन्तर्मुखं चित्स्वरूपत्वं तत्कालान्तरेऽप्यवस्थास्नु स्वात्मगतं तद्विषयविशेषो बहिर्मुखत्वं परामृशतीत्येषा स्मृतिशक्तिः । यच्च तन्नवं भासयति स्मरति वा तद्वस्तुनः संविदा विश्वमय्या तादात्म्यवृत्तीति विश्वमयं पूर्णमेवेति नवं न किं चिदाभा-

* अनेडमूकस्तु वक्तुं श्रोतुमशिक्षित इत्यमरः ।

† भुडनिमज्जने तुदादिः । स्वरूपान्तर्निमग्नमित्यर्थः । ब्रुडितमिति पाठे ब्रुडसंवरणे इत्यस्य ।

सितं स्मृतं वा स्यादितीदमपि प्रवाहपतितमूरीकार्यम् । यत्किल तदाभास्यते तत्संविदो विच्छिद्यते, संविच्च ततः, संविच्च संविदन्तरात्, संवेद्यं च संवेद्यान्तरात् । न च विच्छेदनं वस्तुतः सम्भवतीति विच्छेदनस्यावभासमात्रमुच्यते । न च तदियताऽपारमार्थिकम् । निर्मीयमाणस्य सर्वस्यायमेव परमार्थो यतः । स एव परिच्छेदनात्परिच्छेद उच्यते । तदवभासनसामर्थ्यमपोहनशक्तिः । अनेन शक्तित्रयेण विश्वे व्यवहाराः । तच्च भगवत एव शक्तित्रयं यत्तथाभूतानुभवितृस्मर्तृविकल्पयितृस्वभावचैत्रमैत्राद्यवभासनम् । स एव हि तेनतेन वपुषा जानाति स्मरति विकल्पयति च । यथोक्तमाचार्येणैव ।

यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते ।
जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता ॥

इत्यादि । एतासां ज्ञानादिशक्तीनामसङ्ख्यप्रकारो वैचित्र्यविकल्प इति तत्सामर्थ्यं स्वातन्त्र्यमपराधीनं पूर्णं महदैश्वर्यं तन्निर्मितब्रह्मविष्णुरुद्राद्यैश्वर्यापेक्षयोच्यते । तदेव चिद्रूपुरिस्येवं कृत्वा इयदायातम् । विश्वरूपइति । तत एव च परिनिष्ठितैकरूपजडभाववैलक्षण्याज्ज्ञानादिशक्तियुक्ततामाहेश्वर्यमुपसंप्राप्तः । एतदनुपगमे न किं चिदिदं भासेतेति प्रसङ्गः । भासते तु । तस्मादेतदवश्यमङ्गीकर्तव्यमिति प्रसङ्गविपर्ययः । नश्येज्जनस्थितिः यद्येवं न स्यादिति प्राक्तनेन श्लोकेन सह प्रसङ्गः चेदित्यनेन तद्विपर्ययः सूचितः ॥ ७ ॥

आदितः सूत्रश्लोकाः २३ व्याख्याताः

इति श्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञासूत्रविमर्शिन्यां परदर्शनानुपपत्तिः ॥

॥ इति तृतीयमाह्निकम् ॥

---

## ॥ अथ प्रसन्नराघवनामकनाटकस्य ॥

॥ सप्तमोऽङ्कः ॥

---

ततः प्रविशति पुलस्त्यशिष्यः । परितो विलोक्यापरिशीलितसन्निवेशोऽस्मि । तत् कथं पृच्छामि तस्य भवनं पुनर्विलोक्य कथमयं लङ्केश्वरमहामन्त्रिणो माल्यवतः परिचारकः करालकः । उच्चैः सखे करालक इतइतः ।

प्रविश्य करालकः । मुने प्रणम्यसे ।

मुनिः । समीहितं लभस्व । कथय तावन् मे बिभीषणस्य भवनम् ।

करालकः । किं तत्र ।

मुनिः । आदिष्टोऽस्मि भगवता पुलस्त्येन कमपि संदेशमुपनेतुं पौत्रस्य ।

करालकः । न तावदिदानीमिह बिभीषणः ।

मुनिः । कथय किमेतत् ।

करालकः । एकदाभिप्रणमतो बिभीषणस्य करात् सकौतुकं लिखिताक्षरपङ्क्तिपत्रमेकं गृहीतं लङ्केश्वरेण वाचितं च ।

उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥

मुनिः । अहो प्रभुविज्ञप्तिचातुरी बिभीषणस्य ।

करालकः । ततो विहस्यैकं लङ्केश्वरेणोक्तं नूनं केनापि भीरुणा भाषितमेतत् । ख्यातं हि यत् किल ।

परस्त्रीकुचकुम्भेषु कुम्भेषु परदन्तिनाम् ।
निपतन्ति न भीरूणां दृष्टयः शरवृष्टयः ॥

मुनिः । अहो निजचित्तवृत्तिभित्तिभूमिकानुसारीणि वाक्चित्राणि लोकस्य ।

करालकः । ततः प्रणयकोपविषादमिदमाह लङ्केश्वरं बिभीषणः ।

यस्य त्र्यम्बकमौलिखेलदमलस्वर्लोककल्लोलिनी-
लीलालङ्घनलम्पटेन यशसा दिग्भित्तयः क्षालिताः ।
सोऽपि त्वं जनकाधिराजतनयाबद्धाभिलाषः कथं
हा जातोऽसि पुलस्त्यसंततियशःशीतद्युतेर्लाञ्छनम् ॥

मुनिः । सकौतुकम् । ततस्ततः ।

करालकः । ततश्च ।

कोपपाटलितलोलदृष्टिना
किञ्चिदुद्यमितखड्गयष्टिना ।
रावणेन नयधर्मभूषण-
स्ताडितो हृदि पदा बिभीषणः ॥

मुनिः । हन्त नूनम् ।

लङ्केश्वरेण दुष्टेन नयधर्मविभूषणः ।
बिभीषणश्च न परं विभवोऽपि पदा हतः ॥

मुनिः । ततस्ततः ।

कलालकः । ततः कतिपयपरिवारेण बिभीषणेन लङ्केश्वरं विहाय राम एव समाश्रितः ।

मुनिः । स्वगतम् । अनुष्ठितं तर्हि पुलस्त्यसंदेशरहस्यं बिभीषणेन । प्रकाशम् । भवान् पुनः किमधुना कर्तुकामः ।

करालकः । अहमादिष्टोऽस्मि माल्यवता जानकीविरहविह्वलहृदयस्य लङ्केश्वरस्य मनोविनोदनाय केनापि चित्रकरेण विरचितं चित्रमिदं दृग्गोचरीकरणीयमिति ।

मुनिः । बिहस्य कथमित्थमासन्नशत्रो लङ्केश्वरेण तादृशस्य महामन्त्रिणो माल्यवत एवमुपचरितुमुचितं तन्नूनं प्रस्तुतोचितमेव किमप्येतद्भविष्यति । नेपथ्ये ।

रेरे चन्दनमिन्दुमण्डलशिलापट्टे समुद्घृष्यतां
रेरे चामरमुज्ज्वलैः शशिकरैः श्वेतं विनिर्मीयताम् ।
रेरे बालमृणालतन्तुलतिकासूत्रेण पाथोजिनी-
पत्रस्थैरुदबिन्दुभिर्मणिमयो हारः समासूत्र्यताम् ॥

मुनिः । सोपहासमात्मगतम् । यादृशोऽयं शीतोपचारस्तादृश एव सीतोपचारो लङ्केश्वरस्य भविष्यतीति । प्रकाशम् । कथमिदं विरहतप्तस्य दशकन्धरस्य शीतोपचारार्थमादिश्यन्ते निशाचराः ।

करालकः । खेचराश्च । इदानीं हि ।

अङ्गं लिम्पति चन्दनेन मृदुभिः शीतद्युतिः स्वैः करैः
किंचिच्चञ्चलतालवृन्तकलनव्यग्रो वसन्तानिलः ।
किंचायं नलिनीदलैर्वितनुते तल्पं प्रतीचीपति-
र्दैवैरित्थमनङ्गतप्तहृदयो लङ्केश्वरः सेव्यते ॥

मुनिः । स्वगतम् । अये अलीकवाग्डम्बरं निशाचरस्य ।

करालकः । नेपथ्याभिमुखमवलोक्य कथमयं प्रहस्तो राजद्वारमुपसर्पति तदस्य हस्ते चित्रपटमर्पयिष्ये । भवानपि समीहितं साधयतु । इति निष्क्रान्तौ ।

विष्कम्भकः ।

ततः प्रविशति रावणश्चित्रहस्तः प्रहस्तश्च ।

रावणः । स्वगतम् ।

राजल्ललाटफलका कमनीयकूजत्-
काञ्चीगुणप्रणयिनी धृतकेशपक्षा ।
हा किं करोमि मम सा हृदयं प्रविष्टा
नाराचयष्टिरिव पुष्पशिलीमुखस्य ॥

विमृश्य । अहो कथमद्यापि हठाहरणखिन्नां नितान्तकृशधूसराङ्गीमपि जानकीं जनस्थानस्थितामिवाहमखण्डमण्डनां पश्यामि । अथवोचितमिदम् ।

आचान्तकान्तिरुन्निद्रैर्मयूखैरहिमत्विषः ।
धूसरापि कला चान्द्री किं न बध्नाति लोचनम् ॥

प्रहस्तः । अयि देव इदमालोक्यतां चित्तविनोदनं चित्रम् ।

रावणः । किं पुनरिहालिखितम् ।

प्रहस्तः । अयं तावत् तरलतिमिनिकरकरालकल्लोलकोलाहलोज्जागरः सागरः ।

रावणः । विलोक्य किमिदमुत्तरेण तरङ्गमालिनमनुतमालखण्डमाखण्डलधनुःसहस्रानुकारि कपिशयति गगनतलम् ।

प्रहस्तः । तदिदं सुग्रीवपालितं कपिकुलम् ।

रावणः । विहस्य । अयि वालिपालितमिति वक्तव्यम् । भवतु किं पुनरनेन । कौ पुनरिमौ कार्मुकधरौ ।

प्रहस्तकः । ताविमौ रामलक्ष्मणौ ययोरग्रजस्य बाणपातविलसितेन सुग्रीवपालितमधुना कपिकुलम् ।

रावणः । अनाकर्णितकेन । कः पुनरयं नितान्तकृशकमनीयतनुरमन्दमन्दराघातनिर्मन्थनोत्थिततरलतरङ्गदूरविक्षिप्तशंकरशिरःशेखराधिरोहणकुतूहली कलानिधिरिव तरङ्गमालिनस्तटभुवमधिशेते ।

प्रहस्तकः । स एव लङ्कागमनकुतूहली निजकुलगुरुं सागरमुपचरितुं कुशशयनविन्यस्तगात्रः प्रथमो दाशरथिः ।

रावणः । विहस्य कथमित्थमेव जानकीलाभकौतुको माऽयमस्मानप्युपचरिष्यति ।

प्रहस्तः । इतो विलोक्यतामयं रामनाराचनिर्मुक्त* बहलानलहेलातरलदीनमीननिकरपरिवारः पारावारः ।

रावणः । कौ पुनरिमौ ज्येष्ठतापसस्य सादरं वानरवीरैः पार्श्वपरिसरमानीयेते ।

प्रहस्तकः । अयं तावत् सागर एव । अयमपि देवस्यैवेत्यर्धोक्ते । अथवा किमस्य बन्धुविरोधिनो नामग्रहणेन ।

रावणः । कथमयं बिभीषणोऽस्मद्विरोधेन राममाश्रयति । भवतु ।

निशाचरशिरोरत्नरञ्जिताङ्घ्रिशिरोरुहः ।
प्रियोऽपि दशकण्ठस्य नैव दर्शनमेष्यति ॥

रावणः । सकौतुकम् । किं पुनरिदमक्षरपङ्क्तिद्वयम् ।

प्रहस्तः । नूनमिदं समुद्रबिभीषणौ प्रति लक्ष्मणस्य वचनद्वयं भविष्यति ।

रावणः । एकं तावद्वाचय ।

प्रहस्तः । वाचयति ।

त्रासं मुञ्च समुद्र कोपदहनो रामस्य पास्यत्ययं
बन्दीभूतसुरेन्द्रसुन्दरदृशामक्ष्णोरमुद्रं पयः ।
कामं ते मकरीगणो विहरतामेतस्य लङ्केश्वर-
स्त्रीगण्डस्थलपत्रभङ्गमकरीविध्वंसिनः सायकाः ॥

रावणः । अन्यदपि वाचय ।

प्रहस्तः । वाचयति ।

अद्यैवास्य विभीषणस्य शरणापन्नस्य मूर्ध्ना नते-
रानृण्यं विदधात्ययं रघुपतिर्लङ्काधिपत्यश्रियम् ।
एतस्यैव भुजाविह प्रतिभुवौ सुग्रीवराज्यार्पण-
त्रैलोक्यप्रथमानसत्यचरितौ सर्वे वयं साक्षिणः ॥

रावणः । अहो वाग्डम्बरैकसारता कनिष्ठतापसस्य । भवतु किं पुनरिदं मध्येसमुद्रमालोक्यते ।

प्रहस्तः । स एष कपिकुलोन्मूलितशैलशिखरनिर्मितः का-

* रामनाराचनिवहबहलानलेति वा पाठः

कुत्स्यकुलकीर्तिप्रसक्तिप्रबन्धः सेतुबन्धः ।

रावणः । अहो चित्रकरस्य चातुरी यदलीकमपि सत्यमिव दर्शितवान् ।

प्रहस्तकः । कथमद्यापीदमलीकमिति संभावना देवस्य ।

नेपथ्ये कलकलः ।

रावणः । किमेतत् ।

प्रहस्तः ।

एषामयं रामचमूचराणां
दर्पोद्धतानां कपिकुञ्जराणाम् ।
नवोद्गतानामिव नीरदानां
कोलाहलः कोऽपि समुज्जिहीते ॥

प्रहस्तः । तदिदं शङ्कितव्यं प्रतिविधातव्यं वा ।

रावणः । आः किमिह शङ्कया प्रतिविधानेन वा । अनेन हि ।

कोलाहलेनोल्लसता कपीनां
मनो मदीयं मुदमेव धत्ते ।
मन्दोदरीभूषणनूपुराणां
महामणीनामिव शिञ्जितेन ॥

प्रविश्य मन्दोदरी । जेदुजेदु देवो * ।

रावणः । देवि इत आस्यताम् ।

मन्दोदरी । यथोचितमुपविश्याधोमुखी तिष्ठति ।

रावणः ।

भुग्नालकं स्मितपराजितचन्द्रलेखं
दृग्लीलया कुवलयश्रियमादधानम् ।
एतन् मुखं दिविषदामिव दुर्निरीक्ष्यं
तन्वङ्गि मामिव मुधा किमधः करोषि ॥

प्रहस्तकः । देव कपिसेनाकोलाहलचिन्तयैव नूनमधरीकृतमुखी देवीति तर्कयामि ।

रावणः । आः क एष चिन्ताविषयः ।

इयं लीलालोलाङ्गदभुजलता नीलचिकुरा
समुन्मीलत्तारा कुमुदहसिता चारुनयना ।
प्लवङ्गानां सेना युवतिरिव तारापतिमुखी
ममाग्रे कन्दर्पं प्रकटयितुमद्य प्रभवति ॥

मन्दोदरी । देव अण्णंपि अत्थि कारणं अज्ज हि मए देवस्स सउणणिरूवणत्थं गिरिसिहरगहणगब्भट्ठिदां सवरपल्लीं पट्ठाविदा णिअपरिआरिआ ताए अ कीए वि सबरकुडुंबिणीए णिअघरपेरन्तवासिणं केसरिकिसोरअं उल्लावअन्तीए एरिसं वअणमाअण्णिदम् ।

मा ण्होहि णाअवइणो परिहवमेत्तेण गव्वणिव्वूढो ।
वसुहमिमं गिरिसंकडं मइन्द सरहस्स णन्दणो पत्तो * ॥

रावणः । किमिह विषादस्थानमस्मात् प्रत्युदासीनमेवैतत् तथाहि ।

मा भव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसंकटमयीं मृगेन्द्र शरभस्य नन्दनः प्राप्तः ॥

प्रहस्तकः । देवान्यथा घटमानमिदम्

मा भव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसंकटमयीं दशरथस्य नन्दनः प्राप्तः ॥

रावणः । आः केयं निसर्गनिःशङ्के लङ्केश्वरे मयि शकुनोपश्रुतिपरीक्षा ।

नेपथ्ये ।

हेलास्फालितरामलक्ष्मणधनुर्ज्यावल्लरीझल्लरी-
झङ्कारप्रसरप्ररूढपुलकप्राग्भारनीरन्ध्रिताः ।
व्यावल्गत्कपिकण्ठकाण्डकदनक्रीडत्कृपाणाञ्चल-
स्फूर्जद्दुर्जयदोर्बलैकचपलाश्चञ्चन्ति रात्रिंचराः ॥

रावणः । सहर्षम् । अये निशाचरवीरविजयोत्तरः समरः ।

पुनर्नेपथ्ये ।

अग्रेसरी रघुपतेः परिणद्धपाक-
किम्पाकपाटलमुखी कपिवीरसेना ।
निःशेषमापिबति राक्षसवीरचक्रं
प्रातः प्रभेव तपनस्य तमिस्रजालम् ॥

रावणः । आः कथमुत्कण्ठायितं मर्कटैः । उच्चैः कः कोऽत्र भोः । मदाज्ञया ।

कृत्वा विनिद्रमपनिद्रभुजावलेपः
प्रोद्दामरामसमराय स कुम्भकर्णः ।
आदिश्यतां निजभुजार्दितवज्रपाणि-
रद्यैव लक्ष्मणरणाय च मेघनादः ॥

पुनर्नेपथ्ये । देव भवदाशयविदा महामन्त्रिणा माल्यवता पूर्वमेव संविहितमिदम् । इदानीं हि ।

रामेण सार्धमयमुद्धतबाहुदर्पः
संग्रामभूमिमधितिष्ठति कुम्भकर्णः ।
रक्षःशिखण्डिहृदयोत्सवमेघनादः
सौमित्रिणा सममसावपि मेघनादः ॥

* जयतुजयतु देवः ।

* देव अन्यदप्यस्ति कारणं अद्य हि मया देवस्य शकुननिरूपणार्थं गिरिशिखरगहनगर्भस्थितां शबरपल्लीं प्रस्थापिता निजपरिचारिका तया च कस्या अपि शबरकुटुम्बिन्या निजगृहपर्यन्तवासिनं केसरिकिशोरकं लालयन्त्या ईदृशं वचनमाकर्णितम् ।

मा भव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसङ्कटां मृगेन्द्र शरभस्य नन्दनः प्राप्तः ॥

पुनर्नेपथ्ये ।

यद्दंष्ट्रावज्रघातैः समिति विदलिताः शैलकल्पाः कपीन्द्राः ।
यन्नाराचाम्बुवर्षैर्दवदहनसमाः शामिता वानरेन्द्राः ।
वीरोऽसौ कुम्भकर्णः स च समरकलाकौतुकी मेघनादः
संजातौ

रावणः । किमतःपरं वदिष्यति ।

पुनर्नेपथ्ये ।

हा पतङ्गौ दशरथसुतयोर्दारुणे बाणवन्हौ ॥

मन्दोदरीरावणौ मूर्च्छतः ।

प्रहस्तकः । देव समाश्वसिहिसमाश्वसिहि ।

रावणः । समाश्वस्य देवि समाश्वसिहिसमाश्वसिहि ।

मन्दोदरी । समाश्वस्य । परित्ताअदु मं अज्जउत्तो एसा णिमग्गम्मि सोअतिमिरे* ।

रावणः । अय्यलं कातरतयायं चन्द्रहासचन्द्र एव शोकतिमिरादुद्धरिष्यति भवतीम् । पुनरुत्थाय खड्गमुद्यम्य पश्यायमसौ मे ।

भिन्नप्रभिन्नसुरकुञ्जरकुम्भमुक्त-
मुक्ताफलप्रकरकैः† कलिताधिवासः ।
अद्यैव खेचरनिशाचरलोचनाना-
मुन्मीलयन् मुदमुदञ्चति चन्द्रहासः ॥

इति प्रहस्तेन सह निष्क्रान्तः ।

मन्दोदरी । अये अच्चरिअं समरसंरम्भविलोअणविह्नअत्थिमिदमिदं विज्जाहरमिहुणं किम्पि मन्तेदि तेण हि अज्जउत्तस्स विजअत्थं अहंपि णिअकुलदेवदाओ अच्चिदुं गच्छह्नि‡ । इति निष्क्रान्ता ।

ततः प्रविशति विद्याधरमिथुनम् ।

विद्याधरी । अज्जउत्त को इमो रणरहसविअसन्तपुलअभरकुडुमलिदभुअवणो कविचमूचक्कमहिवट्टदि§ ।

विद्याधरः । प्रिये स एष रामसमरकौतुकी दशकण्ठः ।

विद्याधरी । कोउण इमो अंजणपुंजच्छविसरीरो कविवीरो तस्स सम्मुहं परावट्टदि‖ ।

विद्याधरः । प्रिये स एष विचित्रसमरशीलो नीलः । विलोक्य सविस्मयमहो ।

वक्षस्थले झगिति* नीलकरोज्झितेन
नीलाचलस्य शिखरेण कृतप्रहारः ।
लङ्केश्वरः स्मरति नूनमसौ वसन्त-
नीलोत्पलप्रहरणं हरिणेक्षणानाम् ॥

पुनः सकौतुकं पश्यपश्य ।

नीलोऽयं दशमुखपाणिपङ्कजाना-
मङ्केषु भ्रमरतुलां भ्रमन् बिभर्ति ।
अप्येको दशसु किरीटपीठिकासु
द्राक् प्रेङ्खन्ननुभवतीन्द्रनीललीलाम् ॥

विद्याधरी । को उण इमो णिसाअरेन्द्रेण समं समरसाहसमङ्गीकरिअ चिट्ठदि† ।

विद्याधरः । स एष स्वामिपक्षपाती बिभीषणः ।

विद्याधरः । सविषादं हन्त भोः ।

येयं बिभीषणे शक्तिर्मुक्ता क्रूरेण रक्षसा ।

विद्याधरी । अह किं ताए‡ ।

विद्याधरः ।

लक्ष्मणेन गृहीतेयं प्रियेव निजवक्षसा ॥

विद्याधरी । हद्धिहद्धि§ ।

विद्याधरः ।

वर्षन् नैव समन्ततो दशमुखं चापच्युतैः सायकैः
सौमित्रिं च विसंज्ञमङ्कनिहितं नेत्रच्युतैरम्बुभिः ।
एतत् तर्कय हर्षशोकतरलाः कुर्वन् कपीनां दृशो
रामश्चामलकेलिवीरकरुणाव्यामिश्रतां गाहते ॥

विलोक्य । कथमपगत एव रामबाणपीडितो दशकण्ठः ।

नेपथ्ये ।

हा वत्स लक्ष्मण विकासय नेत्रपद्म-
मागादिदं युगपदेव समस्तमस्तम् ।
भाग्यं दिवाकरकुलस्य च जीवितं च
रामस्य किंच नयनाञ्जनमूर्मिलायाः ॥

विद्याधरः । हन्त सोऽयमनुजवत्सलस्य रामस्य विलापः ।

नेपथ्ये । देव समाश्वसिहिसमाश्वसिहि ।

विद्याधरी । कहं सुग्गीवेण समासासीअदि रामचन्दो ता किं दाणीमालविस्सदि‖ ।

विद्याधरः । आकर्णयामस्तावत् सुग्रीवेण समाश्वास्यमानः किमाह रामः ।

* परित्रायस्व मामार्यपुत्र एषा निमग्नाऽस्मि शोकतिमिरे ।

† मुक्ताफलैर्विचलितैः कलिताधिवास इति वा पाठः ।

‡ अये आश्चर्यं समरसंरम्भविलोकनविस्मयस्तिमितमिदं विद्याधरमिथुनं किमपि मन्त्रयति । तेन हि आर्यपुत्रस्य विजयार्थमहमपि निजकुलदेवता अर्चितुं गच्छामि ।

§ आर्यपुत्र कोऽयं रणरभसविलसत्पुलकभरकुड्मलितभुजवनः कपिचमूचक्रमभिवर्तते ।

‖ कः पुनरयंमञ्जनपुञ्जच्छविशरीरः कपिवीरस्तस्य संमुखं परापतति ।

* किमपीति वा पाठः ।

† कः पुनरयं निशाचरेन्द्रेण समं समरसाहसमङ्गीकृत्य तिष्ठति ।

‡ अथ किं तस्याः ।

§ हा धिक् हा धिक् ।

‖ कथं सुग्रीवेण समाश्वास्यते रामचन्द्रस्तत् किमिदानीमालपिष्यति

नेपथ्ये । सखे सुग्रीव कथमाश्वास्यते ।

अयि राघवाविति सुधामधुरं
विनिपीय पौरमुनिलोकवचः ।
अयि राघवेति गरलप्रतिमं
कथमद्य रामहतकः पिबतु ॥

अपिच ।

कनीयस्या मातुः कृतचरणपातः कथमहं
सहिष्ये मत्पार्श्वे विफलपरिवर्तं नयनयोः ।
अये शान्तं पापं कठिन इव चेज्जीवितुमना
विना वत्सं रामः पुनरयमयोध्यां प्रविशति ॥

विद्याधरः । अहह करुणैकार्णवो वर्तते । विमृश्य । कः पुनरिह प्रतीकारः । विचिन्त्य । अथवा का प्रतीकारकथा वक्रो हि विधिः ।

विद्याधरी । वक्कदरोत्ति भणिज्जं । इदं पेक्ख णं इमो वाणरो जेव्व कोवि लङ्केसरकिदसंधाणो करकलिदसेलसिहरो रामसंमुहं जेव्व परिवट्टदि * ।

विद्याधरः । कर्णौ पिधाय शान्तं पापम् । अयि मुग्धे मैवं वादीः । अयं हि ।

महौषधीनामाधारं भूधरं गन्धमादनम् ।
आदाय लक्ष्मणप्राणत्राणायाभ्येति मारुतिः ॥

पुनर्विलोक्य । सहर्षम् ।

आमोदमाघ्राय महौषधीनां
सौमित्रिरुन्मीलितपद्मनेत्रः ।
भूयोऽपि चक्रीकृतचारुचापः
करोति रामं परिपूर्णकामम् ॥

विद्याधरी । कहं पुणोवि रामरणकोदूहलफुल्लन्तभुअमण्डलो णिसाअराखण्डलो परावडिदोजेव्व † ।

विद्याधरः । प्रिये तदिदानीं सावधानं विलोकय तुलाधिरोहः खल्वयं वीरलक्ष्म्याः । यत्राम रामरावणयोः समर इति ।

विद्याधरी । कहं उण सअललोअवीरस्स रामचन्दस्स अनेकवीरपरिहूदस्स रावणस्स तुलाधिरोहो वीरलच्छीए हविस्सदि ‡ ।

विद्याधरः । प्रिये न जानासि । कथं दशकण्ठं विना ।

* वक्तरं इति भणितव्यम् । इदं पश्य नूनमयं वानर एव कोऽपि लङ्केश्वरकृतसंधानः करकलितशैलशिखरो रामसंमुखमेव परिवर्तते ।

† कथं पुनरपि रामरणकौतूहलफुल्लद्भुजमण्डलो निशाचराखण्डलः परापतित एव

‡ कथं पुनः सकललोकवीरस्य रामचन्द्रस्यानेकवीरपरिभूतस्य रावणस्य तुलाधिरोहो वीरलक्ष्म्या भविष्यति ।

विन्यासं नाकनारीकुचकलशलसत्कुङ्कुमस्यासकाना-
मस्पृष्ट्वा मार्ष्टुमासीदसिकलहकलाकोविदः को विदग्धः ।
भिन्नस्वर्गेभकुम्भस्थलबहलगलन्मौक्तिकव्यक्तहासः
कस्याक्रीडत् कराग्रे त्रिदशपतियशश्चन्द्रहाश्चन्द्रहासः ॥

अपिच ।

किं ब्रूमो दशकन्धरं निजचमूरङ्गाकपाटीभव-
द्वक्षःपीठपतत्कठोरकुलिशाघातेषु जातस्मितम् ।
व्योमाभोगसरोविलासिनि वने यत्पाणिपङ्केरुहां
कैलासेन शिरःस्थितेन्दुकलिकोत्तंसेन हंसायितम् ॥

नेपथ्ये ।

हेलोन्मूलितचन्द्रचूडगिरयस्त्रैलोक्यदत्तापदो
लङ्कातङ्कहराः पुरन्दरपुरस्त्रीवृन्दबन्दीकृतः ।
वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गबद्धस्पृहाः
सोत्कण्ठं दशकन्धरस्य जयिनः खेलन्ति दोःकेलयः ॥

पुनर्नेपथ्ये ।

हेलोन्मूलितचन्द्रचूडधनुषस्त्रैलोक्यदत्ताभया
लङ्कातङ्ककराः पुरन्दरपुरस्त्रीवृन्दबन्दीमुचः ।
वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गलब्धोत्सवाः
सोत्कर्षं रघुनन्दनस्य जयिनः खेलन्ति दोःकेलयः ॥

विद्याधरः । नूनमयं राक्षसवानरयोर्निजस्वामिवर्णनानुसारी व्याहारः ।

विद्याधरी । कहं उण रहट्ठिदेण रावणेण समं भूमिट्ठिदस्स राहवस्स समरो हविस्सदि * ।

विद्याधरः । प्रिये पश्यानीत एव मातलिना पुरुहूतरथः । अधिष्ठितश्च विनयाभिरामेण रामेण ।

नेपथ्ये । अये कथं ।

पूर्वमेव प्रयातानां खरमारीचवालिनाम् ।
सौजन्यमुग्धः पन्थानमधिवर्तितुमीहसे ॥

विद्याधरः । आकर्णयामस्तावदनेन रामवचनेन पीडितः किमाह रावणः ।

नेपथ्ये ।

खरः कीदृक् वाली कपिरपि च मारीचहतकः
कुरङ्गस्तान् हत्वा कथमपि कथं दृप्यसि मनाक् ।
अयं पश्य प्राप्तो दशवदननामा सुरपुरी-
करीन्द्राणां हेलारचितकदनः पञ्चवदनः ॥

अथवा ।

* कथं पुना रथस्थितेन रावणेन समं भूमिस्थितस्य राघवस्य समरो भविष्यति ।

कालीकेसरिकेसरोज्ज्वलसटासाटोपसंपादित-
क्रीडाचामरकोमलानिललवाचान्तश्रमाम्भःकणः ।
श्रीमानेष दशाननो विजयते तस्यास्य पञ्चानन-
व्यापारप्रतिपादनैरपि यशः कौतूक समुन्मीलति ॥

विद्याधरः । अये दशवदनवचनकुपितः किमपि वक्तुकाम इव लक्ष्यते लक्ष्मणः ।

नेपथ्ये । किं ते पञ्चाननतया दशाननतया वा । त्वमिदानीम् ।

दूरोन्मुक्तमदो विभीषण इव न्यञ्चच्छिरःशेखरः
स्वच्छन्दं चरणारविन्दयुगले रामस्य भृङ्गो भव ।
रे नक्तचर कुम्भकर्ण इव वा कर्णान्तनक्तोभव-
च्चापोत्सङ्गविमुक्तबाणदहने सद्यः पतङ्गो भव ॥

विद्याधरी । पेक्खपेक्ख इदो सरन्धआरं वित्थारअन्तेण णिसामुहायिदं दसमुहेण * ।

विद्याधरः । नन्वितस्तदेव निजविशिखमयूखधारया विनिवारयता चन्द्रायितं रामचन्द्रेण । पुनः सकौतुकम् । अये नूनमयं दिव्यास्त्रलीलया प्रतिहतदिव्यास्त्रं निकृत्तचापं रावणं किमपि वक्तुकाम इव रामः ।

नेपथ्ये ।

निकृत्तचाप इति मा संक्षोभतरलो भव ।
शस्त्रमन्यदपि स्वैरं ननु रे समरे कुरु ॥

विद्याधरी । आकण्णअदु दाव किं दाणीं भणादि रावणो † ।

नेपथ्ये ।

आकर्णितस्तव दशानन बाहुदण्ड-
श्रीखण्डकाननफणी नवचन्द्रहासः ।
येन स्वनामभवसाम्यरुषेव पीतः
स्वर्लोकलोलनयनामुखचन्द्रहासः ॥

विद्याधरः । लीलादलितचन्द्रहासः सोत्प्रासः किमधुना वदति रावणं रामचन्द्रः ।

नेपथ्ये । अयि तावदधुना लङ्केश्वरः खिद्यते ।

विद्याधरी । किंपि दाणीं जंप्पिस्सदि रावणो ‡ ।

नेपथ्ये । कथमद्येव लङ्केश्वरः खिद्यते । ननु रे ।

विध्वस्ता दशभिर्भुजैर्दशदिशः प्रत्येकमेते पुन-
र्भारायैव दशापरे मम गिरिप्राग्भारभाजो भुजाः ।
आराध्यः शशिमौलिरम्बुधिजले निद्राति नारायणः
किंकर्तव्यतयानयानुदिवसं लङ्केश्वरः खिद्यते ॥

विद्याधरी । वअणमेत्तं दाणीं * ।

विद्याधरः । नहिनहि । पश्यपश्य नन्वयमिदानीमपि ।

धनुर्निस्त्रिंशादिप्रहरणगणच्छेदकुपितो
दशास्यः स्वान् मूर्ध्नो रघुपतिशरश्रेणिदलितान् ।
करैरेकैरेकैर्नभसि भृशमादाय युगपत्
क्षिपन्नन्यैरन्यैः सफलयति दोर्विंशतिमपि ॥

पुनः सकौतुकम् ।

एतान्यस्य यथायथा सुविशिखैः कृत्तानि रक्षःपते-
रुद्गच्छन्ति शिरांसि भीतिपुलकैः साकं दिवौकःपतेः ।
उन्मीलन्ति तथातथा रघुपतेरन्तः प्रमोदोर्मयः
कण्ठच्छेदविनोदकौतुकभरव्यग्रीभवच्चेतसः ॥

विद्याधरी । कहं अज्जावि णिसाअरेन्दबन्दीकिदसुरसुन्दरीणं दंसणं दुल्लहं जं इमस्स सीसाइं पुणोपुणोवि उम्मीलन्ति † ।

विद्याधरः । अलं तापेन क्रीडति खलु रामः सह रावणेन न पुनरद्यापि कुप्यति पुनर्विलोक्य ।

विद्याधरः । सकौतुक प्रिये पश्यपश्य ।

अन्तः सान्द्रवहन्महेश्वरशिरः शीतांशुलेखोल्लसत्-
पीयूषद्रवशीकरव्यतिकरप्राग्भारभाजामिव ।
छिन्नानामपि रामचन्द्रविशिखैर्भूयः समुद्गच्छतां
काप्यन्यैव निशाचरेन्द्रशिरसां कान्तिः समुज्जृम्भते ॥

पुनः सकौतुकं विहस्य । अहो अस्य चित्तवृत्तिः ।

अयं यावद्यावत् पृथुहृदयपीठो रघुपतिः
शिरश्छेदासक्तो न दशवदनस्य व्यथयति ।
अयं तावत्तावद्वहति मुदमुच्चैर्दशमुखः
किलैतस्मिन् देवी जनकपतिपुत्री निवसति ॥

नेपथ्ये । अयि प्रिय राम ।

किं क्रीडसि शरस्तोमैर्नन्वेकेनैव पत्रिणा ।
परिपूरय नः कामं यशसा च जगत्त्रयम् ॥

विद्याधरः । नूनममी दिवौकसस्त्वरयन्ति रामचन्द्रं तच्छृण्वन् किमधुना वक्ष्यति रावणः ।

नेपथ्ये । रेरे मम भुजाः ।

मुक्त्वैकां हरशेखरप्रणयिनीं पीयूषभानोः कलां
दिक्पालावलिमौलिमण्डनमणीन् गृह्णीत सर्वानपि ।
तैः काञ्चीं रचितां चिराय वहतु श्रोणीतटे जानकी
गायन्ती कमनीयशिञ्जितभरैर्मद्विक्रमाडम्बरम् ॥

* पश्यपश्येतः शरान्धकारं विस्तारयता निशामुखायितं दशमुखेन ।

† आकर्णयतु तावत् किमिदानीं भणति रावणः ।

‡ किमपीदानीं जल्पिष्यति रावणः ।

* वचनमात्रमिदानीम् ।

† कथमद्यापि निशाचरेन्द्रबन्दीकृतसुरसुन्दरीणां दर्शनं दुर्लभं यद् अस्य शीर्षाणि पुनःपुनरपि उन्मीलन्ति ।

विद्याधरः । विहस्य लङ्केश्वर समयज्ञोऽसि यद् भुजानेव नियुक्तवानसि । अधुना हि भुजमण्डलमेव परिवारवर्गस्ते । विलोक्य साकूतम् । अये कथमनेन दशाननवचनेन किंचित् कुपित इव दृश्यते जानकीकान्तः । पुनः सहर्षविषादं हन्त भोः ।

विकचकुसुमस्तोमाकीर्णे परागविभूषितः
शशिमणिशिलातल्पेऽनल्पे सलीलमशेत यः ।
अयमयमसौ रोषारूढे त्वयि रघुनन्दने
भुवि दशमुखः शेते धूलिच्छटापरिधूसरः ॥

विद्याधरी । सहर्षम् । ता दाणीं जेव्व जणअणंदिणी रामचन्देण समं संगमिस्सदि * ।

विद्याधरः । अथ किम् ।

उद्दामहेतिवलयैः परिदीपिताशं
पश्य प्रविश्य जनकेन्द्रसुता हुताशम् ।
प्रत्युद्गता समधिकां द्युतिमावहन्ती
प्रातर्मयूखकलिकेव दिवाकरस्य ॥

विद्याधरी । पेक्खपेक्ख इमो असमसमरकअत्थिदं पदेसं अवतरद रामचन्दो † ।

विद्याधरः । तदेहि कर्णामृतं पुलोमजायै निवेदयाव इति निष्क्रान्तौ ।

ततः प्रविशति रामः । सीतालक्ष्मणौ सुग्रीवविभीषणौ च । अये कथमुपगत एव भगवानम्बरमणिश्चरमाचलचूडम् ।

लक्ष्मणः । पश्चिमपयोधिवेलां च । नन्विदानीम् ।

उद्दामदिग्द्विरदचञ्चलकर्णपूर-
गण्डस्थलोच्चलदलिस्तबकाकृतीनि ।
नीलाभ्रभांसि मृगनाभिसमानभांसि
दिक्कन्दरेषु विलसन्तितमां तमांसि ॥

रामः । अये कथमुज्जृम्भितमेव निशाचरचक्रानुकारिणा तिमिरनिकरेण ।

विभीषणः । नन्वितोऽपि समुन्मीलितमेव रामनाराचानुकारिणा तुहिनकरकिरणप्रकरेण ।

सुग्रीवः । एवमेतत् । अमी हि ।

क्षीराब्धेर्लहरीषु फेनधवलाश्चन्द्रोपलेषु स्रवत्-
पाथःसीकरिणो विकासिकुमुदक्रोडे रजःपिञ्जराः ।
उन्मीलन्ति चकोरचञ्चुगहने छिन्नप्ररूढाश्चमत्-
कुर्वन्तः प्रियविप्रयुक्तरमणीगात्रे सुधांशोः कराः ॥

विभीषणः । एवमेतत् । इदानींहि ।

शंकरार्धतनुबद्धपार्वती-
कुङ्कुमाक्तकुचकोरकाकृतिः ।
मुच्यते कमलिनीभिरुच्चमत्-
पद्मकोशकरलीलया शशी ॥

लक्ष्मणः । सकौतुकमेवमेतत् । अहो ।

ध्वान्तौघे शितिकण्ठकण्ठमहसि प्राप्ते प्रतीचीमुखं
प्राचीमञ्चति किंच दुग्धलहरीमुग्धे विधोर्धामनि ।
एतत् कोकचकोरशोकरभसम्लानप्रसन्नोल्लसत्-
दृक्पातोर्मिकदम्बचुम्बितमिव त्रैलोक्यमाभासते ॥

रामः । वत्सैवमेतत् । इदानीं हि ।

शीतांशुस्फटिकालवालवलयद्रागुल्लसत्कौमुदी-
वल्लीनूतनपल्लवाञ्चितमिव प्राप्य त्वयं ताम्रताम् ।
चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नायकाण्डस्रुत-
क्षीरस्यन्दनिरन्तराप्लुतमिव श्वेतं वियद्भासते ॥

पुनर्विलोक्य सकौतुकं वत्स लक्ष्मण

पश्योदेति वियोगिनां दिनमणिः शृङ्गारदीक्षामणिः
प्रौढानङ्गभुजङ्गमस्तकमणिश्चण्डीशचूडामणिः ।
तारामौक्तिकहारनायकमणिः कन्दर्पसीमन्तिनी-
काञ्चीमध्यमणिश्चकोरपरिषच्चिन्तामणिश्चन्द्रमाः ॥

लक्ष्मणः । एवमेतत् । अयमसौ ।

स्वैरं कैरवकोरकान् विदलयन् यूनां मनः खेदय-
न्नम्भोजानि निमीलयन् मृगदृशां मानं समुन्मीलयन् ।
ज्योत्स्नां कन्दलयन् दिशो धवलयन्नुद्वेलयन् वारिधीन्
कोकानाकुलयन् तमः कवलयन्निन्दुः समुज्जृम्भते ॥

विभीषणः । सखे सुग्रीव पश्य ।

मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलो-
च्छलत्तरलतारकाकपटकीर्णमुक्तागणः ।
पुरन्दरहरिद्दरीकुहरगर्भसुप्तोत्थित-
स्तुषारकरकेसरी गगनकाननं गाहते ॥

सुग्रीवः । सखे विभीषण पश्य ।

यः श्रीखण्डतमालपत्त्रति दिशः प्राच्याः स्मरक्ष्मापतेः
पाण्डुच्छत्त्रति दन्तपत्त्रति वियल्लक्ष्मीकुरङ्गीदृशः ।
केलिश्वेतसहस्रपत्त्रति रतेः किंच त्रपायोषितः
क्रीडाराजतसीधुपात्त्रति शशी सोऽयं जगन्नेत्रति ॥

रामः । निर्वर्ण्य ।

सितकिरणकपोलीमालिमालोकयन्ती
तिमिरविरहतापव्याकुलां व्योमलक्ष्मीम् ।
रजनिरमलताराशीकरैः सिक्तमस्याः
परिमलयति गात्रं चन्द्रिकाचन्दनेन ॥

---

* तदिदानीमेव जनकनन्दिनी रामचन्द्रेण समं संगमिष्यति ।

† पश्यपश्यायमसमसमरकदर्थितं प्रदेशमवतरति रामचन्द्रः ।

पुनर्विमृश्य स्वगतम् ।

इन्दुरिन्दुरिति किं दुराशया
बिन्दुरेष पयसो विलोक्यते ।
नन्विदं विजयते मृगीदृशः
श्यामकोमलकपोलमाननम् ॥

पुनः । सीतां प्रत्यर्पितार्यं ।

तन्वि त्वद्वदनस्य विभ्रमलवं लावण्यवारांनिधे-
रिन्दुः सुन्दरि दुग्धसिन्धुलहरीबिन्दुः कथं विन्दतु ।
उत्कल्लोलविलोचने क्षणमयं शीतांशुरालम्बता-
मुन्मीलन्नवनीलनीरजवनीखेलन्मरालश्रियम् ॥

सीता । लज्जां नाटयति । विलोक्य सहर्षम् । अहो क-
हमिमो उम्मीलिदो जेव्व * ।

मुउलीकिदारविन्दो माणवईमाणवारणमइन्दो ।
तिहुअणणअणारविन्दो रअणीमुहचन्दणो चन्दो ॥

राम: । सखे सुग्रीव पश्यपश्य ।

इन्दोरस्य त्रियामायुवतिकुचतटीचन्दनस्थासकस्य
व्योमश्रीचामरस्य त्रिपुरहरजटावल्लरीकोरकस्य ।
कन्दर्पक्षोणिपालस्फटिकमणिगृहस्यैतदाखण्डलाशा-
नासामुक्ताफलस्य स्थगयति जगतीं कोऽपि भासां विलासः ॥

सुग्रीवः । अये रघुनाथ पुनरुक्तमिदमाचष्टे । चन्द्रमसः किरणविलासः ।

रामः । कथमिव ।

सुग्रीवः । नन्वत एव ।

कर्पूरादपि कैरवादपि दलत्कुन्दादपि स्वर्णदी-
कल्लोलादपि केतकादपि चलत्कान्तादृगन्तादपि ।
दूरोन्मुक्तकलङ्कशंकरशिरःशीतांशुखण्डादपि
श्वेताभिस्तव कीर्तिभिर्धवलिता सप्तार्णवा मेदिनी ॥

रामः । अलं तुच्छप्रायजल्पितेन ।

विभीषणः । देव तुच्छप्रायमेव जल्पितं सुग्रीवेण यदुक्तं मेदिनीधवलितेति । ननु त्रिलोकीतलमेव धवलितमिति वक्तव्यं संप्रति हि ।

समुन्नतघनस्तनस्तबकचुम्बितुम्बीफल-
क्वणन्मधुरवीणया विबुधलोकवामभ्रुवा ।
त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत्-
तुषारकरकन्दलीकिरणपूरगौरं यशः ॥

रामः । अयि लङ्केश्वर भवानपि किष्किन्धानाथमेतमेवानुगतः । पुनर्विलोक्य सहर्षं सुग्रीवं प्रति ।

संरम्भोद्धिक्तनक्तंसमयदशमुखोच्चण्डदोर्दण्डहेला-
कैलासः सप्रेनाकीजयमुदितमनोजन्मवादित्रशङ्खः ।
लीलाक्षीगण्डपालीलवणिमजलधेरुद्गतः फेनपिण्डः
पश्य व्योमावकाशं विशति विरहिणां दत्तशङ्कः शशाङ्कः ॥

निर्वर्ण्य स्वगतम् ।

अयं नेत्रादत्रेरजनि रजनीवल्लभ इति
भ्रमः कोऽयं प्रज्ञापरिचयपराधीनमनसाम् ।
सुधानामाधारः स खलु रतिबिम्बाधरसुधा-
रसासेकस्निग्धादजनि नयनात् पुष्पधनुषः ॥

लक्ष्मणः । आर्ये जानकि पश्यपश्य ।

आनन्दं कुमुदादीनामिन्दुः कन्दलयन्नयम् ।
लङ्घयत्यम्बराभोगं हनूमानिव सागरम् ॥

सीता । अये सुलक्खण लक्खण सो उण दाणीं कहिं रहुउलकुडुम्बसन्तावसमणचन्दणो पवणणन्दणो * ।

लक्ष्मणः । आर्ये स एष रामचन्द्रेण बन्धुमानन्दितुमयोध्यायां प्रहितः ।

सीता । ता अम्हेहिं किंति विलम्बीअदि † ।

रामः । बिभीषणमुखमालोकते ।

बिभीषणः । निर्गत्य प्रविश्य च । इदं तत् पुष्पकाभिधानं विमानरत्नमारुह्यताम् । सर्वे विमानारोहणं नाटयन्ति ।

रामः । सकौतुकम् । अये तदिदं विमानरत्नं यत् किल त्रिभुवनैकवीरः कुबेरानुजः कुबेरादाजहार ।

लक्ष्मणः । सामर्षम् । कथमयं किष्किन्धामाहिष्मतीपतिभ्यां समभागविभक्तलक्ष्मीकोऽपि त्रिभुवनैकवीर इति व्यपदिश्यते ।

रामः । विहस्य वत्सैवमेतत् ।

तादृक्कठोरभुजयन्त्रनिपीडनेन
निःशब्दतामुपगतैर्दशकण्ठकण्ठैः ।
यत्कीर्तिघोषणमकारि चतुःसमुद्र-
वेलासु किं स वचसां विषयः कपीन्द्रः ॥

अपिच ।

कोपप्रदीप्तनिजलोचनदीपवह्नि-
निर्भिन्नसान्द्रतिमिरे स दशाननोऽपि ।
काराकुटीरकुहरे वसतिस्म यस्य
सोऽप्येष हैहयपतिर्विषयो न वाचाम् ॥

---

* कथमयमुन्मीलित एव ।
मुकुलीकृतारविन्दो मानवतीमानवारणमृगेन्द्रः ।
त्रिभुवननयनारविन्दो रजनीमुखचन्दनश्चन्द्रः ॥

* अये सुलक्षण लक्ष्मण स पुनरिदानीं क्व रघुकुलकुटुम्बसंतापशमनचन्दनः पवननन्दनः ।

† तदस्माभिः किमिति विलम्ब्यते ।

किन्तु परिभावय वत्स ।

यस्य द्राक्करवालकृत्तशिरसः कण्ठालवालस्थलीं
चूडाचन्द्रमसं निपीड्य निबिडं सिञ्चन् सुधानिर्झरैः ।
त्वां मेने दशखण्डमण्डन इति ख्यातिं कृतार्थां हरः
पन्थानं दशकन्धरः स च कथंकारं गिरां गाहते ॥

निर्वर्ण्य । अये किमुच्यतेऽस्य खलु त्रिकूटगिरिशिखरकण्ठीरवस्य दशकण्ठस्य लोकोत्तराणि चरितानि ।

यद्दोःशायिनि चन्द्रशेखरगिरौ भारावतारोत्तम-
न्नागाधीशफणावलीमणिरुचां पूरे समुन्मीलति ।
जातास्तुल्यमकालबालतपनाताम्राश्चतस्रो दिशो
देवस्यापि रुषा तुषारकिरणोत्तंसस्य तिस्रो दृशः ॥

लक्ष्मणः । आर्य ।

एष मे मनसि भासतेऽधुना
मूर्तिमानिव मनोरथो रथः ।
नास्ति नो यदधिरोहलीलया
दूरमागतवतामपि श्रमः ॥

रामः । एवमेतत् । तथाहि

उल्लङ्घ्य नीरधिमतीत्य च दण्डकानि
नद्यौ च मेकलकलिन्दसुते व्यतीत्य ।
प्राप्ताः शिखण्डिशतखण्डितशाखिखण्ड-
मेते वयं शिखरिणं ननु चित्रकूटम् ॥

सीता । तिर्यग्विलोक्य । अहह कलिन्दणन्दिणि सच्चप्पसादासि जं पुणोवि णिअकुडुम्बस्स दिण्णदंसणासि *

रामः । अयि तदिदं निर्मुक्तविरोधश्वापदं भगवतो भारद्वाजस्याश्रमपदम् ।

लक्ष्मणः । एवमेतत् । अत्र हि ।

व्याजृम्भमाणवदनस्य हरेः करेण
कर्षन्ति केसरसटाः कलभाः किलैके ।
अन्ये च केसरिकिशोरकपीतमुक्तं
दुग्धं मृगेन्द्रवनितास्तनजं पिबन्ति ॥

अपिच ।

क्रोडस्माणवकाङ्कितोडनशतैरुज्जागरस्य त्वचां
शार्दूलस्य नखाङ्कुरेषु कुरुते कण्डूविनोदं मृगः ।
चञ्चच्चन्द्रशिखण्डितुण्डघटनानिर्मोकनिर्मोचितः
किञ्चायं पिबति प्रसुप्तनकुलश्वासानिलं पन्नगः ॥

रामः । अये कथमयं संप्राप्त एव चक्रवाकरमणीसंरम्भसमयः प्रभातसमयः । तथाहि ।

* अहह कलिन्दनन्दिनि सत्यप्रसादासि यत् पुनरपि निजकुटुम्बस्य दत्तदर्शनासि ।

एते केतकधूलिधूसररुचः शीतद्युतेरंशवः
प्राप्ताः संप्रति पश्चिमस्य जलधेस्तीरं जराजर्जराः ।
अप्येते विकसत्सरोरुहवनीदृक्पातसंभाविताः
प्राचीरागमुदीरयन्ति तरणेस्तारुण्यभाजः कराः ॥

लक्ष्मणः । सकौतुकम् ।

सद्यः सघटमानकोकमिथुनव्याजेन पीनस्तन-
द्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचो निर्माय दिक्कन्यकाः ।
दुर्दैवाक्षरमालिकामिव झगित्याकृष्य भृङ्गावलीं
लक्ष्मीमम्बुजिनीजनस्य तनुते देवस्त्विषामीश्वरः ॥

सुग्रीवः । बिभीषण पश्यपश्य ।

उन्मीलन्ति निशानिशाचरवधूप्रोच्चाट * नामान्त्रिकाः
सायं सालसमुद्रपङ्कजवनप्रोद्बोधवैतालिकाः ।
फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृङ्गावली-
झाङ्कारप्रणवोपदेशगुरवस्तीव्रद्युतेरंशवः ॥

बिभीषणः । एवमेतत् । तथाहि ।

आयान्त्या द्विवसश्रियः पदतलस्पर्शानुभावादिव
व्योमाशोकतरोर्नवीनकलिकागुच्छः समुज्जृम्भते ।
आतन्वन्नवतंसविभ्रममसावाशाकुरङ्गीदृशा-
मुन्मीलत्तरुणप्रभाकरकरस्तोमैः समुद्भासते ॥

रामः । प्रिये ।

एतत् तर्कय चक्रवाकसुदृशामाश्वासनादायिनः
प्रौढध्वान्तपयोधिमग्नजगतीदत्तावलम्बोत्सवाः ।
दीप्तांशोर्विकसन्ति दिङ्मृगदृशां काश्मीरपङ्कोदकं-
व्यात्युक्षीचतुराः सरोरुहवनश्रीकेलिकाराः कराः ॥

अपवार्य । पश्यपश्य ।

शिथिलयति सरागो यावदर्को नलिन्याः
कमलमुकुलनीवीग्रन्थिमुद्रां करेण ।
प्रविकसदलिमालागुञ्जितैर्मञ्जुशब्दा
जनयति मुदमुच्चैः कामिनां कामिनीव ॥

सीता । विहस्य विलोक्य च । कहं इमो उम्मीलिदो जेव्व ।

पुव्वगिरिपोम्मराओ प्पअडीकिदणअणसीअलसहाओ ।
कुङ्कुमकिअङ्गराओ णलिणीजणवल्लहो देवो † ॥

रामः । प्रकाशम् । अये जानकि पश्य ।

* निर्वासनामान्त्रिका इति वा पाठः ।

† कथमयमुन्मीलित एव ।

पूर्वगिरिपद्मरागः प्रकटीकृतनयनशीतलस्वभावः
कुङ्कुमकृताङ्गरागो नलिनीजनवल्लभो देवः ॥

तरलतरतरङ्गभङ्गलेला-
बहलविलासविलोलहंसमाला ।
अमरपुरतरङ्गिणीयमम्बा
सुरनरमङ्गलकारिणी न दूरे ॥

सीता । सहर्षं तदेव पठति संस्कृतं प्राकृतं च

रामः । सहर्षं वत्स लक्ष्मण । इयमदूरे रघुकुलमङ्गलाङ्कुरप्ररोहकेदारधरणीतरङ्गिणी सरयूः । इयं च सरयूतरङ्गशीकरशीतलीकृतपरिसरा नगरीसीमन्तमणिरयोध्या ।

लक्ष्मणः । सहर्षम् । अयमसौ भरतानुयातस्त्वदभिषेकक्रनमतिर्भगवानरुन्धतीपतिः ।

दिलीपकुलमाणिक्यं सकलाशाविकासकम् ।
आविर्भवन्तं भास्वन्तं भवन्तं संप्रतीक्षते ॥

तेन पुष्पकादवतरामः ।

रामः । वत्स प्रतीक्षस्वेहैव तावत् सुलभसकलमण्डलालोकमाखण्डलाशामण्डनं भगवन्तं चण्डमरीचिं नमस्यामः । अञ्जलिं बद्ध्वा ।

प्राचीकुङ्कुमतिलकं पूर्वाचलरोहणैकमाणिक्यम्* ।
त्रिभुवनगृहैकदीपं वन्दे लोकैकलोचनं देवम् ॥

नेपथ्ये । अये वत्स रामभद्र ।

रामः । अहो अद्भुतम् ।

विकासयन्ती नितरां पद्मानीव मनांसि नः ।
प्रभेव भारती कापि भानुबिम्बाद्विजृम्भते ॥

नेपथ्ये ।

यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्राचन्द्रातप तप सहस्राणि शरदाम् ।
इयं चास्तां युष्मद्गुणकथनपीयूषपटल-
स्थितोत्सङ्गानन्दत्सुरनरभुजङ्गा त्रिजगती ॥

रामः । अनुगृहीतोऽस्मि ।

पुनर्नेपथ्ये । अन्यच्च ते किमाशास्महे ।

सुग्रीवः । अये तात दिनकर परिपूर्णमनोरथ एव रामभद्रः । अनेन हि ।

प्राप्ता निर्भरमुन्नतैर्निजगुणैराज्ञा पितुः पालिता
सुग्रीवश्च बिभीषणश्च परमां राज्यश्रियं प्रापितौ ।
संग्रामे दशकन्धरः सुररिपुर्नीतो यशःशेषतां
दृष्टो बन्धुजनश्च हर्षविगलद्बाष्पोल्लसल्लोचनः ॥

तथापीदमस्तु ।

आबालादुदनाम्बुजे तनुभृतां सारस्वतं जृम्भतां
देवे कौस्तुभधाम्नि चन्द्रमुकुटेऽद्वैता मतिः खेलतु ।
वाग्देव्या सह मुक्तवैशसरसा देवी च दीव्यद्धियं
शेषस्येव फणाञ्चनेषु सततं लक्ष्मीः सतां सद्मसु ॥

रामः । तदागच्छत पुष्पकादवतीर्य गुरुं बन्धुजनं पौरांश्चानन्दयाम इति सर्वे पुष्पकादवतरन्ति ।

जायन्तामविरामरामचरितक्रीडाभिरामाः सता-
मुन्मीलन्नवमालिकाविरचितस्रग्दामरम्या गिरः ।
याः कण्ठेऽपि निवेश्य पेशलधियो रोमाञ्चलीलाञ्चिताः
कान्ताबाहुलताविलासमहिमाश्लेषान् तृणं मन्वते ॥

इति निष्क्रान्ताः सर्वे ।

॥ इति श्रीजयदेवविरचिते प्रसन्नराघवनाम्नि नाटके ॥
॥ सप्तमोऽङ्कः समाप्तः ॥
॥ समाप्तोऽयं ग्रन्थः ॥

---

इन्दुप्रकाशाख्यानेकवार्त्तापत्रमुद्रितशुभसमाचारं दृष्ट्वातिप्रसन्नेन चेतसा दयासागरं सर्वशक्तिमन्तं जगत्स्रष्टारं विश्वेशं धन्यवादपूर्वकं भूयोभूयः प्रणम्य तत्समाचारं स्वीयसर्वसुहृज्जनकर्णातिथिं कुर्मः । तथाहि । अद्यत्वे परमेश्वरो जगद्धिताय एकं भिषग्रत्नं मुम्बय्याख्यपत्तने पश्चिमाशायामपरं भास्करमिव उदाययत् । स च भिषग्वरो भाऊदाजीतिविख्यातनामा इङ्ग्लण्डीयचिकित्साशास्त्रेऽतिप्रवीणोऽपि महोत्साहतया भारतवर्षीयचिकित्साशास्त्रेऽतिपरिश्रम्याभिनवान् नानाविधानौषधपथ्यपरिहारादिप्रकारानकल्पयत् । यथा भगवान् याज्ञवल्क्यः सहस्ररश्मिमुपास्याश्रुतपूर्वं श्रुतिराशिं जगति प्रकाशयामास । तत्र महाघोरस्य वातरक्ताख्यस्य मृत्योरिव महारोगस्य समूलनिवर्तकमेकमौषधं बुद्धिसुधासिन्धुमन्थनादमृतमिव निर्माय देवादीननेकजनान् प्राशयत् । तेन चाद्ययावद्बुशावराः प्राणिनोऽमरकल्पा बभूवुः । तन्मध्ये पाठशालाध्यापकः प्रसिद्धवैयाकरणष्टोंकेकरबालशास्त्री देवः । स चैतन्महारोगग्राहदंष्ट्रापतितो यमदंष्ट्रापातमनिशमिच्छन्नप्यतिबीभत्सगलद्व्रणवक्रशरीरघृणयेव मृत्युनापि दूरादेव त्यक्तः । परन्तु प्रोक्तेन भिषङ्मुकुटमणिना कृपाकटाक्षपातवशात् स्वसमीपमाहूय स्वौषधैरेव पुनर्नवकायः शशीव प्रायः पक्षान्तराल एव रोगभयान्मोचितः । स च वैयाकरणस्तस्य महानुभावस्य सदृशानुकूलं प्रत्युपकारं केवलात् तद्यशोगानाद्भगवतः शुभाशीःप्रार्थनाच्चान्यं न कमपि कर्त्तुं शक्नोमीति पत्रे मुद्रयामास । इदं तु परमद्भुतं, यदीदृशासाध्यकल्पस्य महारोगराक्षसस्योच्छेदायौषधं सुस्वादु सुपानं पथ्यपरिहारौ चात्यल्पतया सुकरौ । कालोऽपि स्वस्थतायै ऋतुद्वयावधिकोऽपेक्ष्यत इति । नूनमस्मै वैद्यराजायाप्रभुत्वामानित्वश्रमसहिष्णुत्वभूतदयादिसद्गुणलक्षणैर्योग्यतमायायुर्वेदरहस्यमादिगुरुणोपदेष्टुमारब्धम् । गुरुविप्रतपस्विद्-

* पूर्वाचलशेखरैकमाणिक्यमित्यपि पाठान्तरम् ।

गतानां प्रतिकुर्वीत भिषक् स्वभेषजैरितिस्वधर्मनिरतस्य तस्य चिकित्सकवरस्य सर्वसमाचारपत्रेषु प्रशंसायोग्यस्य सद्गुणा एव दिगन्तान् प्राप्ता आतुरानाहूय रोगबन्धनान्मोचयिष्यन्ति। अधुनाऽस्माभिरियदेव करणीयत्वेनाध्यवसीयते यदेतदीयेदृक्परोपकारपाटवरूपलिङ्गदर्शनेनानुमितानामप्यन्यसर्वसद्गुणानां सामान्यत एव ज्ञाततया विशेषतः स्तोतुमशक्यत्वेन तस्य सत्पुरुषस्य स्तुतेः प्रति तन्निर्मातुरीश्वरस्यैव पुनःपुनस्स्तुतिस्ततश्चैतत्प्रार्थनं यदसौ देवद्विजप्रसादाद्दीर्घायुर्भूयादितिशम्।

बापूदेवशास्त्री टोंकेकर
राजारामशास्त्री कार्लेकर
बालशास्त्री रानडे
गोविन्ददेवशास्त्री टोंकेकर
शिवरामगोविन्द रानडे

## THE MESSENGER CLOUD:

*(Continued from page 254.)*

LXVIII.

Now close beneath thee thou wilt see my home,
Where, flashing forth, the jewelled archway's glow,
North of my lord Kubera's royal dome,
With hues of glory mocks the heavenly bow.
There my love's flowers in dazzling beauty blow:
There in the midst the tall Mandara see
Bending the burden of her branches low
To touch her lady's hand: no child might be
Nurtured with tenderer care than that her darling tree.

LXIX.

There girt with emerald steps a bright lake gleams,
Where the gold lotus fires the lily's white:
The swans that sail upon its silver streams
Shall hail thy coming with renewed delight,
And love the cool waves better for the sight
That bids them linger near the pleasant shore,
Without a wish to seek in distant flight
The mountain lake that seemed so dear before,
That lovely mountain lake now scarce remembered more.

LXX

Deckt with smooth sapphires, rising from the fount,
A spot beloved by my young bride of old,
Sacred to rest and pleasure, stands a mount,
Which a thick plantain grove belts round with gold.
E'en now, dark cloud, as these sad eyes behold
Thy sombre mass girt by thy lightning's sheen,
They see the spot of which my tongue has told:
Back to my soul comes fresh that glorious scene,
The plantains' circling gold, the hillock's velvet green.

LXXI

Sweet clustering trailers, and each fairest flower
That charms the sense or captivates the eye,
Give grace and odour to my lady's bower.
The bright Asoka and the Kesar vie
For her caresses as my love walks by;
That asks the pressure of her foot, and this,
Wild for the joy for which I vainly sigh,
With me aspiring seeks a higher bliss,
To touch those perfect lips with a long amorous kiss

LXXII

See, on a pedestal of crystal placed,
A golden column, very tall and fair,
With richest gems, like budding cane-shoots, graced,
Towers o'er the waving trees; and gleaming there,
The blue-necked peacock drinks the evening air,
And when my darling wanders forth alone,
He tries each art to drive away her care,
Dispreads his plumes and dances to the tone
Of the melodious chime made by her tinkling zone.

LXXIII

Led by these tokens thou wilt surely know
The once bright dwelling of my love and me,
When our glad lives were strangers yet to woe
But altered now that happy spot may be,
Since the stern vengeance of my lord's decree
Has torn me far from all I loved away
The lotus glories in the sun, but he
Leaves his sad mistress at the close of day
To mourn with folded blooms the light that made her gay.

LXXIV

Gently descending, on that hillock fall,
Not in full glory lest that form of thine
In all its splendour, all its might, appal
My timid lady. Let thy lightning shine
Like sportive fire-flies in a flashing line,
And to thy friendly eyes my darling show.
She stands within her chamber, most divine
Of all the works of God, with rosy glow
Of lips, with teeth of pearl, eyes of the startled roe.

LXXV

O, see her silent there, my second life,
Like a poor love-bird mourning for her mate,
My lonely, weeping, miserable wife,
Weeping at early morn, at evening late,
With bitter tears her banisht husband's fate.
Where hast thou seen a nymph so soft of mould,
So tender, loving, and disconsolate?
Sure the sad lady's spirit dwelt of old
In some frail lotus flower that shrank from rain and cold.

LXXVI

See, on her hand her faded cheek reclines,
Long hanging tresses veil her drooping head;
Swollen with tears her eye no longer shines,
And the bright colour of her lip is fled,
For dewy sighs have washed away the red.
Like the cold moon is she, sad, feeble, pale,
When o'er its face thy pall, dark cloud, is spread,
And all the silver beams, imprisoned, fail
To penetrate the shroud, to pierce the sombre veil.

LXXVII

Now as the sight of thee renews her woe,
She turns to sacrifice: from her wild eyes,

That picture forth my form, new torrents flow,
To see my mournful wasted image rise.
Then to her favourite bird she sadly cries·
'Dost thou remember, pet, when thou wast free ?
And is the mate, with whom, from summer skies
Down sailing, in the well-known roosting tree
'Twas once thy lot to rest, still dearly loved by thee ?'

LXXVIII

Or she will touch her lute with careless grace,
And with her low-soft voice prepare to sing
Some little ballad of mine ancient race :
But soon the tears that flow from memory's spring
Mar the sweet music of the silver string
Her thoughts will wander from the cherisht lay,
The notes of triumph will no longer ring,
And her melodious voice will die away
In some wild wailing strain meet for the evil day.

LXXIX

Then bravely struggling with her dark despair,
She turns away, and fondly numbers o'er
The faded garlands which her pious care
Twines every month that comes, above the door,
Counts to the happy day that will restore
Her husband , and the thought, so passing sweet,
Brings light and rapture to her eye once more :
Her bosom swells, her pulses wildly beat,
And fancy hears the step of my returning feet.

LXXX

These cares by day assuage the mourner's grief,
But, Oh ! the night brings only woe and pain :
Be this the season for my love's relief ;
Till then, dear Cloud, thy soothing voice restrain,
And give thine aid when other help is vain.
When all is dark and still float softly near,
And ready access by her lattice gain,
Breathe thy sweet message in her sleepless ear,
And in the weary night my widowed darling cheer.

LXXXI

Then on her lonely couch, thin, anguish-worn,
Watching and weeping still she sadly lies,
Pale as the waning moon that flies the morn
When first the sunbeams fire the eastern skies.
She slowly counts 'mid tears and deep-drawn sighs
The long long weary hours that used to be
Like moments, praying that the sun may rise
To chase the lingering night that wont to flee
Like a quick flash of joy when it was passed with me.

LXXXII

But should my love her weary eyelids close,
Lulled by sweet thoughts and many a hopeful sign,
Let not thy thunder break her soft repose,
Nor sudden bid her wreathing arms untwine
Lest in her dreams they should be clasping mine :
Still let such dreams her aching bosom bless :
Then, when the sunbeams on her lattice shine,
With thy deep-sounding words the dame address,
And thus my longing love and tender hope express·

LXXXIV.

' O lonely mourner, from thy lord I speed
And to his distant home fond greetings bear.
'Tis mine the exile's weary steps to lead
In safety back to soothe his bride's despair :
'Tis mine, with thunder rolling through the air,
To wake the sigh for all he left behind,
The well-loved cot and wife still weeping there,
And urge his trembling fingers to unbind
The mourner's braid of hair for his long absence twined.

LXXXV.

Thy faithful lord on Rama s wood-crowned hill
Mourns the sad lot that severs him from thee ;
And in fond fancy he is with thee still
Though far away by hostile fate's decree.—
Wasted with woe, he seems thy form to see
Worn, like his own, with tears that ever roll
From orbs that with his weeping eyes agree .
He feels the longing of thy kindred soul,
And counts thy sighs in those his breast can ne'er control

LXXXVI.

He bids me now his loving message speak,
For far is he from all he holds most dear,
But O, what joy, might he but touch thy cheek
And softly whisper thus into thine ear :
' O pearless creature in my prison here
Signs of thy beauty meet me every hour :
I see the graces of thy form appear
Faintly reflected in each fairest flower
That twines her tender shoots around my lonely bower

LXXXII.

When from my path the startled roedeer run,
Their eyes, sweet love, thy gentle glance recall :
The peacock's glories, gleaming in the sun,
Show like thy tresses glittering as they fall :
I see thine arching eyebrow in the small
Ripple upon the brook: the moon, ah me !
Brings back thy pure pale cheek : in these, in all
The fairest sights that nature boasts, I see
Faint emblems of the charms that meet in none but thee.

LXXXVIII.

Oft my love-guided hand essays to paint
Thy portrait on the rock with mineral dyes ;
And soon as fancy fondly sees a faint
Resemblance of thy well-loved face arise,
I fall upon the ground with eager cries
Of transport :.but e'en here an envious veil
Fate interposes, and the vision flies ;
Gone is the form I wildly thought to hail,
And dim with blinding tears my loving glances fail.

LXXXIX.

The spirits of the grove, believe me, weep
As I lie tossing on my lonely bed ;
Their pearly tears steal gently down, and steep
The green leaves that o'ercanopy my head,
As, in a dream of thee, they watch me spread

